श्रीमद्धनुमद्भीमसध्वांतर्गतरामकृष्णवेदव्यासात्मकलक्ष्मीहयग्रीवायनमः ॥ सृष्टिस्थित्यप्ययेहानियतिदृ
शितमोबंधमोक्षाश्चयस्मादस्यश्रीब्रह्मरुद्रप्रभृतिसुरनरद्धवीशशत्त्वात्मकस्य ॥ विष्णोर्व्यस्ताःसमस्ताःसकल
गुणनिधिःसर्वदोषव्यपेतःपूर्णानंदोव्ययोयोगुरुरपिपरमश्चिंतयेतंमहांतं ॥ जन्माद्यस्येत्यादि । तंपरंधीम
हि ।अन्वयात्। यतोवाइमानिभूतानिजायंतइत्यादिश्रुतिस्मृतिभ्यः। इतरतःतर्कतः। चेतनाद्धिपित्रादेः
पुत्रादिरुत्पद्यते । अर्थेषु सर्वपदार्थेषु । अभिज्ञःसर्वज्ञः । अतोयुज्यते । यंकामयेतंतमुग्रंकृणोमि । मम
योनिरित्यन्येषांतदपेक्षत्वात् । न चान्यापेक्षोसौ । स्वराट् । कुतः । तेनेब्रह्महृदायआदिकवये । सहिवि
श्वाजातानिपरिताबभूव । नान्यः । हृदास्नेहेन । योब्रह्माणंविदधातिपूर्वमितिच । स्वात्मतएवहितस्यबु
द्धिप्रकाशः । नचप्रसादंविनाज्ञातुंशक्यः । मुह्यंतियंसूरयः । नचतृप्तःप्रवर्तते । किंतुमृषा । वृथैव । भि
त्वामृषाश्रुरितिवत्। देवस्यैषस्वभावोयमिति। यत्रेतिविशेषणान्नान्यत्र। स्वविषयएववृथा । जीवेश्वरजडा-
नांसर्गस्त्रिसर्गः। एकस्यतेजसोबहुत्ववदीश्वरसर्गः । वारिनिमित्तप्रतिबिंबवज्जीवसर्गः। मृदोघटादिवदव्य
क्ताज्जडसर्गः । नचमायामयीसृष्टिः । धाम्नास्वेनसदानिरस्तकुहकं । तद्धाम्नाश्रियोनिरस्तकुहकत्वंमुक्ता

नांच । नचमुक्तवत्पूर्वबंधभाक्त्वं । सदानिरस्तकुहकत्वात् । सत्यंनिर्दुःखनित्यनिरतिशयानंदानुभवरू
पं । परंसंपूर्णगुणं । परत्वसाधकंजन्मादीत्यादि । तंत्रभागवतेच । सृष्टिस्थित्यप्ययेहादेःश्रुतिस्मृतिसम
न्वयात् । युक्तितश्चेतृपूर्वादेःश्रीब्रह्मभवपूर्विणः । सुरगंधर्वमनुजपितृदैत्यात्मनःपृथक् । कर्ताविष्णुरजो
नित्यःसर्वज्ञत्वान्नचापरः । अनन्याधिपतिश्चासौगरीयान्ब्रह्मणोयतः । तत्प्रसादमृतेतस्यनान्योवेत्तास्तिक
श्चन । तेजसोरूपवद्रूपंबहुधाकुरुतेहरिः । वारिस्थतेजःप्रतिमाजीवास्तस्माद्विनिर्गताः । कुलालेनमृदा
यद्वन्निर्मीयंतेघटादयः । विष्णुनैवंप्रकृत्यैवनिर्म्यतेजगदीदृशं । एषत्रिसर्गोविष्णोस्तुवृथालोकस्यचावृथा॥
इंद्रजालविधांसृष्टिंमन्यंतेज्ञानदुर्बलाः । नित्यंनिरस्तेंद्रजालेस्वतएवकथंभवेत् । अक्षमाःसत्यसृष्टौहिमायासृ
ष्टिंवितन्वते । अनंताचिंत्यविभवःकथंतामीहतेहरिः । निर्दुःखपूर्णानंदत्वाद्यमाहुःसत्यमच्युतं । निर्दोषगु
णपूर्णत्वात्परंचाहुर्जनार्दनं । एवंविधानुभावोयःसकथंनिंदितंसृजेत् । स्वप्नादिकंपरोदेवःप्राणादिस्थस्तनो
त्यसौ । केवलस्यपरस्यास्यमायासृष्टिर्नयुज्यते । तस्माद्बाधायुताःसर्वेस्वप्नाद्यायेत्वकेवलाः । इदंनबाध्यते ॥७८॥
सर्वंजगत्केवलजंयतः । मोक्षवत्केवलस्यास्यशक्त्यासम्यग्विजृंभितं । एतद्रहस्यंपरमंब्रह्मसूत्रपदोदितं । ये

त्वेवंनविजानंतितेहियांत्यधरंतमः । येत्वेतदभ्यसूयंतोनानुतिष्ठंतिमेमतं । सर्वज्ञानविमूढांस्तान्विद्धिनष्टा नचेतसः । येत्वेतदनुतिष्ठंतिपारंपर्यागतंमम । तेयांतिपरमंस्थानंमयैवोदितमंजसेत्यादि । वैधर्म्याच्चनस्व प्नादिवदितिच । अघान्वस्यमहतोमहानिसत्यासत्यस्यकरणानिवोचमित्यादि । ब्रह्मसूत्रमहाभारतगायत्री वेदसंबंधश्चायंग्रंथः । उक्तंचगारुडे । अर्थोयंब्रह्मसूत्राणांभारतार्थविनिर्णयः । गायत्रीभाष्यरूपोसौवेदा र्थपरिबृंहितः । पुराणानांसाररूपःसाक्षाद्भगवतोदितः । द्वादशस्कंधसंयुक्तःशतविच्छेदसंयुतः । ग्रंथो ष्टादशसाहस्रःश्रीमद्भागवताभिधइति ॥१॥ अधिकारिविषयफलान्युच्यंते । धर्मइति । प्रोज्झितकैतवःफ लानपेक्षया । ईश्वरार्पणेनपरमः । तितिक्षवःकारुणिकाःसुहृदःसर्वदेहिनां । अजातशत्रवःशांताःसाधवः साधुभूषणाः । मय्यनन्येनभावेनभक्तिंकुर्वंतियेदृढामित्यादिसतांलक्षणं । सतांचमात्सर्यमर्जुनस्यैकलव्य इवकुत्रचिद्दृश्यते । तद्वर्जनीयमुत्तमेषुज्ञानार्थिना । महासंहितायांच । उत्तमेष्वात्मनोनित्यंमात्सर्यंपरि वर्जयेत् । कुरुतेयत्रमात्सर्यंतत्तत्स्यविहीयतइति । नित्यनिरस्तदोषपूर्णगुणंवास्तवं । नित्यसंहितायांच। निरस्ताखिलदोषंयदानन्दादिमहागुणं । सर्वदापरमंब्रह्मतस्माद्वास्तवमीर्यतइति । वस्तुअप्रतिहतंनित्यं ।

स्कांदेच । वसनाद्वासनाद्वस्तुनित्याप्रतिहतंयतः । वासेनेदंयतस्तुन्नमतस्तद्ब्रह्मशब्द्यतइति । किंवापरैः अर्थकामादिकथनैः । गारुडेच । धर्मार्थकाममोक्षाणामेकमेवपदंयतः । अवरोधोहृदीशस्यपृथग्वक्ष्येनतानहमिति । सद्यःशब्दआपेक्षिकइतितत्क्षणादिति । नचासंपूर्णाधिकारिणांतत्क्षणादवरुध्यतइतिसद्यःशब्दः । अधिकारिविषयफलानांस्मरणात्फलाधिक्यंभवति । वामनेच । अधिकारंफलंचैवप्रतिपाद्यंचवस्तुयत् । स्मृत्वाप्रारभतोग्रंथंकरोतीशोमहत्फलमिति ॥ २ ॥ ज्ञातफलस्यापिप्रशंसाविधिभ्यांक्षिप्रप्रवृत्तिर्भवतीतिप्रशस्यविधत्ते । निगमकल्पतरोरिति । भगवतागलितं । शुकेनद्रवीकृतं । उक्तंच ब्रह्मांडे । धर्मपुष्पस्त्वर्थपत्रःकामपल्लवसंयुतः । महामोक्षफलोवृक्षोवेदोयंसमुदीरितः । शातितानिफलानीहकृष्णद्वैपायनेनतु । भारतादीनियानीहतथाभागवतंभुवि । आर्द्रीकृतानितानीहशुकप्रभृतिभिर्जनैः । ख्यापयद्भिर्गुरुप्रोक्तान्वेदार्थान्ग्रंथनिष्ठितान् । कानिचिद्दर्शयामासवृक्षस्याग्रेफलानितु । व्याचक्षमाणोवेदार्थंभगवाँल्लोकपूजितः । एतेषामथतेषांवारसंपिबतसज्जनाः । आमोक्षान्महतीप्रीतिरहोमेपश्यतोभवेदिति ॥३॥ प्रकारांतरेणपुरुषार्थशंकानिवृत्त्यर्थमाख्यायिका । पाद्मेच । आख्यायिकाःप्रदर्श्यंतेसर्ववेदेषुसर्वशः ।

द्योतयंत्यस्तुमहतांतात्पर्यंतत्रतत्रह । अलाभःपुरुषार्थस्यप्रोक्तमर्थंमृतेत्विति । द्योतनायमहाराजश्रद्धावृध्द्यर्थमेवचेति ॥ यानिभगवज्ज्ञातान्यन्यैरप्यृषिभिर्ज्ञायंतेतानिवेत्थ । उक्तंहिब्रह्मांडे । द्वैपायनेनयद्बुद्धंब्रह्माद्यैस्तन्नबुध्यते । सर्वंबुद्धंसवैवेदतद्बुद्धंनान्यगोचरमिति ॥४॥ विवशःबह्वभ्यासात् । उक्तंचब्रह्मवैवर्ते । शारीराद्वाचिकाभ्यासोवाचिकान्मानसोभवेत् । मानसाद्विवशान्मुच्येन्नान्यथामुक्तिरिष्यतइति ॥१४॥ आत्ममाययास्वरूपभूतेच्छया ।महामायेत्यविद्येतिनियतिर्मोहिनीतिच।प्रकृतिर्वासनेत्येवतवेच्छानंतकथ्यतइतिस्कांदे।विष्णुसंहितायांच।इच्छाशक्तिर्ज्ञानशक्तिःक्रियाशक्तिरितित्रिधा । शक्तिशक्तिमतोश्चापिनभेदःकश्चनेष्यतइति ॥१८॥ इतिश्रीमदानंदतीर्थभगवत्पादाचार्यवि०श्रीम०तात्पर्यनिर्णयेप्रथमस्कंधेप्रथमोऽध्यायः१

अनुपेतंदेहादिभिः । अनभिमानात् । अकातरःकातरवददर्शयत् । उक्तंचस्कांदे । नित्यतृप्तःपरानंदोयोव्ययःपरमेश्वरः । यस्यपुत्रफलंनैवयज्जातंजगदीदृशं । यदधीनश्रियोपांगाद्ब्रह्मरुद्रादिसंस्थितिः । सपुत्रार्थंतपस्तेपेव्यासोरुद्रस्यचेश्वरः । कातर्यंदर्शयामासवियोगेलौकिकंहरिः । कुतःकातरतातस्यनित्यानंदमहोदधेरिति । ईशन्नपिहिलोकस्यसर्वस्यजगतोहरिः । कर्माणिकुरुतेविष्णुःकीनाशइवदुर्बलइतिचोद्योगे । देवत्वे

देववच्चेष्टामानुषत्वेचमानुषीतिविष्णुधर्मे । सर्वभूतहृदयं । अहंकारात्मकत्वात् । अहंकारात्मकोरुद्रःशुकोद्वै
पायनात्मजइतिस्कांदे ॥२॥ स्वानुभावंब्रह्म ॥३॥ अद्वयंअसमाधिकं । तथाचभाल्लवेयश्रुतिः । सपुरुषःसो
द्वयइतिनह्येनमभिकश्चननह्येनमतिकश्चनेति । सोद्वयःपुरुषस्तस्मान्नसमोनाधिकोह्यतइतिमहासंहितायां ।
तत्त्वशब्दार्थस्तत्रैवोक्तः । अतीतानागतेकालेयत्ताद्दशमुदीर्यते । कुतश्चिदन्यथानेयात्तत्तत्त्वंतत्त्वतोविदुरि
ति ॥११॥ सत्तामात्रमानंदमात्रं । तथाचपैंगिश्रुतिः । अथकस्मादुच्यतेसत्तेतिनंदतिनंदयतिचेतीति । न
कार्यकारणविषयविशेषितवैषयिकज्ञानं । केवलमेवतज्ज्ञानं । स्रष्टृत्वादिभिःकार्यकारणविशेषितंच । तंत्र
भागवतेच । विषयापेक्षिनज्ञानंविषयैश्चविशेषितं । यत्तदानंदमात्रंचतद्ब्रह्मेत्यवधार्यतामिति । यत्किंचिद
लोकसिद्धं ॥१२॥ यस्मात्परमात्मैवतत्त्वं । तस्मात्तमेवपश्यंतिमुनयः ॥१३॥ आत्मनीश्वरइतिनजीवैक्यमुच्य
ते । परेषामपिब्रह्मादीनांयतोऽवरत्वंसपरावरः । भेददृष्ट्याभिमानेनेतिहिकापिलेये । ब्रह्मप्रधानमुपयांत्यग
ताभिमानाइतिच । विद्यात्मनिभिदाबोधः । यत्रहिद्वैतमिवभवति । अन्यमीशमस्यमहिमानमिति । अन
श्नन्न्योअभिचाकशीति । छायातपौब्रह्मविदोवदंति । एकोबहूनांयोविदधातिकामान् । सत्यःसोअस्यम

हिमा । सत्यमेनमनुविश्वेमदंति । यत्रपूर्वेसाध्याःसंतिदेवाः । शृण्वेवीरउग्रमुग्रंदमायन्नित्यादिच । मनस्य
हिपरेऽज्ञानेकिंनदुःखतरंभवेत् । बहवःपुरुषाब्रह्मन्नुताहोएकएवतु । नैतदिच्छंतिपुरुषमेकंकुरुकुलोद्वहेति
मोक्षधर्मे । भेददृष्ट्याभिमानेनपश्यंतोयांतितत्पदमितिवायुप्रोक्ते । अनुपपत्तेस्तुनशारीरः । भेदव्यपदेशाच्च ।
शारीरश्चोभयेपिहिभेदेनैनमधीयते । पृथगुपदेशादित्यादिच । सत्यत्वंचभेदस्योक्तंभाल्लवेयश्रुतौ । स्थाणु
र्होच्चक्रामसप्रजापतिमुवाचकोसिकेस्मःकःसइतिसहोवाच । योस्मियेस्थयःसइति । अथहैनमुपाक्रोशत् ।
सत्यंभिदासत्यंभिदासत्यंभिदा मैवारुवण्योमैवारुवण्योमैवारुण्यइतीति । सत्यमेनं । सत्यःसोअस्यमहिमे
तिचोक्तं । महासंहितायांच । त्रिविधंजीवसंघंचपरमात्मानमव्ययं । तेषांभेदंचयेसत्यंविदुर्मोहविवर्जिताः ।
तेयांतिपरमंस्थानंविष्णोरेवाचलंध्रुवं । जीवेश्वरभिदांभ्रांतिंकेचिदाहुरपंडिताः । अनारतंतमोयांतिपरमा
त्मविनिंदनात् । पराधीनश्चबद्धश्चस्वल्पज्ञानसुखेहितः । अल्पशक्तिःसदोषश्चजीवात्मानीदृशःपरः । वद
तातुतयोरैक्यंकितेनादुष्कृतंकृतं । अंतर्याम्यैक्यवाचीनिवचनानीहयानितु । तानिदृष्ट्वाभ्रमंतीहदुराशा
नोल्पचेतसः । अस्थस्मित्वमहंस्वात्मेत्यभिधागोचरोयतः । सर्वांतरत्वात्पुरुषस्त्वंतर्यामीनियामयन् । अतो

भ्रमंतिवचनैरासुरामोहतत्परैः । तन्मोहनेपराप्रीतिर्दैवानांपरमस्यच । अतोमहांधकारेषुपतंत्यज्ञानमोहि
ताइत्यादि ॥२२॥ विष्णोरेव[२४]त्रिसंज्ञाः । वामनेच । ब्रह्मविष्ण्वीशरूपाणित्रीणिविष्णोर्महात्मनः । ब्रह्मणिब्रह्म
रूपोसौशिवरूपीशिवेस्थितः । पृथगेवस्थितोदेवोविष्णुरूपीजनार्दनइति । त्रयोपिगुणाविष्ण्वाश्रयाः ।
तथापिसत्वतनौजीवेश्रेयांसिस्युः ॥२४॥ मेघरूपत्वाद्धूमउत्तमः ॥२५॥ सा[२७]त्विकानांवासुदेवेभक्तिरुत्पद्यते
॥२७॥ भूतेशप्रजेशादीन् ॥२८॥ आत्ममाययास्वेच्छया । सदसद्रूपयाप्रकृत्याच ॥३१॥ तयासदसद्रूपया ।
विज्ञानेनविजृंभितः । विज्ञानसंपूर्णः ॥३२॥ त[३४]द्गुणानेवभुंक्तेनदोषान् । सर्वत्रसारभुग्देवोनासारंसकदाच
नेतिवामनपुराणे । अनश्नन्नित्यशुभापेक्षयापरवशत्वापेक्षयाकृत्स्न्यपेक्षयाच । अकृत्स्न्याचस्वतंत्रत्वादशुभ
स्यचवर्जनात् । अभोक्ताशुभभोक्तृत्वाद्भोक्तेत्येवचतंविदुः । अन्यूनानधिकत्वाच्चपूर्णस्वानंदभोजनात् ।
विरागाच्चपरस्यास्यभोक्तृत्वप्रतिषेधनमितिस्कांदे ॥ ३४ ॥ इतिप्रथमस्कंधतात्पर्येद्वितीयोऽध्यायः ॥ २ ॥ ॥७९१॥
व्यक्त्यपेक्षयाजगृहइति । तथाहितंत्रभागवते । अहेयमनुपादेयंयद्रूपंनित्यमव्ययं । सएवापेक्ष्यरूपाणांव्य
क्तिमेवजनार्दनः । अगृह्णाद्व्यसृजच्चेतिकृष्णरामादिकांतनुं । पठ्यतेभगवानीशोमूढबुद्धिव्यपेक्षया । तमसाद्यु

पगूढस्ययत्तमःपानमीशितुः । एतत्पुरुषरूपस्यग्रहणंसमुदीर्यते । कृष्णरामादिरूपाणांलोकव्यक्तिव्यपेक्षये
ति । महदादिभिःसंभूतं । अंतर्गतमहदादि । नमहदादिशरीरं । यस्मिन्नेताःषोडशकलाःप्रभवंतीतिश्रु
तिः । यत्किंचिदिहलोकेवैदेहबद्धंविशांपते । सर्वंपंचभिराविष्टंभूतैरीश्वरबुद्धिजैः । ईश्वरोहिमहद्भूतंप्रभुर्ना
रायणोविराट् । भूतांतरात्माविज्ञेयःसगुणोनिर्गुणोपिच । भूतप्रलयमव्यक्तंशुश्रूषुर्नृपसत्तमेतिमोक्षधर्मे ।
नासीदहोनरात्रिरासीन्नसदासीत्तन्महद्वपुस्तदाभवद्विश्वरूपंसाविश्वरूपस्यरजनीतिभाल्लवेयश्रुतिः । नत
स्यप्राकृतामूर्तिर्मांसमेदोस्थिसंभवा । नयोगित्वादीश्वरत्वात्सत्यरूपोच्युतोविभुरितिवाराहे । सर्वेनित्याः
शाश्वताश्चदेहास्तस्यपरात्मनः । हानोपादानरहितानैवप्रकृतिजाःक्वचित् । परमानंदसंदोहाज्ञानमात्राश्च
सर्वशः । सर्वेसर्वगुणैःपूर्णाःसर्वेभेदविवर्जिताः । अन्यूनानधिकाश्चैवगुणैःसर्वैश्चसर्वतः । देहिदेहभिदाचै
वनेश्वरेविद्यतेक्वचित् । तत्स्वीकारादिशब्दस्तुहस्तस्वीकारवत्स्मृतः । वैलक्षण्यान्नवातत्रज्ञानमात्रार्थमीरितं ।
केवलैश्वर्यसंयोगादीश्वरःप्रकृतेःपरः । जातोगतस्त्विदंरूपंतदित्यादिविवक्ष्यतेइतिमहावाराहे । एकमेवा
द्वितीयं । नेहनानास्तिकिंचन । एवंधर्मान्पृथक्पश्यन्नित्यादिच । तस्यैवास्थूलत्वाद्यैश्वर्ययोगात् । तथाचकौ

मे । अस्थूलश्चानणुश्चैवस्थूलोणुश्चैवसर्वतः । अवर्णःसर्वतःप्रोक्तःश्यामोरक्तांतलोचनः । ऐश्वर्ययोगाद्भग
वान्विरुद्धार्थोभिधीयते । तथापिदोषाःपरमेनैवाहार्याःकथंचन । गुणाविरुद्धाअपितुसमाहार्याश्चसर्वतइ
ति । विष्णुधर्मोत्तरेच । गुणाःसर्वेपियुज्यंतेह्यैश्वर्यात्पुरुषोत्तमे । दोषाःकथंचिन्नैवात्रयुज्यंतेपरमोहिसः ।
गुणदोषौमाययैवकेचिदाहुरपंडिताः । नतत्रमायामायावीतदीयौतौकुतोह्यतः । तस्मान्नमाययासर्वंसर्वमै
श्वर्यसंभवं । अमायोहीश्वरोयस्मात्तस्मात्तंपरमंविदुरिति ॥१॥ यैस्यावयवसंस्थानैः । नाभ्याआसीदंतरि
क्षमित्यादि । सत्वंसाधुगुणं । ज्ञानबलरूपंवा । बलज्ञानसमाहारःसत्वमित्यभिधीयतइतिमात्स्ये ॥३॥ नि
धानं । अत्रैकीभवंत्यंततइति । अंशांशेनसामर्थ्यैकदेशेन । ब्राह्मेच । यच्छक्त्यैकांशसंभूतंजगदेतच्चराचर
मिति ॥५॥ कुमारोनामभगवान्स्वयंस्वस्मादजायत । दिदेशब्रह्मणेब्रह्मब्रह्मचर्येस्थितोविभुः । यस्मात्सनत्कु
मारश्चब्रह्मचर्यमपालयत् । यःस्थाणोःस्थाणुतांप्रादाद्भगवानव्ययोहरिरितिब्राह्मे ॥६॥ अवतारस्तृतीयोस्य
देवर्षिःप्रथितोदिवि । महिदासस्त्वैतरेयोयस्तंत्रंनारदेऽवददितिच ॥८॥ धर्मकलासर्गःधर्मेस्वांशावतारः ।
लोकदृष्ट्यात्मशमोपेतं ॥९॥ तंत्रंसांख्यंवेदानुसारि । पाद्मेच । कपिलोवासुदेवाख्यस्तंत्रंसांख्यंजगादह ।

ब्रह्मादिभ्यश्चदेवेभ्योभृग्वादिभ्यस्तथैवच । तथैवासुरयेसर्वेवेदार्थैरुपबृंहितं । सर्ववेदविरुद्धंचकपिलोन्योज गादह । सांख्यमासुरयेन्यस्मैकुतर्कपरिबृंहितमिति ॥१०॥ आन्वीक्षिकींतत्त्वविद्यां । आन्वीक्षिकीकुतर्का ख्यातथैवान्वीक्षिकीपरेतिमात्स्ये ॥११॥ [१४]पृथुशरीराविष्टंरूपं । आविवेशपृथुंदेवःशंखीचक्रीचतुर्भुजइति पाद्मे । उशइच्छायां । सत्यकामः ॥१४॥ [२१]रामात्पूर्वमप्यस्तिव्यासावतारः । तृतीयंयुगमारभ्यव्यासोबहु षुजज्ञिवानितिकौर्मे ॥२१॥ [२३]आवेशोबलभद्रे । शंखचक्रभृदीशेशःश्वेतवर्णोमहाभुजः । आविष्टःश्वेतकेशा त्माशेषांशंरोहिणीसुतमितिमहावाराहे ॥२३॥ मोहनार्थंदानवानांबालरूपंपथिस्थितं । पुत्रंतंकल्पयामा समूढबुद्धिर्जिनःस्वयं । ततःसंमोहयामासजिनाद्यानसुरांशकान् । भगवान्वाग्भिरुग्राभिरहिंसावाचिभि र्हरिरितिब्रह्मांडे ॥ २४ ॥ [२६]विदासिनःउन्नतात्भिन्नाद्दा । त्रिविधाःपुरुषालोकेनीचमध्यविदासिनइति ब्राह्मे । चतुर्धावर्णरूपेणजगदेतद्विदासितमितिच ॥२६॥ [२८]एतेप्रोक्ताअवताराः । मूलरूपीकृष्णःस्वयमेव । जीवास्तत्प्रतिबिंबांशावराहाद्याःस्वयंहरिः । दृश्यतेबहुधाविष्णुरैश्वर्यादेकएवत्वितिब्रह्मवैवर्ते ॥२८॥ [३०]एतं जडरूपं । नारायणवराहाद्याःपरमंरूपमीशितुः । जैवंतुप्रतिबिंबाख्यंजडमारोपितंहरेः । एवंहित्रिविधं

तस्यरूपंविष्णोर्महात्मनइतिपाद्मे ॥३०॥ दृश्यत्वंजडरूपत्वं । अविज्ञायपरंदेहमानंदात्मानमव्ययं । आरोपयंतिजनिमत्पंचभूतात्मकंजडमितिस्कांदे ॥३१॥ अतःपरंजडेश्वरयोःपरं । अव्यूढगुणबृंहितं । अनादिकालेकदाचिदप्यनपगतसत्वादिगुणबृंहितं । अदृष्टाश्रुतवस्तुत्वात्पुनर्भवः ॥३२॥ अविद्ययाजीवेकृतेपरमेश्वरेप्रतिषिद्धेइतिब्रह्मदर्शनं ॥३३॥ विशारदःपरमेश्वरः। तन्मतिर्माया । यदानैनंशोचयामीत्युपरतातदासंपन्नएव ॥३४॥ अप्रयत्नात्स्वतंत्रत्वात्फलानांचविवर्जनात् । क्रियायाश्चस्वरूपत्वादकर्तेतिचतंविदुः । कर्तृत्वंभ्रांतिजंप्राहुरतस्तत्त्वविदोजनाः। ऐश्वर्यंजंतुकर्तृत्वंसम्यक्तत्त्ववेदिनइतिपाद्मे ॥३५॥ [४०]धर्मःकंशरणंगतइत्यस्यतमेवव्यासरूपिणमितिपरिहारउच्यतेइदंभागवतमित्यादिना ॥४०॥ इतिप्रथमे तृतीयोऽध्यायः॥३॥ [४]निर्विकल्पकः । मदीयंतदीयमितिभेदमपहायसर्वमीश्वराधीनमितिविज्ञायस्थितः । साम्यमीश्वररूपेषुसर्वत्रतदधीनतां । पश्यतिज्ञानसंपत्त्याविनिद्रोयःसयोगविदितिब्राह्मे ॥४॥ [१३]तृतीयेद्वापरेयुगेपर्यवसानंप्राप्तेसति॥१३॥[१४-१७]नित्यंज्ञानस्यचिद्दृष्टिर्लोकेदृष्टिव्यपेक्षया।सर्वज्ञोप्यज्ञवद्देवःसर्वशक्तिरशक्तवत् । प्रत्यापयतिलोकानामज्ञानंमोहनायचेतिकौर्मे॥१४-१७॥[२४]आरतंब्राह्मणादीनांवेदार्थपरिवित्तये। तएववेदास्त्वन्येषांनतेंतत्कस्यचि

त्सुखमितिस्कांदे ॥२४॥ अतोषोऽनलंबुद्धिः । श्रुत्वाकथानतुष्यामिहरेरद्भुतकर्मणइतिमात्स्ये ॥२५॥ अ
प्रसादश्चसएव । कःप्रसन्नोभवेद्दिव्यांकथांशृण्वन्हरेःपरामितिच ॥२६॥ आचारापेक्षयाधृतव्रतत्वादिपरिपू
र्णस्य ॥२७॥ दैहिः । देहरूपः । आत्मनाविभुःस्वतएवव्याप्तः । तस्यसर्वावतारेषुनविशेषोस्तिकश्चन । दे
हदेहिविभेदश्चनपरेविद्यतेक्वचित् । सर्वेवताराव्याप्ताश्चसर्वेसूक्ष्माश्चतत्त्वतः । ऐश्वर्ययोगाद्भगवान्क्रीडत्ये
वंजनार्दनइतिमहासंहितायां । अवतारप्रयोजनासंपत्त्यासंपन्नइव । ब्रह्मवर्चसयुक्तानामुत्तमः ॥२९॥ पुन
रपेक्षितत्वान्नप्रायेणनिरूपिताः । यथातुभारतेदेवोनतथान्येषुकेषुचित् । उच्यतेनतथापीशंजानंत्यज्ञाज
नार्दनमितिस्कांदे ॥३०॥ खेदोऽनलंबुद्धिः । अतुष्टिरप्रसादश्चखेदोतृप्तिस्तथैवच । अनलत्वंवदंत्येतेसर्वेप
र्यायवाचकाइतिब्राह्मे । मन्यमानस्यस्वेच्छया ॥३१॥ इतिप्रथमतात्पर्येचतुर्थोऽध्यायः ॥४॥ ॥
शारीरमानसयोरभेदादुभयथापियुज्यते । स्वतंत्रत्वादात्मनैवह्यलंबुद्धिः ॥२॥ शोचैसिप्रकाशयसि । अज
स्रेणशोचिषाशोशुचानइतिहिश्रुतिः ॥४॥ ज्ञानशक्तिस्वरूपोपिह्यज्ञाशक्तंवदेद्धरिः । अज्ञानांमोहनायेशस्ते
नमुह्यंतिमोहिताइतिपाद्मे ॥५॥ धर्मादीनामल्पकथनेनपूर्तिः । नवासुदेवमहिम्नोतिकथितस्यापि ॥९॥

वायसंतीर्थं । वयोमात्रानुजीविशास्त्रं ॥१०॥ [१२]परोक्षज्ञानंनशोभते । अपरोक्षज्ञानंनभक्त्याविनोत्पद्यते ।
यस्यदेवेपराभक्तिः । यमेवैषवृणुतेतेनलभ्यः । यद्वासुदेवशरणाविदुरंजसैवेत्यादेः ॥१२॥ शुचिश्रवाःविष्णुः ।
समाधिना समाधिभाषया । स्मरणंग्रंथकृतिः । स्मरंतिचेत्यादेः ॥१३॥ [१५]प्रवृत्तिधर्मकृते ॥१५॥ अनंतपार
स्यविभोःसकाशाद्यत्सुखं ॥१६॥ [२०]इतरोपिभगवान्विश्वमिव । स्वातंत्र्यात् ॥२०॥ [२७]मयिस्थितेब्रह्मणिस्थीय
तामत्रेतीश्वरेच्छयापरिकल्पितं ॥ २७ ॥ [४०]त्वमीश्वरोपि ॥ ४० ॥ इतिप्रथमतात्पर्येपंचमोऽध्यायः ॥ ५ ॥
[११]मृगयाजीविनांखेटोवाटीपुष्पोपजीविनां । ग्रामोबहुजनाकीर्णोराजराजाश्रयंपुरं । जलस्थलमतिस्फीतं
पत्तनंकीर्त्यतेबुधैरितिस्कांदे ॥११॥ [२१]उभयंद्वितीयंनापश्यंतमेवापश्यं॥२१॥ इतिप्रथमतात्पर्येषष्ठोऽध्यायः॥६॥
[२]शम्यांप्रास्यतत्रशालांकृत्वायत्रयज्ञःक्रियतेसशम्याप्रासः ॥ २ ॥ [४]भक्तियोगेनसम्यक्प्रणिहितेलोकानांमन
सि[१४]स्वात्मनएवविप्रियंनभर्तुः । प्रयोजनाभावाद्धिप्रियमिवचतस्यप्रियमितिहिप्रस्वापोक्तं॥१४॥ [१५-१७]स्वप्नोयं ।
पार्थानुयातमात्मानंद्रौणिःस्वप्नेददर्शह । बंधनंचात्मनस्तत्रद्रौपद्याचैवमोक्षणमितिस्कांदे । तस्मान्नैषीकवि
रोधः ॥१५-५७॥ इतिप्रथमतात्पर्येसप्तमोऽध्यायः ॥७॥ ॥ ॥ ॥

भक्ति[२३]योगविधानविषयं ॥२३॥ [२८]अपुनर्भवंदर्शयति ॥२८॥ [३१]तंत्तद्योग्यतयासमत्वं ॥३१॥ [४१]यर्हिभवतोदर्शनं
तदायदूनामस्माकंनामरूपे ॥४१॥ इतिप्रथमतात्पर्येअष्टमोऽध्यायः ॥८॥ ॥ ॥
[५]यैःपदातिंहंतिसभवतिचातुर्मास्ययाजीयःसादिनंसोग्निष्टोमस्ययोहंतिगजरथौसोश्वमेधराजसूयाभ्यामित्या
दिशाश्वतंवचः ॥५॥ [४५]असंगश्चाव्ययथोऽभेद्योनिग्राह्योशोष्यएवच। विद्धोसृगंचितोबद्धइतिविष्णुःप्रदृश्यते।
असुरान्मोहयन्देवःक्रीडयैवसुरेष्वपि । मानुषान्मध्ययादृष्ट्यानमुक्तेषुकथंचनेतिस्कांदे ॥४५॥ इतिप्रथम
तात्पर्येनवमोऽध्यायः ॥९॥ ॥ ॥ ॥
[५]अमात्यामंत्रिणोदूताःश्रेणयश्चपुरोहिताः । पुरंजनपदंचेतिसप्तप्रणिधयःस्मृताइतिब्राह्मे ॥५॥ [२०]पालनानुग्र
हजयान्गौणेंडेसंस्थितोहरिः। करोत्यसौबहिःसंस्थोनकरोतीवनिर्गुणइतिपाद्मे । अतोनानुरूपानुरूपाश्च
॥२०॥ [२२]सत्वादिशक्तिषु ॥२२॥ श्रीर्भूर्दुर्गेतियाभिन्नाजीवमायामहात्मनः । आत्ममायातदिच्छासागुणमा
याजडात्मिकेतिमहासंहितायां ॥ अप्रसिद्धेस्तद्गुणानामनामासौप्रकीर्तितः । अप्राकृतत्वाद्रूपस्याप्यरूपो
सावुदीर्यतइतिवासुदेवाध्यात्मे ॥२३॥ [२६]सात्विकानामनुग्राहकः । अगुणोपिपरोदेवोह्यनुगृह्णातिसात्विका

न्‌।देवास्तुमानवान्मध्यानुपेक्ष्यक्लेश्यतेसुरानितिब्रह्मदर्शने।सात्वतःसात्विकस्नेहात्सत्वोह्यानंदरूपतइतिब्रह्म
वैवर्ते । धारकत्वाद्धर्मरूपोह्यैश्वर्यादेर्भगोह्यसौ । सत्यमानंदरूपत्वादृतोज्ञानस्वरूपतः । यशोह्यलंप्रसिद्ध
त्वादृयाहिकरुणाकरइतितंत्रभागवते । एवंविधगुणस्वरूपाणिरूपाणिदधद्युगेयुगे ॥२६॥ [३१]अंग्निपुत्रामहा
त्मानस्तपसास्त्रीत्वमापिरे । भर्तारंचजगद्योनिंवासुदेवमजंविभुमितिमहाकौर्मे ॥३१॥ [३३]स्नेहमात्रात्‌ ॥३३॥
[३७]गविष्ठआदित्यः । असौवावगविष्ठोप्सूदेत्यप्स्वस्तमेतीतिमाध्यंदिनायनश्रुतिः ॥३७॥ [४६]कुरूणांमधूनांचनः
॥४६॥ [७५]तदाश्रयाबुद्धिः । तज्ज्ञानिनामपिप्रकृतिस्थानांनतत्संगःकिमुतस्येतिव्यत्यासदृष्टांतः । व्यत्यासो
नन्वयश्चैवप्रसिद्धोभूतएवच । सर्वसांहारकश्चेतिदृष्टांतःपंचधास्मृतइतिब्राह्मे ॥७५॥ मतयोयथा ।
यथामतिमेनिरे ॥७६॥ इतिप्रथमतात्पर्येदशमोऽध्यायः ॥१०॥ ॥ ॥
[१९]रामोदाशरथिर्यथाअधिकदृष्टांतः । ऊर्णनाभ्यादिकोविष्णोविष्णुर्विष्णोस्तथैवच । विष्णुर्जीवस्यदृष्टांताऊ
नसाम्याधिकाःक्रमादितिब्राह्मे ॥१९॥ [३१]पूरयंतिदिशःसोमंदेवागावःसरस्वतीतिगारुडे ॥ ३१ ॥ इतिप्रथम
तात्पर्येएकादशोऽध्यायः ॥११॥ ॥ ॥ ॥ ॥

तत्प्राँ[५]णेप्रपन्नउदतिष्ठदितिश्रुतिः ॥५॥ यदु[१२]कुलक्षयमेष्यत् । शापंश्रुत्वाब्राह्मणानामुद्धवःखिन्नमानसः । उदा
सीनंतथाकृष्णमिवसुप्रीतमेवच । नशिष्यमाणंस्वकुलंस्वर्यियियासुंचकेशवं । ज्ञात्वापप्रच्छभगवत्स्वरूपंतमु
पह्वरे । मैत्रेयोपितदैवागाज्जिज्ञासुस्तत्त्वमुत्तमं । तयोरदात्सभगवान्ज्ञानंनिर्मलमंजसा । षड्विंशद्वत्सरात्पू
र्वंस्वर्गतेःपुरुषोत्तमः । प्रेषयामासचहरिरुद्धवंबदरीमनु । कलापग्रामिणांवक्तुमेतत्तत्वमशेषतः । विदुरंतीर्थ
यात्रास्थमंतरालेसउद्धवः । दृष्ट्वानशिष्यमाणंचकुलंजिगमिषुंहरिं । कथयित्वाबदर्यांचकलापग्रामवासिनां ।
प्रोच्यतत्त्वमशेषेणवासुदेवमुखोद्गतं । षड्विंशद्वर्षगमनेपुनरागतिमात्मनः । तेषामुक्त्वापुनःकृष्णसन्निधौवि
चचारह । मैत्रेयोविदुरायैतदूचिवान्कृष्णचोदितः । विदुरःपांडवानांचविनायदुविनाशनं । षट्त्रिंशद्वर्ष
तःपूर्वंज्ञात्वाप्यप्रियमेवतत् । नावोचद्विदुरोधीमांस्तस्मान्नाप्रियमावदेदितिपाद्मे । तावच्छशासक्षितिमेक
चक्रामेकातपत्रामजितेनपार्थइतिचोपरि । विदुरंचागतंपुनरितिच । भारतेचैकविंशद्वर्षात्पूर्वंविदुरस्ययुधि
ष्ठिरभावउक्तः ॥१२॥ योर्यं[१५]मोदंडमबिभ्रत्सवर्षशतंयावच्छूद्रत्वंबभार । नदेवानांनदेवीनांसामस्त्येनजनिर्भुवि ।
अंशांशेनैवजायंतेसर्वेत्वाजानजादयः ॥१५॥ संहर्ता[२]भगवान्विष्णुःकालइत्यभिधीयते । अथवागुणसर्वस्वं

कालशब्दोव्यनक्तिर्हीतिस्कांदे ॥२०॥ स्वैरगतिः[28] । विविक्तगतिः ॥२८॥ पितरौ[31]कुंतीधृतराष्ट्रौ । नचा
पश्यत् । तस्यमनसितेषांविपद्भावोबभूव । अन्यथामहाभारतविरोधात् । स्कांदेच । भीमसंतर्जितोराज्ञ
स्त्वनुज्ञांप्राप्ययत्नतः। धृतराष्ट्रोवनवासमकरोद्वत्सरत्रयं । विदुरस्तद्दिदृक्षार्थमागतेषुवनंपुरा।पांडवेषुतुराजा
नंप्रविश्यैकत्वमागतः । ततोदावाग्निनादग्धंधृतराष्ट्रंचसौबलीं । श्रुत्वाकुंतींचचिंतांतेप्रापुःपांडुसुतास्तदा ।
तांस्तदानारदोविद्वान् शमयामासधर्मवित् । उक्त्वोत्तमांगतिंतेषांनिष्ठांतात्कालिकींतथेत्यादि ॥३१॥ ब्रह्मां[32]
डेच । धृतराष्ट्रमृतेसूतःसंजयःपांडुसूनवे । गतिंशशंसकुंत्याश्चगांधारीधृतराष्ट्रयोरित्यादि । पितृव्योपिधृ
तराष्ट्रएव । द्विरुक्तिस्तात्पर्यार्थं । यत्राधिकंतत्परताबहुवारमपिध्रुवं । तद्वदंतिमहाप्राज्ञालोकवेदानुसार
तइतिब्रह्मतर्के ॥३२॥ पितृव्यौ[34]गांधारीधृतराष्ट्रौ ॥३४॥ मुषितो[37]स्मीतिप्रलापः ॥३७॥ क्व[40]गंताविल्यदृष्टयपे
क्षया ॥४०॥ अपरिहार्य[44]त्वादशोच्याः ॥४४॥ गमनं[51]कालेसहभ्रात्रा ॥५१॥ आस्त[53]इत्याद्यतीतार्थे । सए
षएतत्त्वध्यास्तआसनंपार्थिवोचितमित्यादिवत् ।सुप्तिङुपग्रहलिंगनराणांकालहलच्स्वरकर्तृयङांच । व्यत्यय
मिच्छतिशास्त्रकृदेषांसोपिचसिध्यतिबाहुलकेनेतिमहाव्याकरणे । व्यासादयोवर्तमानमतीतानागतेतथा।

व्यत्यस्यापिवदंत्यद्धामोहनार्थंदुरात्मनां । पौर्वापर्यंयतोनैवसदैवपरिवर्तनात् । अतश्चव्यत्ययादेतद्वदंतिज्ञा
नचक्षुषइतिब्राह्मे ॥ ५३ ॥ विज्ञानात्माविरिंचोयंयस्तस्मिँल्लीयतेजगत् । यादांसिसागरेयद्वत्सक्षेत्रज्ञेजनार्द
ने । हृदिस्थेचसचव्याप्तेस्वात्मन्येकीभवत्युत । प्रलयेभेदवंतौतुपूर्वोक्तौब्रह्मकृष्णयोः । अंतस्थस्यबहिष्ठेतुतस्य
तस्मिन्नभेदतइतिब्रह्मवैवर्ते । कालेतस्यतत्रलयोभविष्यतीतिध्यानमात्रंविलापनं । अविद्यमानमपियोध्या
येतैवंविनिश्चितः । उच्यतेतस्यकर्तेतितथैवमुनयोमलाः । जगद्विलापयामासुरित्युच्यंतेथतत्स्मृतेः । नच
तत्स्मृतिमात्रेणलयोभवतिनिश्चितमितिनारदीये । स्वरूपंजायमानंचआकाशंचघटेद्विधा । स्वरूपंजाय
मानंतुघटेनिर्भेदमेवतु । भिन्नवद्व्यवहारायसमर्थंतल्लयेभवेत् । तद्वदेवावतारेषुदेहस्थश्चहरिःस्वयं । भिन्न
वद्व्यवहारायशक्तोलीनेजगत्यपि । सएवपूर्ववज्ज्ञेयोनिर्विशेषेणकेशवः । जायमानंघटेजातेजायतेतल्लयेन
तु । तस्माद्भिन्नंमहाकाशादेवंजीवोपिकीर्तितः । उपाधेश्चैवनित्यत्वान्नैवजीवोपिनश्यति । स्वरूपत्वादुपा
धेश्चनभिन्नोपाधिकल्पनं । नचाभिन्नत्वमीशेनचिन्मात्रत्वंचयुज्यतइतिब्रह्मतर्के ॥५५॥ त्रिगुणात्मिकात
थाज्ञानंविष्णुशक्तिस्तथैवच । मायाशब्देनभण्यंतेशब्दतत्वार्थवेदिभिरितिनाममहोदधौ । अत्रसत्वादयो

मायागुणाः । परावरेतथैवारादुभयार्थाभिधायिनइतिच ॥५९॥ एतत्सर्वंपूर्वमेवज्ञात्वातस्मादेवकारणाद्वि
दुरस्तीर्थानिययौ ॥६०॥ इतिप्रथमतात्पर्येद्वादशोऽध्यायः ॥१२॥ ॥ ॥
मासेशब्देनाहान्युच्यंते । तथाहिमहाभारते । अहस्तुमासशब्दोक्तंयत्रचिंतायुतंव्रजेत् । एवंवत्सरभाद्यंच
विपरीतेविपर्ययइतिनाममहोदधौ ॥२॥ अंगंपृथिवीं । यदात्यागादिरुच्येतपृथिव्याद्यंगकल्पना । तदाज्ञेया
नहिस्वांगंकदाचिद्विष्णुरुत्सृजेदितिब्रह्मतर्के ॥८॥ अमौपदंकरोति । यदुलूकोवदतिमोघमेतद्यत्कपोतःप
दमग्नौकृणोतीतिहिश्रुतिः ॥१४॥ यथान्येषांसुखंभविष्यतितथा । नित्यसुखत्वाद्धरेः । अत्युत्तमानांकुशल
प्रश्नोलोकसुखेच्छया । नित्यदासुखत्वात्तुनतेषांयुज्यतेक्वचिदितिनारदीये ॥३४॥ पूर्वंचिरोषितः ॥३९॥
इतित्रयोदशोऽध्यायः ॥१३॥ यैंत्पदयोःपतितायाअश्रुप्रधानः । यैःकबरंस्पृष्टंतत्स्त्रियःतत्पदयोःपतितत्वादेव ।
सविमुक्तकेश्योन्यकृत ॥१०॥ सरथोहयास्तेतादृशाइत्यर्थः । तइवइतीव । सदृशेवाप्रधानेवाकारणेवातदित्य
यं । शब्दःसंघटतेभेदेविद्यमानेपितत्त्वतइतिब्रह्मतर्के । तद्रथहयानांदाहोक्तेः ॥२१॥ इतिप्रथमतात्पर्येचतुर्दशः
॥१४॥ ज्ञानिनांप्रारब्धस्यैवविनिर्मथनंयोग्यस्य । महताकारणेनैवप्रारब्धान्यपिकानिचित् । कर्माणिक्षयमायां

तिब्रह्मदृष्टिमतःक्वचिदितिभविष्यत्पर्वणि । तेषामपिकाम्यकर्मफलदृष्टेश्च ॥१॥ तमआदिनिरोधश्चप्रारब्धकर्मणैव । ज्ञानादिव्यक्तिरव्यक्तिःसुखदुःखादिकंतथा । सुदृष्टब्रह्मतत्त्वानांभवत्यारब्धकर्मणेतिब्रह्मवैवर्ते ॥२॥ ब्रह्मसंपत्तिरवगतिः । भगवंतंविनान्यत्रप्रवृत्त्यादिप्रकाशनं । प्रारब्धकर्मणैवस्यात्कदाचिज्ज्ञानिनामपि । तां द्वैतदृष्टिंमेदेवछिंधिज्ञानवरासिनेतिब्राह्मे । तदेवसंछिन्नद्वैतसंशयत्वं । लीनप्रकृतित्वंनैर्गुण्यंचलीनप्रकृतिनैर्गुण्यं । तस्मादसूक्ष्मशरीरत्वादनारब्धकर्ममूलत्वात् । असंभवःपुनरुत्पत्तिवर्जितः । ज्ञानोदयकालएवैवंभूतःसन्पुनरध्यगच्छत् । प्रकृतिंस्वात्मसंश्लिष्टांगुणान्सत्वादिकानपि । कर्माणिसूक्ष्मदेहंचजायमानाहरेर्दृशिः । दहेदथापिसंदग्धेंधनवत्तत्पुनःपुनः । यावदारब्धकर्मस्यादाविर्भावितिरोभवेदितिब्रह्मतर्के ॥ ३ ॥ पौत्रत्वेयोग्यत्वमनवमत्वं । इंद्राद्युत्तमतान्येषांसमतावास्वकेकुले । उत्तमत्वमुपास्त्यादियोग्यतावानिगद्यतइतिब्रह्मतर्के ॥७॥ प्राणंमपानेतंव्याने । समानोदानौतेषु । तांश्चमूलप्राणे । आत्माहृदिस्थोविष्णुः । ब्रह्मसर्वगतं । उमावागात्मिकारुद्राज्जातासामनआत्मनः । प्राणाह्वयात्सवायोश्चसोपानादात्मरूपतः । स्वरूपादेवसव्यानादुदानोव्यानतस्तथा । तस्मात्समानोव्यानाच्चाप्यपानःप्राणएवच । अपानात्तिसृभिश्चापिसमा

नोदानयोर्जनिः । त्रयाणामथपंचानामनाद्याप्राणतोभवः । एकस्यैवस्वरूपाणिप्राणस्यैतानिपंचच । सच प्राणोहरेर्जातोहृदिस्थादात्मनोमतः । सआत्माब्रह्मणोजातोविश्वरूपाज्जनार्दनात् । एतेषांब्रह्मपर्यंतंविलयोत्पत्तिचिंतनं । ब्रह्मयज्ञइतिप्रोक्तःसर्वसंसारमोचकइतिनारायणाध्यात्मे । अस्यास्मिन्विलयोभवतीत्येवंविज्ञानमाहुतिः । नतुतत्कालविलयस्तन्योवातस्यदर्शनादितिब्रह्मतर्के ॥ १०।११ ॥ [13]नावर्तेतवीरगतिं ॥१३॥ [15]आत्मनःस्वरूपमात्यंतिकंज्ञात्वा ॥१५॥ पंचदशोध्यायः ॥१५॥ कोसावित्याक्षेपः । कलिमित्युक्तत्वात् ॥५॥ अथेतिपक्षांतरे । वायदि ॥६॥ अन्यथाचेदायुषोसद्व्ययइत्यर्थः । यद्यर्थेचविकल्पार्थेवाशब्दःसमुदीर्यतइतिनाममहोदधौ ॥७॥ एतंदर्थंहिमृत्युराहूतः । अहोनृलोकेपीयेतेति ॥९॥ स्निग्धेषुपांडुषुविष्णोःसारथ्यादिभिर्विशेषतोभक्तिंकरोति ॥१७॥ [27][23]त्यागोमिथ्याभिमानवर्जनं । मिथ्याभिमानविरतिस्त्यागइत्यभिधीयतइतिनारायणाध्यात्मे ॥२७॥ [28]ऐकांततःशुभभागित्वंसौभाग्यं । शुभैकभागीसुभगोदुर्भगस्तद्विपर्ययइतिगीताकल्पे ॥२८॥ [29]शमःप्रियादिबुद्ध्युज्झा ॥२७॥ [28]क्षमाक्रोधाद्यनुत्थितिः ॥२८॥ [27]महाविरोधकर्तुश्चसहनंतुतितिक्षणमितिपाद्मे । स्वयंसर्वस्यकर्तृत्वात्कुतस्तस्यप्रियाप्रियेइतिच । प्रियमेववतःसर्वमप्रियंनास्तिकुत्रचित् । स्वयमे ॥७९८॥

वयतःकर्ताशांतोतोहरिरीश्वरइतिब्रह्मतर्के ॥२७॥ [२९]मौनःपरेषां ॥२९॥ [३०]गुणैःस्वरूपभूतैस्तुगुण्यसौहरिरीश्वरः। नविष्णोर्नचमुक्तानांकोपिभिन्नोगुणोमतइतिब्रह्मतर्के ॥ ३० ॥ इतिप्रथमतात्पर्येषोडशोऽध्यायः ॥ १६ ॥ विभ्[२]येतमिवमेहंतं ॥२॥ [२१]अंसतांसूचकस्यनदोषस्तथापिसतांनसूचनीयमितिदर्शयितुं । ज्ञातुंशक्यत्वाच्चराज्ञः । यद्यधर्मःकृतःसद्भिःसनवाच्यःकथंचन ।असत्कृतमधर्मंतुवदन्धर्ममवाप्नुयादितिव्यासस्मृतौ ॥२१॥ तस्यगोचरत्वेपिभूतानामगोचरेतिज्ञापयितुंवा ॥२२॥ [३२]ब्रह्मयज्ञावितानयज्ञाश्च ॥ ३२ ॥ इष्टात्मसूर्तिरिच्छातनुः ॥३३॥ विहि[४]तातिरेकेणनसेवेत ॥४०॥ इतिप्रथमतात्पर्येसप्तदशोऽध्यायः ॥१७॥ ॥ वि[३]ज्ञानमात्मयोग्यंस्याज्ञ्ज्ञानंसाधारणंस्मृतमितिभागवततंत्रे ॥३॥ [१३]सम्यक्स्वरूपाभिव्यक्तिरभावोजननस्य च । अप्रयत्नात्ततोवृद्धिहेतोःसत्संगतिर्वरेतिवायुप्रोक्ते ॥१३॥ [१९]अनंतोदेशतःकालतश्च ॥१९॥ [२२]परमहंसाश्रमप्राप्यं । सत्यंब्रह्म ॥२२॥ [२६]स्वंतोमनःस्थितिर्विष्णौब्रह्मभावउदाहृतइतिब्रह्मांडे ॥२६॥ [२९]अप्रीतिर्मद्धशोनाय मितिमत्सरईरितइतिनाममहोदधौ ॥२९॥ [३६]कौशिकीकुशपाणिः ॥३६॥ से[४३]नापराकिणीप्रोक्तावरूथोगु

प्तिरुच्यतइत्यभिधानं ॥ ४३ ॥ विड्वाश्वूंपशुरुत्सेकोभ्रमरश्चेतिकथ्यतइतिच ॥ ४४ ॥ स्वंकृतोगुणस्तस्यैव
यतः ॥५०॥ इतिप्रथमतात्पर्येअष्टादशोऽध्यायः ॥१८॥ ॥ ॥ ॥
गंगायामुदकएवकिंचिद्दक्षिणभागेप्रासादे।तथाहिमहाभारते॥१७॥इतिप्र०ता०एकोनविंशोऽध्यायः॥१९॥
कैशोरयौवनाभ्यंतःकालआपीच्यमुच्यतइत्यभिधानं ॥४॥ इतिश्रीमदानंदतीर्थभगवत्पादाचार्यविरचिते
श्रीमद्भागवततात्पर्यनिर्णयेप्रथमस्कंधेविंशोऽध्यायः ॥२०॥ ॥ प्रथमस्कंधःसंपूर्णः ॥१॥ ॥
श्रीगुरुभ्योनमः ॥ यःपरइति ॥१॥ अपश्यतांनिद्रया ॥२॥ असत्सुअभद्रेषु । सद्भावेसाधुभावेचेतिवचनात्
॥४॥ ध्यानापेक्षयाप्रायेण । नैर्गुण्यस्थामुक्ताः । एतत्सामगायन्नास्तइतिश्रुतेः ॥७॥ द्वापरेच । आदौकृ
ष्णावतारापेक्षया । व्यासःषट्शतवर्षीयोधृतराष्ट्रमजीजनदितिस्कांदे ॥८॥ परिनिष्ठितोपिमुक्तिरस्यभवि
ष्यतीतिनिश्चितोपि । उदरंसंशयःप्रोक्तःपरिनिष्ठाविनिश्चयइत्यभिधाने । ऋष्युत्तमादेवताश्चविमुक्तापरिनि
श्चिताः । तथाप्यधिकसौख्यार्थंयतंतेशुभकर्मसु । विमुक्तास्तुस्वभावेननित्यंध्यानादितत्पराइतिगारुडे
॥९॥ शुभार्थेभगवति ॥१८॥ विषयेभ्योनिर्गत्यतत्रैवमनोयुङ्क्त्वान्यन्नस्मरेत् ॥१९॥ भद्रंहरिं ॥२१॥ यच्छ

ब्दः प्रश्ने । यतश्चोदेतिसूर्यइत्यादिवत् । यच्छब्दस्तुपरामर्शेप्रश्नार्थेचाभिमण्यतइत्यभिधाने ॥२२॥ यथेत्यस्य
जितासनइत्यादि । यत्रस्थूले ॥२३॥ यादृशीत्यस्यविशेषइत्यादि । विशेषआंडकोशः । शिलावत्तस्यदे
होयमंडकोशस्तुसावृतिः । तत्तंत्रत्वान्नतत्संस्थदुःखभोगोस्यनकचिदितिब्रह्मवैवर्ते ॥२४॥ अंडकोशोविराट्
प्रोक्तोविशेषेणप्रकाशनात् । वैराजस्तद्गतोविष्णुरथवासर्वतोवरइतिभागवततंत्रे ॥२५॥ प्रतिमापेक्षयांगा
निस्वरूपापेक्षयातज्जानितदाश्रितानिच ॥ बहुरूपत्वाद्दंष्ट्रार्यमेंदूइत्यादि ।प्रतिमापेक्षयांगानिभूरादीनिस्व
रूपतः।तदाश्रितानितज्जानिबह्वंगत्वंबहुत्वतइतिब्रह्मतर्के॥२६-३१॥इतिद्वितीयतात्पर्येप्रथमोऽध्यायः॥१॥
ऐषहरिः । यदपार्थैर्ध्यायति । तत्रार्थान्नविंदते। सर्वनामायतोविष्णुस्तदन्यार्थान्नतुस्मरेत् ॥२॥ स्मरंस्तुया
वदर्थःस्यादन्यथास्वात्महास्मृतइतिब्रह्मांडे ॥३॥ ऐतमितस्तंप्रेत्याभिसंभवितास्मीतिनियतार्थः ॥६॥ यथै
कस्तुबहून्सुप्तानसुप्तःपश्यतिप्रभुः। एवमीशोबहूञ्जीवानज्ञान्पश्यतिनित्यदृगितिव्योमसंहितायां। स्वप्नेनशा
रीरमभिप्रहत्यासुप्तःसुप्तानभिचाकशीतीतिच । यथेष्टभवनाद्विष्णुरनुभूःपरिकीर्तितः । उदधिःकर्मणामी
शःसर्वःपूर्णगुणोयतः। सत्यःकेवलसारत्वान्नियमोनियतेरजइतिबृहत्संहितायां॥७॥चिंतांमयांचिंताप्रधानं।

यस्मात्संचिंतितोविष्णुश्चिंतितंप्रददात्यजः । तस्माच्चिंतामयंदेवंवदंतिज्ञानचक्षुषइतिच ॥१३॥ [१५]स्थैवीयःपा
तालमेतस्येत्यादि ॥१५॥ [१६।१७]भक्त्याप्राणंवशंनीत्वाजितप्राणोभवत्युतेतिषाड्गुण्ये । जीवस्थोभगवान्विष्णुः
क्षेत्रज्ञइतिगीयते । देहस्थोपिसएवात्माव्याप्तोप्यात्मेतिभण्यतइतितत्त्वनिर्णये । हरौहरेर्भवेन्नीतिस्तदेकत्वस्य
चिंतनं । अन्यत्रतन्नियम्यादिचिंतनंनीतिरुच्यतइतिप्रकाशसंहितायां ॥१६-१७॥ [१८]कालोवायुः । हरिश्चप्र
कृतिश्चैवब्रह्मवायूतथैवच । सुपर्णशेषरुद्राश्चशक्रःसूर्ययमावपि । अग्निर्यमानुजश्चैवकालशब्देरिताःक्रमात् ।
पूर्वोक्तास्त्वपरोक्तानांप्रभवःसर्वशोमताइत्युद्दामसंहितायां ॥१८॥ [२१]उदानगत्याब्रह्मनाड्या । अथैकयोर्ध्व
उदानइतिश्रुतेः । प्राणापानाविडायांचपिंगलायांचवर्ततः । व्यानःसंधिषुसर्वत्रउदानोब्रह्मनाडिगः । सर्व
त्रैवसमानस्तुसमंचरतिसर्वगइतिभारते॥२१॥परंचिंतयन्॥२२॥[२३।२४]चिन्मात्राणींद्रियाण्याहुर्मुक्तानामन्यदैवतु।
तान्येवजडयुक्तानिह्यभिन्नानिस्वरूपतइतिब्राह्मे । पवनस्याप्यंतरात्मायःतं । पवनश्चांतरात्माचेतिवा ।
ईयुस्त्रीन्कर्मणालोकाञ्ज्ञानेनैवतदुत्तरान् । तत्रमुख्याहरिंयांतितदन्येवायुमेवतु । अपक्वायेनतेयांतिवायुं
वाहरिमेववा । स्थानमात्राश्रितास्तेतुपुनर्जनिविवर्जिताइतिब्रह्मतर्के ॥२३।२४॥ हरेःशैंशुमारंचक्रं । वैश्वा

नरोदस्तात् । वैश्वानरेद्युनद्यांवासूर्येवादेहएववा । विधूयसर्वपापानियांतिकिंस्तुभ्रकेशवमितिब्रह्मांडे॥२५॥
पितृयानंदेवयानंब्रह्मयानमितित्रिधा । गच्छन्वैश्वानरंयातितस्मान्मार्गःसईरितः ॥२६॥ दक्षिणाःपिंगलाः
सर्वाइडावामाःप्रकीर्तिताः । नाड्योथमध्यमाःप्रोक्ताःसुषुम्नावेदपारगैरितिभागवततंत्रे । देवयानस्यमार्ग
स्थाअहःशब्दाभिसंज्ञिताः । पितृयानस्यमार्गस्थारात्रिशब्दाह्वयामताइतिबृहत्तंत्रे । शतायुर्मरणंचैवकालि
कंपरमावृतिरित्यभिधाने । पिंगलाभिःशतायुषाअहःसंज्ञंदेवयानमेति । इडाभीरात्रिसंज्ञंपितृयानं । विषु
वत्ताब्रह्मयानोविशेषेणसुखंयतः । पिंगलादेवयानंस्यात्पिंगाख्यसुखदंयतः । इडान्नदानात्पितॄणामेवंमा
र्गाःप्रकीर्तिताइतिब्रह्मतर्के ॥२७॥ अशेषजगदाधारःशिंशुमारोहरिःपरः । सर्वेब्रह्मविदोनत्वातंयांतिपर
मंपदमितिब्रह्मांडे । तद्विष्णोर्विश्वाधारंरूपंप्रतिपद्ययत्रकल्पायुषस्तंमहर्लोकमुपैति । मन्वंतरायुषःस्वर्ग्या
महर्लोकेतुकाल्पिकाः । आब्रह्मणोजनाद्यास्तुमहर्लोकेपियेवराइतिब्राह्मे ॥२८॥ ३ॐतेसत्यलोके । अनिदं
विदांअब्रह्मविदां । दुरंतदुःखंचप्रभवश्च । सर्वदुःखविहीनायेमुक्ताःप्रायस्तुतादृशाः । अमुक्तास्तुजनाद्ये
षुविशेषेणतुसत्यगाइतिवाराहे । विष्णोर्लोकंतदैवैकेयांतिकालांतरेपरे । आज्ञयैवहरेःकेचिदपूर्तेःकेचिदंज

सा । विहृत्यैवान्यलोकेषुमुच्यंतेब्रह्मणासहेतिवामने ॥३०॥ ब्रह्मणासहविशेषंपृथिवीं । तेनात्मनापृथिव्यात्मना । ज्योतिर्मयोग्निप्रधानः । आकाशवत्सर्वगतश्चनित्यइतिपरमात्मसदृशंकिंचित् । ज्ञानिनःप्रलयेसर्वे ब्रह्मणासहपार्थिवं । परमात्मानमाविश्यवारिस्थंतत्समन्विताः । अग्निस्थंतद्युताश्चैवतेननीताश्चवायुगं । नभोगतंतेननीतामनस्थंतद्युतास्तथा । ततोबुद्धिस्थमीशेशंततोहंकारगंहरिं । ततोविज्ञाननामानंमहत्त्वगतंहरिं । ततआनंदनामानमव्यक्तस्थंजनार्दनं । प्राप्यनावृत्तिमायांतिशांति(ती)भूतानिरामयाः । येषांपदांतरापेक्षावाय्वादीनांमहात्मनां । आवृत्यतेपुनर्यांतिज्ञानिनोपिनिरामयाः । अनावृत्तिमसंमूढाःपरानंदैकभागिनइतिब्रह्मतर्के । भूम्यब्गमन्ननामानंप्राणमग्न्यादिसंस्थितं । मानसंमनआदिस्थंविज्ञानंमहतिस्थितं । आनंदमव्यक्तगतंक्रमशोयांतिदेवताः । ब्रह्माद्याःकेचिदेवात्रतदन्येक्रमशोपरानितिबृहत्तंत्रे ॥३१॥ पंचेंद्रियैर्येविषयाएष्टव्याःसर्वतोवराः । मानसांश्चाखिलान्प्राप्यमुक्तामोदंतिदेवताः । तथोद्रिक्तानिजानंदाअसंवृताइतिषाड्गुण्ये ॥३२॥ भूतसूक्ष्मैंद्रियैश्चसहअनादिर्भगवानाकाशगोमनोमयंयाति । नादवत्वात्सनानतः । नादेनतेनमहतासनातनइतिस्मृतइतिमोक्षधर्मे । विविधकार्ययुक्तंविकार्यं । देवमयंदेवप्रधा

नं । मनस्थितोहरिर्नित्यंसर्वदेवेषुसंस्थितः। देवप्रधानकाँल्लोकान्करोत्यनुगतःसदेतिवाराहे । भूतसूक्ष्माणिपं
चभूतानिजीवाश्च । पंचभूतैश्चशब्दाद्यैरिंद्रियैर्जीवराशिभिः । युक्तआकाशगोविष्णुर्मनस्थमुपगच्छतीति
वामने । योसावनादिर्मनोमयस्तमितिवा । विपर्ययश्चेत्तस्यैवगंतृत्वमितिज्ञापयितुं । मतिस्थेनतेनमनस्थे
नचसहविज्ञानतत्वंयाति ॥३३॥ गुणसंनिरोधंनिर्गुणंवासुदेवं ॥३४॥ एतांगतिंगतोनविषज्जते । वासुदेवा
श्रितादेवाब्रह्माद्यामुक्तबंधनाः । भेददृष्ट्याभिमानेनचावृत्तिंनैवयांतिते । भुंजतेतुपृथग्भोगान्नानंदंतत्स्वरू
पकं । स्वरूपंचपृथक्तेषामाविष्टब्रहवद्भवेदितिब्रह्मांडे ॥ यद्भगवानाह ॥३५॥ अतोभागवताख्याद्ग्रंथा
च्छिवःपंथान ॥३६॥ तद्भागवतंपुराणमपश्यत् । नित्यज्ञानेनसिद्धंचपुनःपुनरवेक्षते । लीलयैवहरिर्देवोदुष्टा
नांमोहनायचेतिब्रह्मतर्के ॥३७॥ लक्षितश्चास्मिन्पुराणे । बुद्ध्यादीनांपारवश्यदर्शनादन्योनियंतास्तीति।
समाधावसमाधौचनिःस्वतंत्रस्यदेहिनः । अन्योनियंताभगवान्वासुदेवःपरःप्रभुरितिब्रह्मतर्के ॥३८॥ यस्मा
द्भगवतैषएवोक्तस्तस्मात्सएवश्रोतव्यादिः ॥३९॥ इतिद्वितीयतात्पर्येद्वितीयोऽध्यायः ॥ २ ॥ ॥
अकामोधर्मकामोवामोक्षकामोपियोभवेत् । अथवासर्वकामोयःसविष्णुंपुरुषंयजेदितिस्कांदे ॥८॥ तस्याँ

युषः उत्तमश्लोकवार्तयाऋतेयःक्षणःसनीतएववृथा ॥ ॥ इतिद्वितीयतात्पर्येतृतीयोऽध्यायः ॥ ३ ॥
अन्येषांनित्यंनिरूढां । तदाविशेषतोजहौ ॥२॥ आप्तेःसर्वगुणानांयआत्मनामतयाहरिं । उपास्तेनित्यशो
विद्वानाप्तकामस्तदाभवेदितिवामने ॥४॥ गृहीतशक्तित्रितयायेति । इच्छाज्ञानंक्रियाचेतिनित्याःशक्तय
ईशितुः । स्वरूपभूताअपितुभेदवद्यावहारिकाइतिप्रकाशसंहितावचनान्नित्यगृहीतशक्तित्वमेव ॥ १२ ॥
अखिलसत्वमूर्तये । पूर्णसाधुभावस्वरूपाय । निःशेषगुणपूर्णत्वात्सत्वइत्येवतंविदुरितिमहासंहितायां
॥ १३ ॥ वेदानुसारिवशगःस्वेच्छयातुहरिर्यतः । अतःस्वतंत्रमप्याहुःप्राज्ञावेदमयेतिहेत्यध्यात्मे ॥१९॥
इतिद्वितीयतात्पर्येचतुर्थोऽध्यायः ॥ ४ ॥ ॥ ॥ ॥
विजानीहिविज्ञापय । व्यत्ययोभेदस्वातंत्र्यकरणेष्वितिवचनात् ॥१॥ तद्वशत्वादिदंरूपंहरेर्नैवस्वरूपतइ
तिमानससंहितायां । अधिष्ठानमितिप्रोक्तंमूलाधारंविचक्षणैः । यत्स्थितंदृश्यतेवस्तुसंस्थानंतदुदीरितं । उभ
यंहरिरेवास्यजगतोमुनिपंगवेतिवामने । हरिःपरोस्यजगतोह्यव्यक्तादेश्चकृत्स्नशः । अतस्तत्परमेवेदंवदं
तिमुनयोमलाइतिसात्वतसंहितायां । यदधीनायस्यसत्तातत्तदित्येवभण्यते । विद्यमानेविभेदेपिमिथोनि

त्यंस्वरूपतइतिभविष्यत्पर्वणि ॥२॥ तँदधिकंज्ञातुंपूर्वंपक्षंदर्शयति। एकःसृजसीत्यादिना ॥ ४ ॥ त्वंदधी
नायतःसत्ताअवरस्यापिकेशव । अतःस्वरूपतःसम्यक्सतिभेदेपितद्भवानितिमात्स्ये ॥ ८॥ [१०]नांनृतमित्या
क्षेपः ॥१०॥ [१२।१३]मुख्यमायाहरेःशक्तिरमुख्याप्रकृतिर्मता। अथामुख्यतमाचैवमायाहीनाप्रकीर्तिता ॥१२॥१३॥
परःअधिकः । तद्वदेवस्थितंयत्तुतात्वतंतत्प्रचक्षतइतिकौर्मे ॥१४॥ वेदप्रतिपाद्येषुसपरइत्यादि । गम्येज्य
ज्ञेयवाच्येषुयोज्येषुचपरोहरिः। तपसायुज्यमानानांसर्वलोकेभ्यएवचेतिवाराहे ॥१५॥१६॥ [१८]युगपक्रमशोपि
वेत्यस्यपरिहारः सत्वंरजस्तमइति । नित्यंगृहीताःसत्वाद्याःस्थित्यादिषुविशेषतः । युगपत्क्रमशश्चैवगृह्णा
तिभगवान्स्वयमितिब्रह्मवैवर्ते ॥१८॥ ज्ञानेंद्रियैश्चमनसासत्वंबध्नातिपूरुषं । रजःकर्मेंद्रियैर्नित्यंशरीरेणतम
स्तथा । आंतरंयत्तुकर्तृत्वंतत्सत्वेनाभिमन्यते । रजसात्वभिमन्येतकरणैःकर्मकारणैः । शारीरंवेदनाद्यंतु
तमसाह्यभिमन्यते । अकर्ताकरणैर्हीनःशरीरेणविवर्जितः । नित्यज्ञानस्वरूपोसौगुणैरेवाभिमन्यते । एवं
जीवःपरेणैवप्रेरितःसंसृतिंव्रजेत्। नपरःसंसृतिंक्वापिस्वातंत्र्याद्धिकत्वतः। एवंजीवपरौभिन्नौकिमन्यच्छ्रो
१३५ तुमिच्छसीतिपाद्मे । मायिनंज्ञानिनंस्वतः ॥१९॥ लिंगैर्ज्ञापकैः। त्रिगुणैः । एतैर्लिंगैः।स्वप्रसादाज्जीवेन

लक्षितगतिः । स्वप्रसादादिमंजीवःपश्येत्तेनस्वलक्षितइतिषाड्गुण्ये ॥२०॥ स्वयामाययास्वशक्त्या । यत्रा
न्यहेत्वभावःस्यादीश्वरेच्छादिनाविना । तदिच्छाहियदृच्छास्यादतस्तत्रयदृच्छयेतिब्रह्मतर्के । कालकर्मस्व
भावादिनित्ययेशेच्छयासदा । प्राप्तमेवविशेषेणसृष्ट्यादावुन्नयत्यजइतिच । विबुभूषुः । बहुधाबुभूषुः । ईशो
बह्वीःपुरःसृष्ट्वातत्रैवबहुरूपतां । तत्तन्नियामकतयाप्राप्तुंकालाद्युपाददइतिच ॥२१॥ प्रकृतेःपरिणामस्वभा
वतः । गुणकालस्वभावेभ्यईशेनाधिष्ठितत्वतः । जगदादिमहत्तत्त्वमभूत्तस्येच्छयाहरेरितिषाड्गुण्ये ॥२२॥
२३ भूतानिद्रव्यनामानिज्ञानंज्ञानेंद्रियाण्यपि । क्रियांकर्मेंद्रियाण्याहुस्तन्मूलत्वादहंत्रिधेतिगारुडे ॥२३॥ विशि
ष्टकार्यशक्तित्वाद्देवावैकारिकाःस्मृताः ॥२४॥ अतिजाज्वल्यमानत्वात्तैजसानींद्रियाण्यपि । तामसानितु
भूतानियतस्तावन्नतूभयमितिपाद्मे । ज्ञानेंद्रियाणांदेवानांज्ञानशक्तिरुदीरिता । क्रियाकर्मेंद्रियाणांचभूता
नांद्रव्यशक्तितेतिस्कांदे । द्रव्यंतुद्रवणप्राप्यंद्वयोर्विवदमानयोः । पूर्ववेगाभिसंबंधादाकाशस्तुप्रदेशतइतिप्रका
शसंहितायां ॥२५॥ पंचेंद्रियाभिमेयत्वान्मात्रागुणइतीरितइतिमात्स्ये । शब्देनैवपरोद्रष्टाज्ञायतेजगदेवचे ॥८०३॥
तिविष्णुसंहितायां ॥२६॥ सर्वचेष्टयितृत्वात्तुप्राणोभिभवशक्तितः । ओजस्त्वनभिभाव्यत्वात्सहश्चस्वेच्छ

याकृतेः । बलंविधारकत्वाच्चविधृतिर्वायुरुच्यतइतिभारते ॥२७॥ [30]अनाद्यनंतोपिहरिर्वैकारिकगणेष्वजः ।
अवतीर्णःपदांगुष्ठमध्यास्तेविश्वभुग्विभुः । पाददेवस्तुयज्ञोन्यस्तंप्रविश्यहरिःस्वयं । सर्वंविधारयन्देहेवर्ततेतेनं
तशक्तिधृगितिवह्निपुराणे ॥३०॥ [33]सदसत्त्वंव्यक्ताव्यक्तत्वं । नःभयं । अदोब्रह्मांडं । ब्रह्मांडंहिवदंतीतिजी
वानांभयकारणं । तत्रहिसंसृतिः । आकाशवायूत्वव्यक्तावितरैंडेप्रकाशिताः । तथात्वाद्वाह्यभूतानामंड
स्थानांचसागतिरितिमात्स्ये ॥३३॥ कालकर्मस्वभावस्थअजीवःपरमेश्वरः । अजीवःस्वात्मानमजीजनत् ।
तदंडंयथास्वात्मानंप्रसूतेतथाचकार । यःप्राणधारणंप्राणप्रसादात्कुरुतेनिशं । सजीवइतिसंदिष्टस्तदन्यो
जीवउच्यते । यत्प्रसादात्सतुप्राणःकुरुतेस्वस्यधारणमितिवायुप्रोक्ते । कालकर्मस्वभावस्थोवासुदेवःपरःपु
मान् । अकरोदंडमुद्धृद्धमात्मप्रसवकारणमितिब्रह्मांडे । जीवइतिवा । प्राणंधारयतेयस्मात्सजीवःपरमेश्वरः ।
अजीवोपिमहातेजास्त्वथवाजीवयज्जगदितिस्कांदे ॥३४॥ अंडजातौपुमांसौद्वौहरिर्ब्रह्मातथैवच । अनादि
स्तुहरिस्तत्रब्रह्मासादिरुदाहृतइतिच ॥३५॥ हरेरवयवैर्लोकाःसृष्टाइतिविकल्पनं । साक्षात्सत्यमतोन्यस्माद्या

वहारिकमुच्यतइतिमात्स्ये ॥३६॥ ब्राह्मणोमुखमित्येवमुखाज्जातत्वहेतुतः । यथावदच्छुतौतद्वज्जीवोब्रह्मे
तिवाग्भवेदितिब्राह्मे ॥३७॥ इतिद्वितीयतात्पर्येपंचमोऽध्यायः ॥५॥ ॥ ॥
[3]तीर्थानांशास्त्राणां ॥३॥ यांज्ञिकारोममूलस्थारोमांतस्थास्तुतत्परे । उद्भिदोवासुदेवस्यालिंगगास्तुजरायुजा
इतिपाद्मे । हरेःश्मश्रुवाश्रयाविद्युच्छिलालोहानखाश्रयाइत्याग्नेये ॥५॥ ब्राह्मणवैश्यादीन्वर्जयितुंप्रायश
इति । मोक्षःशांतिश्चशरणंनिर्वाणंचाभिधीयतइतिब्राह्मे । भजेखगेंद्रध्वजपादमूलमितिच । स्वोत्पत्त्यंगे
षुदेवानामन्येषांपादमूलतः । मुक्तिस्तुविहिताविष्णोर्निर्दिष्टेषुयथावचइत्यध्यात्मे ॥६॥ [11,12]कुमारब्रह्मरुद्राद्या
हरेर्मध्यात्समुद्गताइतिवामने।आत्मेतिमध्यदेहश्चसर्वदेहोपिवाभवेत्।मनोबुद्धिरहंकारश्चित्तंजीवश्चकथ्यते।
अथवास्वयमेवेतिवायुर्ब्रह्मेतिवाभवेत् । मुख्यतोब्रह्मपरममात्मशब्देनभण्यतइतिनाममहोदधौ ॥११।१२॥
देहेंद्रियादिभेदेननिर्भेदोपिहरिःस्वयं । भण्यतेकेवलैश्वर्यादनाद्यानंदचिद्घनइतिगारुडे ॥१-१४॥ सर्वंपुरुष
एवेतिभण्यतेभेदवज्जगत् । तदधीनंतुसत्तादियतोह्यस्यसदाभवेदितिब्रह्मतर्के । वितस्तिमात्रंहृदयमास्थाय
व्याप्नुतेजगदितिगारुडे ॥१५॥ [16]पश्यन्स्वधिष्ण्यंदेहंसबहिष्ठान्विषयानपि । एवमंडांतरंपश्यन्बहिःसर्वंचप

श्यतीतिवामने ॥१६॥ अव्यक्तमात्मनोऽन्नंचमहदादिविनाशिच । यदतीतःपरोविष्णुःसएवातोविमोक्षदइ
तिनारदीये ॥१७॥ स्वरूपांशोविभिन्नांशइतिद्वेधांशइष्यते । अनंतासनवैकुंठपद्मनाभाःस्वयंहरिः । जीवा
इमेविभिन्नांशाधर्माधर्मादिसंयुताइतिवामने । सर्वस्ययथावत्स्थितिविदः ॥ १८ ॥ त्रिमूर्धासन्हरिर्धत्तेद्युत्र
यंमूर्धभिस्त्रिभिः । अनंतासनवैकुंठनारायणपुराणितु । बहुलक्षोच्छ्रितेष्वेषुसवसत्यमृतोहरिरितिमात्स्ये ।
अनंतासनवैकुंठनारायणपुराणितु । त्रीणिधामानिवैविष्णोस्त्रिलोकाद्बहिरेवच । अदायदास्तुपुत्राणामुद्रि
क्तज्ञानचक्षुषः । नारायणपरादेवाएवंतान्याप्नुवंतिच ॥१९॥ सएवान्यस्वरूपेणशक्रलोकसमीपगः । इज्यो
यज्ञपुमान्नामज्ञानिनांगृहिणांपदं । यतीनांध्रुवलोकस्थोवनिनांमेरुमध्यगः । आदित्यमंडलस्थस्तुज्ञानिनांब्र
ह्मचारिणामितिब्रह्मांडे । त्रिपात्सएवभगवान्सर्वप्राणिषुसंस्थितः । निरन्नेषुचविद्वत्सुत्रिदशेष्वितरेषुचेत्य
ध्यात्मे । तस्माद्धरेरंडमभूदंडादपिचतुर्मुखः । सविराण्नामकस्तस्मादधिकोहरिरेवतु ॥२०॥२१॥ अंडाज्जा
तस्यतस्यान्यद्रूपंपद्मादभूद्धरेः । यदोभयात्मकोजज्ञेब्रह्मालोकपितामहः । तदैवसोतिरिक्तोभूच्छर्वपूर्वपरा
ज्जनात् ॥२२॥ त्रिलोकस्थानगंविष्णुमयजच्चसमाहितः । तद्रूपभूतांस्त्रींल्लोकान् पशून्कृत्वामहामनाइति

गारुडे ॥२३॥ [२६] सूत्रंमीमांसासूत्रं ॥२६॥ [२८] यस्मात्तमेवायजन् तस्मादिदंतस्मिन्नाहितं । नित्यंगृहीताःसत्त्वा
द्याजीववज्जडवन्नतु । मिथ्यामानात्स्वरूपत्वात्स्वातंत्र्याद्यहिरेवत्विति ब्रह्मतर्के ॥२८–३०॥ [३२] सदितिव्यक्तमु
द्दिष्टमसदव्यक्तमुच्यते । गम्यागम्यस्वरूपत्वात्तत्सत्तादिर्हरेर्यतः । अतस्तस्मादन्यदेवह्यनन्यदितिभण्यतइ
तिच ॥३२॥ [३५] सर्वजीवनिकायेषुब्रह्मवायूहरेर्विदौ । नचान्यस्तादृशोवेत्तायावद्वेत्तिहरिःस्वयं । तावत्तावपिनो
विष्णुंजानीतोलोकवंदिताविति ब्रह्मांडे ॥३५॥ [३८] स्वयमेवस्वरूपाणिमत्स्यकूर्मादिकान्यजः । स्वात्मन्येवेच्छ
यासृष्ट्वातैर्देवादीन्प्रपात्यसौ॥संयच्छत्यसुरान्विष्णुःकल्पेकल्पेजगत्प्रभुः॥तिरोहितंस्वरूपंचप्रकाशयतिशास्त्र
तइतिभागवततंत्रे ॥३८॥ ऋतंतदात्मनाज्ञप्तेःसत्यंसाधुत्वतःपरं । सम्यक्संस्थमदूष्यत्वाच्छुद्धंदोषोज्झितत्व
तः । केवलंतादृशाभावात्प्रत्यगंतरवस्थितेः । एतदेतादृशंतत्त्वंयोवेदसविमुच्यतइतिब्रह्मतर्के ॥३९।४०॥
यःशेतेप्रलयेविष्णुःशून्यनामामहाकृतिः । सतुनारायणोनामनराणामयनत्वतः । रूपंद्वितीयंभवतिदीपा
द्दीपांतरंयथा । सिसृक्षोस्तस्यपुरुषइत्याहुस्तद्विदोजनाः । सरमायाद्वितीयेतुरूपेप्रकृतिसंज्ञिते । वीर्यमाध
त्तपुरुषोमहांस्तस्मादजायत । योसौहिरण्यगर्भाख्यःपुरुषःसोपिभण्यते । श्रद्धेत्युक्तातुतत्पत्नीसापिप्रकृति

रुच्यते । प्रलयेत्वशरीरौतौविभागेनव्यवस्थितौ । शरीरंप्राप्यपुरुषात्संयोगंतौप्रचक्रतुः। ततःपुनर्महत्तत्त्वं प्रजातंजगदंकुरं । स्वस्यैवपुत्रतांयातमहंकारस्ततोजनीतिव्योमसंहितायां । पुरुषस्तस्यैवाद्योवतारः । कालादयोरूपवदस्वरूपमपिप्रियत्वात् । पुरुषाद्याहरेरूपंब्रह्माद्यास्तत्प्रियाःस्मृताः। स्वरूपभूतानैवैतेतत्सन्निधियुताअपीतिपाद्मे । कालोवस्तुस्वभावश्चप्रकृतिःप्राणएवच । मनश्चपंचभूतानिविकारास्त्रिगुणाअपि। नस्वरूपंहरेरेतत्तथाप्येषुहरिःस्थितइतिपाद्मे। सत्प्राणः। सदितिप्राणइतिश्रुतेः । द्रव्यंतुपंचभूतानिविकारोंडमुदाहृतं । विराजंगरुडंप्राहुःस्वराडिंद्रउदाहृतइतिषाड्गुण्ये । सर्वंतुरूपवद्विष्णोर्विशेषेणविभूतिमत् । अतिप्रियत्वान्नैवैतत्स्वरूपमपिभण्यतइतिस्कांदे । स्वतोमहत्वंतुमहोविशेषप्राप्तिशक्तिता। विभूतिर्लक्ष्मणोन्नाहोलक्ष्मीशब्देनभण्यतइतिब्रह्मतर्के । प्रधानत्वेनसर्वस्मान्मत्स्यकूर्मादयोहरेः । अवताराःश्रुतौख्याताःसएवैतेततःस्मृताः। नस्वरूपंतुब्रह्माद्याःस्मृतामायाविभूतयः । स्वेच्छयैषांविशिष्टत्वंकुरुतेतत्तथास्मृतइतिव्योमसंहितायां । यज्ञशब्दोदितौद्वौतुदेवौलोकपुरस्कृतौ। एकोनारायणस्तत्ररुद्रच्छिन्नस्तथापरः । सतुयज्ञाभिमानीस्यात्तत्पतिःकेशवःस्मृतइतिपाद्मे ॥४१-४५॥ इतिद्वितीयतात्पर्येषष्ठोऽध्यायः ॥६॥ ॥

क्रियाभिमानाद्यज्ञोसाविंद्रसूनुःप्रकीर्तितः । यज्ञेशत्वात्स्वयंविष्णुर्यज्ञोरुचिसुतःस्मृतइतिपाद्मे । हरिरिति
ज्ञात्वेशावास्यमित्यादिनानूक्तः । त्रयीश्रुतिर्नित्यवाक्वेदोनुवचनंतथेतिह्यभिधानं ॥ २ ॥ ॐमयींविष्णुप्र
धानां ॥४॥ मेतपतःसतः । सःनःअर्थे । सनात्पूर्वं । ब्रह्मणस्तपतःपूर्वंविष्णुर्जातउरुक्रमः । सर्वलोकहितार्था
ययेनरूपंप्रकाशितं । यश्चपातिसदालोकानजितोजयतांवरः । तस्माद्रुद्रःसमुत्पन्नःसर्वसंहारकृद्विभुः । एते
त्रिपुरुषाःप्रोक्ताःसृष्टिस्थित्यंतकारिणः । निमित्तमात्रंतौदेवौविष्णुःसर्वस्यकारणमितिस्कांदे ॥५॥ नरोनारा
यणश्चैवहरिःकृष्णस्तथैवच । चत्वारोधर्मतनयाहरिरेवत्रयोमतः । अनंतोनरनामात्रतस्मिंस्तुनरनामवान् ।
विशेषेणस्वयंविष्णुर्निवसत्यंबुजेक्षणः । तस्माच्चतुर्धाधर्मस्यजातोविष्णुरितीरितइतिषाड्गुण्ये ॥६॥ अवता
रोमहाविष्णोर्वासुदेवइतीरितः । योध्रुवायनिजंप्रादात्स्थानमन्यानधिष्ठितमितिप्रकाशसंहितायां ॥८॥ पृथु
र्नाममहाराजस्तत्रविष्णुःस्वयंप्रभुः । पृथुनामाचतुर्बाहुःप्रविष्टस्तेनचार्थितइतिमहासंहितायां ॥९॥ यद्रूपंप
रमहंसप्राप्यंपदमामनंति ॥१०॥ छंदांसिचमखाश्चैवदेवालोकाश्चसर्वशः । सर्वेविष्णौस्थितायस्मादतःसर्व
मयोह्यसावितिमहासंहितायां ॥११॥ क्षोणीमयनौकाश्रयत्वात्क्षोणीमयः ॥१२॥ [१६]हरिस्तापसनामासौजा

तस्तपसिवैमनुः। गजेंद्रंमोचयामाससस्सर्जचजगद्विभुरितिमात्स्ये॥१६॥ ऐंद्रंपदंनांतरीयंफलंतुहरितोषणं। जगद्धातुर्बलेर्यस्मादानंदोद्रिक्तताभवेदितिब्रह्मतर्के। शीर्षाख्यंमानं॥१८॥ ऐतरेयोहरिःप्राहनारदायस्वकांतनुं। यत्प्रापुर्वैष्णवानान्येयद्दत्तेनसुखंपरमितिब्राह्मे॥१९॥ मन्वंतरेषुभगवान्चक्रवर्तिषुसंस्थितः। चतुर्भुजोजुगोपैतद्दुष्टराजन्यनाशकः। राजराजेश्वरेत्याहुर्मुनयश्चक्रवर्तिनं। वीर्यदंपरमात्मानंशंखचक्रगदाधरमितिसत्यसंहितायां॥२०॥ २३ प्राणादिकलेशः॥२३॥ दूरस्थासुहृद्यस्यभगवतःसदूरेसुहृत्। सुशोषोग्निः। अग्निःसुशोषःकक्षघ्नस्तिमिरारिर्हिरण्यदइतिह्यभिधाने॥२४॥ विनेष्यतिविनाशमेष्यति। दारहर्तुःभगवतः॥ धनुर्विस्फूर्जितैर्नष्टोरावणःपूर्वमेवतु। पुनःशरैराममुक्तैःसानुबंधोविनश्यतीतिस्कांदे॥२५॥ रामएकोह्यनंतांशस्तत्ररामाभिधोहरिः। शुक्लकेशात्मकस्तिष्ठन्रमयामासवैजगदितिब्राह्मे। विष्णोर्नान्येनकर्माणिपरेषांतन्निबंधनमितिमात्स्ये॥२६॥ सहस्रधनुषस्तूर्ध्वंद्युशब्देनापिभण्यतइतितंत्रमालायां। इतरथाविष्णुर्नचेत्। स्वमहिमनिबंधनत्वेननभाव्यं॥२७॥ दिव्यमिवस्तुत्यमिव। तदपेक्षया। अन्येषांस्तुत्यमेवयत्तस्यतच्चदिव्यमिव॥२९॥ ३१ अन्यथाज्ञानहेतुर्यावाक्सजल्पिःप्रकीर्तितेतितंत्रमालायां॥ यत्तुसर्वात्मनाज्ञानं

निशासापरिकीर्तितेतिकौर्मे ॥३१॥ [३३]कैंलपदंचआयतंच । सप्तस्वरसमाहारोमूर्च्छनेतिप्रकीर्तितेतिगांधर्वे
॥३३॥ विद्वेषिणोप्युदासीनाभक्ताअपिनसंशयः । हरेर्हिसदनंयांतिव्यक्तंभक्तैस्तुगम्यते । आरभ्यतमआ
मुक्तेःकृष्णस्यसदनंयतः । अव्यक्तहरिलोकत्वादन्येषामन्यलोकतेतिबृहत्संहितायां ॥३४॥ रामभीमार्जुना
दीनिविष्णोर्नामानिसर्वशः । रमणाभयवर्णाद्याःशब्दवृत्तेर्हिहेतवः । हरिर्हितत्रतत्रस्थोरमणादीन्करोत्य
जः ॥ अतस्तस्यैवनामानिव्याजादन्यगतानितु । व्यवहारप्रवृत्त्यर्थंदुष्टानांमोहनायचेतिस्कांदे ॥३५॥ तृती
येसप्तमेचैवषोडशेपंचविंशके । अष्टाविंशेयुगेकृष्णःसत्यवत्यामजायत । व्यासाचार्यस्तुपूर्वेषुचरमेस्वयमेव
तु । विव्यासवेदांश्चक्रेचभारतंवेदसंमितमितिच ॥३६॥ [३९]हरीच्छयाविभूतिर्याब्रह्मादीनांसदाभवेत् । इच्छया
वाबहुविधस्तेषुविष्णुःस्वयंस्थितः । अतोमायाविभूतित्वंतेषांमत्स्यादिकाःस्वयमित्यध्यात्मे ॥३९॥ [४१]विर्दुर्नां
तं अनंतत्वात् ॥४१॥ देवमायांविदंति । संसारमतितरंतिच ॥ ४२ ॥ [४६]तंत्परायणास्तच्छीलास्तच्छिक्षाश्च
॥४६॥ अव्यक्ताद्यनहंमानादात्मतत्त्वंहरिःस्मृतः । अशब्दश्चाप्रसिद्धत्वाच्छांतःपूर्णसुखत्वतइतिब्रह्मतर्के
॥४७॥ [४९]भावस्वभावोभक्तिस्वभावः । तेननिर्मितस्यसत्पुरुषस्यप्रसिद्धः । भावोभक्तिःप्रणामश्चप्रावण्यमपि

चादरइत्यभिधानम् ॥४९॥ सत्तादिर्यत्स्वतोविष्णोस्तस्मादन्यःससर्वतः । यत्सत्तादिरतोन्यस्यनान्यत्वंभे
दिनोपित्वितिब्रह्मांडे ॥५०॥ [५३]आक्षिप्यतेकिमित्येतद्यत्राल्पफलताभवेत् । वस्तुनोयस्यचाल्पत्वंपुंसोवानेति
चोच्यतइतिप्रकाशसंहितायां ॥५३॥ इतिद्वितीयतात्पर्येसप्तमोऽध्यायः ॥७॥ ॥
[११]निर्जीवयवैःसृष्टः बाह्यावयवालोकैःकल्प्यंते ॥११॥ जीवे[१४]कर्मसमावापःपरमेश्वरेणगृह्यते । गुणिनांमहदा
दिजीवानांसामर्थ्येपरिमाणं देवासुरेभ्योमघवानित्यादि ॥१४॥ श्रेणीर्[१८]नामंगरक्षकाणांयुद्धेषूच्यते ॥ [१९]हेतुल
क्षणंब्रह्मलक्षणं ॥१८।१९॥ योगतोलिंगभंगःपूर्वोक्तः । पानेनतेदेवेत्यादिपश्चात् ॥२०॥ [२३]द्वैधावावात्मा
यातद्रूपातद्दशाचेति । तद्दशयासंसारयति स्वरूपयाविमोचयत्युदास्तेतद्दशांविमुक्तस्यइतरयैनंरमयत्येष
आत्मैषआनंदइतिसौकारायणश्रुतिः ॥२३॥ [२५]यस्मादनुतिष्ठंतितस्मात्परमेष्ठीप्रमाणं ॥२५॥ [२७]बालोपिसगुरु
त्वेनमुनिभ्योब्रह्मणायतः । दत्तोऽतोब्रह्मरातेतिनामवैयासकेरभूदितिब्राह्मे ॥२७॥ यत्रब्रह्मांतरोत्पत्तिःब्रह्म
कल्पःसईरितइतिच ॥२८॥ इतिद्वितीयतात्पर्येअष्टमोध्यायः ॥८॥ ॥ ॥
[१]परस्यअर्थव्यतिरिक्तस्य । यदधातुमतइत्यस्यह्युत्तरं ॥ अशरीरस्यजीवस्यशरीरोत्पत्तिकारणं । ईश्वरेच्छा

प्राथमिकातांविनानहिकिंचन ॥१॥ द्वितीयाप्रकृतिःप्रोक्तातद्रूपाहिगुणास्त्रयः । तेषांसंपातजोभावोममा
हमितियामतिः । देहात्परस्यदेहित्वमहंभावमृतेकुतः । यथारजस्तमोभावैर्विनास्वप्नोनजायते । निद्राका
माद्यभावेनतद्वद्देहःक्रतान्विना । तस्मात्प्रकृत्यैवपुमान्मानुषादिविकारया । मानुषादिरिवाभातिनित्यचै
तन्यरूपवान् ॥ २ ॥ यदास्वरूपंजानातिकालप्रकृतिवर्जितं । वासुदेवप्रसादेनतदामुक्तोभवत्यसावितिभ
विष्यत्पुराणे ॥३॥ यतोभगवदुक्तंप्रमाणमतस्तदुक्तंपुराणंत्वत्प्रश्नानामुत्तरत्वेनवक्ष्ये ॥४॥ तपोब्रह्म । तपसो
ध्यजायतेतिश्रुतेः । अखिललोकप्रकाशनंततदालोचयामास । तपतांतपीयानित्यनेनात्युत्तमोत्तमत्वमु
क्तंभवति । महान्महीयसामादिंब्रूयादत्युत्तमोत्तमं । यत्राधिकंवदेत्किंचिज्ज्ञेयोर्थस्तत्रचाधिकइतिव्यासनि
रुक्ते । तपोरूपंपरंब्रह्मब्रह्माचिंतयदंजसेतिषाड्गुण्ये ॥८॥ यत्यतः । यत्तदित्यादयःशब्दाःपंचम्यंताःप्रकी
र्तिताइतिच ॥९॥ मायातीतत्वात् ॥१०॥ प्रेंखस्थिताःयाःविभूतयः । सत्वंतुशोभनत्वंस्यात्तद्युक्ताःसात्व
तामताइत्यध्यात्मे ॥ १४ ॥ मुक्तैःस्वपार्षदैःपूर्वैर्ब्रह्माद्यैश्चैवसंयुतं । ब्रह्माददर्शतपसाभगवंतंहरिंप्रभुमिति
गारुडे ॥१५॥ इच्छाद्यामोचिकाद्याश्चअणिमाद्याश्चशक्तयः । प्रदिष्टावासुदेवाद्यादामोदरपरास्तथा । अं

गानिविमलाद्यास्तुप्रह्व्याद्यात्मादिकामताः । एवंषोडशभिश्चैवपंचभिश्चहरिःस्वयं । चतुर्भिश्चवृतोनित्यंत
त्स्वरूपाश्चशक्तयइतिभागवततंत्रे ॥१६॥ [22]मनीषितंतपः ॥२२॥ कर्मविमोहिते । इदंकार्यमित्यजानति ।
हृदयंप्रियं । प्रियंहृदयमुद्रिक्तंकांतमित्यभिधीयतइत्यभिधानात् ॥२३॥ तपःप्रियंसदाविष्णोस्तपसैवाप्यते
हरिः । स्वयंचतपसैवेदंबिभर्तिज्ञानमेवहि । तपःशब्दाभिधंप्रोक्तंज्ञानरूपोहरिर्यतः । ज्ञानवीर्योज्ञानबलोज्ञा
नानंदउदाहृतइतिबृहत्संहितायां ॥२४॥ [31]येनयेनयथाज्ञात्वानियतंमुक्तिराप्यते । तद्विज्ञानमितिप्रोक्तंज्ञानं
साधारणंस्मृतमितिवामने ॥३१॥ [32]परंस्वतंत्रंन । विष्णोरधीनंप्राक्सृष्टेस्तथैवचलयादनु । अस्यसत्वप्रवृ
त्त्यादिविशेषेणाधिगम्यते । स्वातंत्र्यंस्थितिकालेतुकथंचिद्बुद्धिमोहतः । प्रतीयमानमपितुतस्मान्नैवेतिगम्य
ते । जनिष्येहंलयिष्येहमितिनह्यभिसंधितः । अतोजीवनमप्येतद्ब्रवेदीशाभिसंहितं । अतःस्वरूपभेदेपि
ह्यात्मैवेदमितिश्रुतिः । वदत्यस्येशतंत्रत्वाद्यथाशक्तस्वसन्निति । विद्यंतेहितदाजीवाःकालकर्मादिकंतथा ।
कान्यथाहिपुनःसृष्टिःपूर्वकर्मानुसारिणीतिब्रह्मतर्के । त्वमेतच्चपरंनभवेत् । स्वतंत्रंन ॥३३॥ अर्थविदिवप्र
१३६ तीयते । नचपरमात्मन्यर्थवत्प्रतीयते । अर्थंप्रयोजनमृते । नहिजीवप्रकृतिभ्यामीश्वरस्यार्थः । मुख्यतोवि

ष्णुशक्तिर्हिमायाशब्देनभण्यते । उपचारतस्तुप्रकृतिर्जीवश्चैवहिभण्यतइतिच । यथाभासोजीवः। सर्वंपरे
स्थितमपिनैवतत्रेतिभण्यते । यतोहरेर्नजीवेनजीवनंनहरौततः । जीवःप्रकृतिरप्यत्रयतोनैवहिबंधकृत् ।
कर्मचाफलदातृत्वात्कालश्चापरिणामनात् । यथाछत्रधराद्यास्तुरथस्थाअपिसर्वशः । रथिनोनैवभण्यंतएवं
हरिगताअपि ॥३४॥ यथामहांतिभूतानिशरीरेषुबहिस्तथा। एवंहरिश्चभूतेषुबहिश्चव्याप्तिहेतुतः । तस्मात्त
त्स्थोनतत्स्थश्चप्रोच्यतेहरिरीश्वरइतिच ॥३५॥अन्यभावाभावकालेदेशेचतद्विद्यमानाविद्यमानशक्तिमांश्चे
त्यन्वयव्यतिरेकौ॥३६॥सर्वस्यापिप्रधानत्वात्सर्वमयईर्यतइतिच॥३९॥मायांमाहात्म्यंविविदिषुः॥अन्येषांमा
हात्म्यपतेः । मुख्यतोविष्णुमाहात्म्यंमायाशब्दोदितंभवेत् । प्रधानत्वाच्चमातृत्वान्मेयत्वंचैवतस्यहीतिच
॥४२॥ हरिर्व्यासादिरूपेणसर्वज्ञोपिस्वयंप्रभुः । शृणोतिनारदादिभ्योमोहायैषांप्रसिद्धयइतिपाद्मे ॥४५॥
विराड्ब्रह्मासमुद्दिष्टस्तद्गतःपरमोयतः । अतोवैराजमित्येनमाहुरीशत्वतोविराडितिबृहत्संहितायां ॥४६॥
इतिद्वितीयतात्पर्येनवमोऽध्यायः ॥९॥ ॥ ॥ ॥ ॥८.९॥
महदाद्यंडपर्यंतःसर्गोंडेब्रह्मणस्तुयः । अनुसर्गइतिप्रोक्तःपौरुषश्चेतिकथ्यते । पंचभूतसमूहेनजातःपुरुषउ

च्यते । बहुत्वात्तत्रभूतानांतावत्त्वात्तत्त्वमेकजमितिव्योमसंहितायां ॥३॥ [६]अनुप्रविश्यपरमंजीवस्यशयनंतु
यत् । सहैवशक्तिभिःस्वीयैरिच्छाद्यैरप्रकाशितैः । सन्निरोधइतिप्रोक्तोविमुक्तिर्यत्रमोक्षिणामितिनारदीये
॥ ६ ॥ सृष्टिस्थित्यप्ययाभासायद्बलाद्यत्रचस्थिताः । तद्ब्रह्मजगदाधारंवासुदेवेतितद्विदुरितिभागवततंत्रे
॥७॥ आधिभौतिकेनरूपेणहिचक्षुःप्रकाशयोःसम्यक्त्वपरिज्ञानं ॥८॥ सुप्तावपियःसर्वंवेत्तिजीवानांसपरः ।
स्वप्नेनशारीरमभिप्रहत्यासुप्तःसुप्तानभिचाकशीतीतिश्रुतेः । सुष्ठ्वाश्रयाणामप्याश्रयः ॥९॥ विनिर्गतःप्रका
शितः । अंडंप्रविष्टोयोविष्णुःसोंडंभित्त्वाप्रकाशितः ॥१०॥ सोपोसृजत्ततोनारानरोनाशात्परोयतइतिना
रायणाध्यात्मे ॥११॥ [१३]तत्तन्नियामकत्वेनबहुत्वंप्राप्तुमीश्वरः । अंडंस्ववीर्यंतत्स्थःसन्कामादंतस्त्रिधाव्यधादि
तिच ॥ १२ ॥ अंतस्थितहरेःकामादंडेब्रह्माततोजनि । तत्रदेवाश्चसंजाताःपुनस्तत्त्वात्मकाःप्रभोरितिच
॥१४॥ [२७]मेलादिकंकदाचित्तुब्रह्मालोकाभिपत्तये । आत्मनोनिर्ममेकामात्सर्वेषामभवत्ततः । वशित्वात्तस्यदि
व्यत्वादिच्छयाभवतिप्रभोरितिच ॥२७॥ [३३]स्थूलंभगवतोरूपंब्रह्मदेहउदाहृतः । तत्तंत्रत्वाच्चसूक्ष्मंचशंखचक्र
गदाधरमितिचाध्यात्मे ॥३३॥ निर्विशेषणं । निरतिशयं । अस्यकाव्यस्यकवयोनसमर्थाविशेषणइति

 वत् ॥३४॥ मायासृष्टेजगतियेअविपश्चितः ॥३५॥ नामैववाचकत्वेननामरूपक्रियाअपि । वाच्यत्वेनहरि 
 र्देवोनियामयतिचैकराडितिच । कर्तृत्वात्तुसकर्मासौनिष्फलत्वादकर्मकइतिच ॥३६॥ ३७।४० प्रजापत्यादी
न्धते ॥३७-४०॥ तामसास्तामसादैत्याःप्रधानादेवशत्रवः । तामसाराजसास्तेषामनुगास्तेषुसात्विकाः । 
अनाख्यातासुराःप्रोक्तामानुषादुष्टचारिणः । राजसास्तामसाश्चैवमध्याराजसराजसाः । राजसाःसा
त्विकास्तत्रमानुषेषूत्तमागणाः । देवाःपृथगनाख्याताःस्मृताःसात्विकतामसाः । अतात्विकास्तथाख्या
ताःस्मृताःसात्विकराजसाः । सात्विकाःसात्विकास्तत्रतात्विकाःपरिकीर्तिताः । तेषांचसात्विकाःशेषग
रुत्मद्रुद्रतत्स्त्रियः । ततोपिदेवीब्रह्माणीब्रह्माचैवततःस्वयं ॥४१॥ सात्विकेषुत्रिषुयदात्वेकस्यप्रतिबाधनं ।
रजस्तमोभ्यांविष्णुर्हितदाप्रादुर्भवत्यजः । राजसांस्तामसान्हत्वासात्विकान्वर्धयिष्यतीतिस्कांदे ॥४२॥
मत्स्यादिरूपीपोषयतिनृसिंहोरुद्रसंस्थितः । विलापयेद्विरिंचस्थःसृजतेविष्णुरव्ययइतिवामने ॥४३॥ भग
वत्तमः । नापुरुषः ॥४४॥ जन्मकर्माणिविधीयतइतिक्रियाविशेषणं । प्रतिषेधायबंधस्यजीवानांपरमेशि 
तुः । स्वेच्छयैवतुकर्तृत्वंनित्यारूढंचिदात्मकमितिभविष्यत्पुराणे । रुपउपरिभावइतिधातुः । सुभद्रांरथमा

रोप्येत्यादिवच्च । स्वाभाविकीज्ञानबलक्रियाचेतिच ॥४५॥ अन्यकल्पानांसाधारणः । यत्रैवप्राकृतवैकृताः
सर्वसर्गाःअन्यब्रह्मकल्पानांचसाधारणः॥४६॥इतिद्वि०ता०दशमोऽध्यायः॥१०॥ द्वितीयस्कंधःसंपूर्णः॥२॥
श्रीगुरुभ्योनमः ॥ [३]युद्धकालेतुविदुरस्तीर्थयात्रांगतोपिसन् । प्रायआस्तेगजपुरेपांडवानांव्यपेक्षयेतिस्कांदे
॥३॥ [६]यदाददाह।यदाकेशाभिमर्शःप्राप्तइतियदाशब्दोहेत्वर्थः । यदातदेतिहेत्वर्थेकालार्थेचापिभण्यतइत्यभि
धानं ॥६।७॥ [२१]सुहृद्विनष्टिंयदुकुलविनष्टिमेष्यां । विदुरस्तुप्रभासस्थःशापंसंक्षेपतोऽशृणोत्।यदूनांविस्तरात्प
श्चादुद्धवाद्यमुनामन्वितिस्कांदे । भारतविरोधाच्चान्यथा ॥ २१ ॥ [२३]प्रत्यंकंमुख्योविष्णुः । ब्रह्माप्रत्यंकवान्
विष्णुःसम्यग्लक्षणवत्तमइतितंत्रमालायां ॥२३॥ [२६]पद्मोब्रह्मासमुद्दिष्टःपद्माश्रीरपिचोच्यतइतिब्राह्मे। लोका
नांसुखकर्तृत्वमपेक्ष्यकुशलंविभोः । पृच्छयतेसततानंदात्कथंतस्यैवपृच्छयतइतिपाद्मे ॥२६॥ वरतर्पणेनभ
र्तृतर्पणेन ॥२७॥ [२९]आधिर्मनोवरूथंचआत्मास्वमितिचोच्यतइत्यभिधानं ॥२९॥ [३७]अघंव्यमुंचत् । पुनरपरा
धबुद्धिंहित्वाऽऽस्ते ॥ [४४]नदेहयोगोहिजनिर्विष्णोर्व्यक्तिर्जनिःस्मृतेत्याग्नेये । हरिःकर्ताप्यकर्तेतिफलाभावेन
भण्यतइतिच ॥४४॥ ॥ इतितृतीयेप्रथमोऽध्यायः॥१॥ ॥ [१३]त्रिलोकस्याज्ञानंबत । आनंदरूपंदृष्ट्वापि

लोकोभौतिकमेवतु।मन्यतेविष्णुरूपंचअहोभ्रांतिर्बहुस्थितेतिस्कांदे॥१३॥ असुराअपियेविष्णुंशंखचक्रधरं
रणे । भक्तिपूर्वमवेक्षंतेज्ञेयाभागवताइति । विद्विषंतितुयेविष्णुमृषिपुत्राअपिस्फुटं । असुरास्तेपिविज्ञेया
गच्छंतिचसदातमः।जीवद्वयसमायोगाद्धिरण्यकमुखाःपरे।भक्तिद्वेषयुताश्चस्युर्गतिस्तेषांयथानिजा ॥१९॥
कंसपूतनिकाद्याश्चबांधवादियुतायतः । जीवद्वयसमायोगाद्गतिद्वयजिगीषवः । सर्वथाभक्तितोमुक्तिर्द्वे
षात्तमउदीरितं । नियमस्त्वनयोर्नित्यंमोहायान्यवचोभवेदितिब्राह्मे ॥२४॥इतितृतीयतात्पर्येद्वितीयोऽध्यायः
॥२॥ ॥ भीष्मककन्यायाअर्थेसवर्णमात्रतयाआहूताः । एषांश्रियोजिहीर्षयाह्वानबुद्धिर्भगवताकृता ।
सुपर्णःसुपरानंदात्काकुत्स्थोवाचिसंस्थितेरितिपाद्मे ॥३॥ उत्तमैःसर्वतःसाम्यंकिंचित्साम्यमुदीर्यतइत्याग्नेये
॥९॥ केवलंभगवज्ज्ञानंसांख्यमित्यभिधीयतइत्यध्यात्मे ॥१९॥ सर्वदापिविरक्तःसन्भासयीतविरागिवत् ।
कादाचित्कःकुतस्तस्यलोकशिक्षार्थमिष्यतइतिपाद्मे । तेनापिविरागःप्रदर्शितः ॥२२॥ अतःकोन्योविस्रं
भंकुर्यात् ॥२३॥ ऐष्यच्चनिश्चितंयत्तदतीतत्वेनभण्यते । चक्रवत्परिवृत्तेर्वादुष्टानांमोहनायवेतिस्कांदे ॥२५॥
इतितृतीयतात्पर्येतृतीयोऽध्यायः ॥३॥ ॥ आत्ममायायाःआत्मसामर्थ्यस्यगतिंपूर्वमेवावलोक्य । ज्ञात्वा

कतिपयैर्वर्षैः पूर्वमेवजनार्दनः । मौसलंज्ञानसंतत्याउद्धवंबदरींनयत् । सज्ञानंतत्रविस्तीर्यपुनर्द्वारवतींय
यौ । पूर्वमेवोपदिष्टोपिहरिणाज्ञानमुद्धवः । स्वर्गारोहणकालेतुपुनःपप्रच्छकेशवं । पुनःश्रुत्वाबदर्यांतुवर्ष
त्रयमुवासह । ज्ञानंसंस्थाप्यपश्चाच्चस्वेच्छयास्वर्गतःप्रभुरितिगारुडे ॥३-९॥ [31]आकृतिंपृथिवीं । शरीरमाकृ
तिर्देहःकुःपृथ्वीचमहीतथेत्यभिधानं । पृथिवीलोकसंत्यागोदेहत्यागोहरेःस्मृतः । नित्यानंदस्वरूपत्वाद
न्योनैवोपलभ्यते । दर्शयेज्जनमोहायसदृशींमृतकाकृतिं । नटवद्भगवान्विष्णुःपरज्ञानाकृतिःस्वयमिति
स्कांदे । राजन्परस्यतनुभृज्जननाप्ययेहामायाविडंबनमवेहियथानटस्येतिच ॥२८-२९॥ [31]उत्तमैरधिकत्वंवा
साम्यंवाविजयोपिवा । उच्यतेपितुनीचानांमोहार्थंवाप्युपेक्षया । मूढदृष्ट्यनुसाराद्वाकिंचित्साम्येनवाक्वचि
दितिब्रह्मतर्के ॥३१॥ इतितृतीयतात्पर्येचतुर्थोऽध्यायः ॥४॥ ॥ [1]ऋतेअवगमे । ऋगतावितिधातोः । ते
षांतात्पर्यावगमेकृष्णकथामृतौघएवासौयतः ॥१०॥ [12]यस्मिन्भारतेहरेःकथायाग्राम्यसुखानुवादैर्मतिर्नगृ
हीता । भारतान्नाधिकंविष्णोर्महिमावाचकंक्वचित् । भारतान्नविरागायभारतान्नविमुक्तयइतिपाद्मे ॥१२॥
साग्राम्यसुखानुवादैर्नगृहीता । हरेःकथायांविवर्धमानामतिः ॥१३॥ पंचमोऽध्यायः ॥५॥ ॥ [1]आत्मनां

विभुर्जीवाधिपतिः ॥१॥ परमात्मायतोजीवंमेनेऽसंतमशक्तितः । असन्नसावतोनित्यंसत्यज्ञानोयतोहरिरि
त्याश्रये ।शक्यत्वाच्छक्तयोभार्याःशक्तिःसामर्थ्यमुच्यतइतिब्रह्मतर्के।सुप्तिस्तुप्रकृतेःप्रोक्ताअतीवभगवद्रतिः।
अनास्थान्यत्रचप्रोक्ताविष्णोश्चक्षुर्निमीलनमितिव्योमसंहितायां ॥२॥ अंशोजीवः । कालजीवगुणादीना
मभिमानीचतुर्मुखः । सर्वजीवाभिमानित्वादंशइत्येवचोच्यतइतिब्राह्मे ॥६॥ कालमायांशयोगतः । काला
त्परिणामात् । प्रकृतेर्हिरण्यगर्भाच्च ॥१३॥ कालमायांशलिंगिनः । तन्निमित्तशरीराः । हिरण्यगर्भस्यैव
कालाभिमानीजीवाभिमानीतिद्विविधंरूपं । कालजीवाभिमानेनरूपद्वंद्वीचतुर्मुखइतिपाद्मे ॥ १६ ॥ ब्रह्म
विद्याहरेश्छायातदंशोहिसुरेष्वपि । सर्वविद्याःश्रियःप्रोक्ताःप्रधानांशश्चतुर्मुखइतिब्राह्मे ॥१८॥ द्युसरितो
धरायाश्च ॥१९॥ वीर्योश्चप्रकृतेर्विष्णोर्जयोभक्त्यैवनान्यथेतिदत्तात्रेययोगे ॥२५॥ त्रिभिरात्मभिःकालमा
यांशैः ॥२६॥ सत्प्रमुखामहदादयः ॥२९॥ इतितृतीयतात्पर्येषष्ठोऽध्यायः ॥६॥ ॥ शक्यत्वाच्छक्तयोवि
ष्णोर्महदाद्यारमातथा । स्वरूपशक्तिःशक्तित्वान्मुख्यशक्तिर्हिसायतइतिब्रह्मतर्के । समेत्याऽसतीनांअस ॥८१२॥
मेतानांप्रसुप्तलोकतंत्राणां।अनाविर्भूतलोकसृष्टिशक्तीनां । तनुतेयेनकार्यंयत्तंत्रंसाधनमुच्यते । कारणानां

स्वशक्तिर्वाप्रधानंसाधनंयतइतिब्रह्मतर्के ॥१॥ शब्दाद्यानभआद्याश्चमनोयुक्तेंद्रियाणिच । अहंकारोमहांश्चै
वत्रयोविंशतिकोगणः । देवतेंद्रिययोरैक्यान्नपृथग्गणनंतयोः । प्रकृतिस्तुचतुर्विंशापंचविंशोहरिःस्वयं ।
यदाजडांशस्वीकारोजीवस्तत्पंचविंशकः । षड्विंशकोमहाविष्णुःश्रियावासप्तविंशकइतितत्त्वनिर्णये । त्रयो
विंशतितत्त्वानिप्राविशद्रमयासह । कालाख्ययास्वयंविष्णुःशक्यत्वाच्छक्तिरूपया ॥२॥ सर्वचेष्टकरूपेणस्व
सामर्थ्येनकेशवः । तानिभिन्नानितत्त्वानियोजयामासचांशतइतिच ॥ ३॥ मात्राभिरंशैः । ईश्वरोदैवमु
द्दिष्टंसर्वस्यापिप्रभुत्वतइतिच ॥४॥ आत्मशक्तिःप्रकृतिः ॥७॥ पुरुषेणात्मभूतेनेतियोंडमसृजत्सएषइत्युक्तः ।
आद्योवतारोविष्णोस्तुपुरुषोनामकीर्तितः । असृजत्समहत्तत्त्वंसएवांडंसमाविशत् ॥ ८ ॥ सब्रह्मणोहृदि
स्थत्वाद्धृदयंचेतिकीर्त्यतइतिच । प्राणादिपंचकंचैवतथानागादिपंचकं । सनागकूर्मकृकलदेवदत्तधनंजयाः ।
एवंतुदशधाप्राणअध्यात्मादित्रिधाखिलाइतिचव्योमसंहितायां । प्राणःप्रथमजोयस्तुप्रधानोवायुरीरितः ।
त्वगात्माद्यास्तुतत्पुत्राद्दिधाभूतमुदाहृतमितितत्त्वनिर्णये ॥ ९ ॥ अहंसत्वमितिद्वेधाब्रह्मनाड्याअवांतरं ।
कर्तृनामाह्यहंकारस्त्वहंनाड्यांव्यवस्थितः । तत्त्वनाड्यास्तथाचित्तमभिमानोहरस्तथा । अहंनाड्यांसत्वना

भागव० ज्यांब्रह्माचैवव्यवस्थितः । आत्मनाज्यांतथाबुद्धिस्तत्रस्थश्चबृहस्पतिरितिच ॥२४-२६॥ [३०]ब्रह्माभिमानीतुभृ तात्पर्य०
॥ २६ ॥ गुरजनिब्रह्मणोमुखात् ॥ ३० ॥ क्षत्राभिमानीतुमनुर्ब्रह्मबाह्वोरजायत ॥ ३१ ॥ ऊर्वोर्विडभिमानीचवास्तुः ३ । ८
॥३२॥ पादात्कृतिस्तथा।एतेपूर्वंहरेर्जाताब्रह्मणस्तदनंतरं । एवंरुद्राच्चवायोश्चतदंतस्थहरेर्यतइतिषाड्गुण्ये
॥३३॥ [३४]अधिकत्वाद्देवशब्दोदैवतेष्वधिकोयतः । दैवंहरिःकर्ममूलंकृतिरित्येवभण्यते । व्याप्तत्वादात्मशब्द
श्चश्रीपतित्वाच्चमाधवइतिच ॥३५॥ [३७]आत्माब्रह्मानवेद । अहंरुद्रः । गुणपूर्तेरात्मशब्दोब्रह्माहीनत्वतोहरः ।
अहंशब्दस्तथाप्येतौनजानीतोहरिंपरमितिब्राह्मे । भगवतोमायांभगवतोमहिमानं । मायातुमहिमाप्रोक्ता
प्राचुर्येतुमयज्यतइतिपाद्मे । आत्मवर्त्मापरमात्मगतिः ॥३९-४०॥ इतितृतीयतात्पर्येसप्तमोऽध्यायः ॥७॥
[३]क्रीडायाः । अर्हस्यापूर्णसुखस्य । अन्यतःअरतेः ॥३॥ [६]दुर्भगक्लेशशरीरस्थत्वात्तस्यापिभाव्यं । नचतद्यु
ज्यते ॥६॥ [९]सेयंभगवतोमाया । अयंहिभगवन्महिमा । तस्यकार्पण्यंबंधनादिनयुज्यतइतियदुक्तंतन्न्याय्य
मेव । दुर्भगादिशरीरस्थस्यापितद्दोषास्पर्शएवतन्महिमेत्यर्थः । कथंदेहपरोदेवोनलिप्येतहिबंधनैः । कथं ॥८१३॥
नदुःखीसभवेद्दुःखीचेदीश्वरःकुतः । महिमापरमस्यैषयद्देहस्थोनबाध्यते । यददुःखीसईशानोमायेतिमहि

मोच्यते । प्रधानंमयइत्याहुःप्राधान्यान्मयताभवेत् । अतोमायामयंप्राहुर्महामायमनामयमितिभाल्लवेय श्रुतिः । अलुप्तबोधरूपत्वान्नासौप्राकृतदेहवान् । नचसृष्ट्यादिकंभ्रांतिर्भ्रांतिवादाहिदानवाः । अतोभ्रांत्यादिसंबंधोनास्यक्वचनयुज्यते ॥९॥ भ्रांत्याजीवस्यसंसारईशज्ञानाद्विलीयते । भ्रांतिर्देहाद्यभिमतिरीशज्ञानाद्विनश्यतीतिब्रह्मांडे ॥१०-१२॥ इंद्रियोपरामाख्यःपुरुषार्थोमुक्तिः ॥ १३॥ [१५] स्वरूपसामर्थ्याश्रयं । यद्व्याहृतं । अपार्थंनिर्मूलंचदेहसंबंधित्वाद्याभाति । विश्वमूलंब्रह्मचयन्ममज्ञानाद्बहिर्नभवति । तस्मादुभयत्रधावति । तस्मादंतरितोस्मि । तथापितांप्रतीतिंपराणुदे। आत्मनस्तुगुणाभावंवदतोनत्वसत्यता। अपृष्टस्यदमार्थंचगुणायैवभवत्यपीतिव्यासस्मृतेः । विद्यमानमप्यनुभवमन्यथावदतिविदुरः । द्रोणद्रौणिकृपाः पार्थाभीष्मोविदुरसंजयौ । येचान्येतत्रदेवांशाःसम्यक्तत्त्वापरोक्षिणइतिस्कांदे ॥१५-१८॥ [२१] विराजंब्रह्माणं । ब्रह्माणंप्राविशद्विष्णुःसहस्राक्षःसहस्रपादितिब्राह्मे ॥ अनुप्रविश्यब्रह्माणंप्राणंदशविधंतथा । इंद्रियाणींद्रियार्थांश्चवर्णांश्चैवासृजद्धरिरितिगारुडे ॥२१॥ [२९] विकर्षणंविभागः॥२९॥ इतितृतीयतात्पर्येअष्टमोऽध्यायः ॥८॥ [४] आधारआश्रयोधिष्ण्यंनिधानंचाभिधीयतइत्यभिधानं ॥४॥ [१३] उदकंवायुनाशुष्कंभिन्नंपद्ममभूद्धरेरि

तिपाद्मे ॥१३॥ आत्माविष्णुरस्ययोनिः ॥१४॥ पद्मसंस्थाद्धरेस्तत्रब्रह्माजनिचतुर्मुखइतिच । सर्वगुणावभा
संपृथिव्यात्मकं । पृथिव्यांहिसर्वेशब्दादयोगुणाअवभासंते । तस्यासनविधानार्थंपृथिवीपद्ममुच्यतइतिमो
क्षधर्मे ॥१५-१६॥ [१७]प्रधानवाचकस्त्वेकश्चानन्यःकेवलःस्वयमितिब्राह्मे ॥ सताब्रह्मणा । सब्रह्माचिंतयत् कुतो
नुपद्मंब्रह्मणःस्यादितीतिमैत्रायणश्रुतिः॥१८॥[२६]भिन्नमन्येभ्योविलक्षणं॥२६॥ तस्मा[२९]दव्यक्तमुत्पन्नंत्रिगुणंद्विज
सत्तमेतिमोक्षधर्मे॥२९॥[३१]सूर्येंदुवाय्वग्न्यादिभिस्त्रिधाम्नोविष्णोरगच्छद्भिःप्राधानिकैः। मुक्तवाय्वादिभिर्विष्णुं
वृतंब्रह्माददर्शह।तदन्याभावतोनान्यदतस्तत्स्रष्टुमैच्छतेतिब्रह्मांडे॥३१॥इतितृतीयतात्पर्येनवमोऽध्यायः॥९
[१]स्वतोनास्तितदधीनविद्यमानमप्यशुद्धं । यच्चस्वनानात्वंतदपिस्थानभेदादसदेवभाति । एकोपिस्थानना
नात्वान्नानेवहरिरीयते । सर्वांतर्यामिणस्तस्यनभेदोविद्यतेक्वचिदितिब्रह्मवैवर्ते ॥१॥ यन्नाभिपद्मभवनाद
हमाविरासं । यच्चेदंभगवत्स्वरूपमानंदमात्रंपश्यामि । यच्चाश्रितोस्मिअतःपरंनास्ति । अतोनज्ञायतइति
अवद्यमत्युत्तमापेक्षया । अनादिगृहीतमेवनेदानींगृह्यते । यत्तद्दिव्यंहरेरूपंक्षीरसागरमध्यगं । ज्ञानानंदै
कमात्रंचनततःपरमंक्वचित् । अनादिनित्यादव्यक्तात्तस्माज्जज्ञेचतुर्मुखइत्यध्यात्मे । भूतेंद्रियाणामात्मकं ।

यच्चाप्नोतीत्यादेः ॥२-३॥ हृंदिव्यक्तंतुयद्रूपंहरेर्गंधःसउच्यते । उत्तमानांतुपादेनसर्वंरूपंतुभण्यते । गंधगंध
वतोर्यस्मान्नभेदःक्वचनेष्यतइतिब्रह्मतर्के ॥५॥ मायाबलंभगवदिच्छाबलं । ज्ञेयत्वंदुर्घटस्यापिघटनाधि
कशक्तिता । अभेदईश्वरेणापिसृष्ट्यादावंतरंगता । उच्येतयस्याःसामायाहरेरिच्छाथवाबलं । भगवत्तंत्र
तायस्यास्तद्भार्यात्वंसुरूपता । उच्येतमायासातुश्रीर्दोषयुक्ताजडास्मृता । परिणामिनीचयस्यास्तुदोषा
श्चेतनतातथा । शैवलीनामसामायाजगद्बंधात्मिकासदेतिब्रह्मतर्के । ध्यायेमंस्येतथापश्येशृणोमीतिविभ
क्तता । जीवस्यतुहरेरिच्छाबलादिंद्रियभुक्तयइतिषाड्गुण्ये । इंद्रियाणांभोगार्थं । व्यर्थापियज्ञादिक्रियार्था
॥९॥ अर्थैरध्याहृतानिकरणानियेषां । अज्ञानंतुनिशाप्रोक्तादिवाज्ञानमुदीर्यतइतिस्कांदे ॥१०॥ तत्तद्वपु
स्तेषांप्रणयसे । यादृशोभावितस्त्वीशस्तादृशोजीवआभवेदितितंत्रसारे । तंयथायथोपासतेतदेवभवती
तिच ॥११॥ सर्वभूतदययासुरगणैर्हृद्याराधितस्त्वंबद्धकामैर्जनैरुपचितोपचारैर्नातिप्रसीदसि । आराधि
तोयोब्रह्माद्यैर्भक्तिज्ञानदयादिभिः । किंतस्यकामुकजनैःकृतयापरिचर्ययेतिसत्यसंहितायां ॥१२॥ ईर्शैस्या
१३७ पूर्णताज्ञानंविष्णोरन्यस्यचेशता । भेदस्तस्यावतारेषुजीवस्येशत्वमेवच । तथाजीवत्वमीशस्यजडाभेदस्त

योरपि । भेदमोहइतिप्रोक्तःससदानहरौक्वचित् । अन्येषांतत्प्रसादेनशनैर्यांतिसतामपीतिस्कांदे ॥ १४ ॥
भक्तिविवशाः । येभक्त्याविवशाविष्णोर्नाममात्रैकजल्पकाः । तेपिमुक्तिंव्रजंत्याशुकिमुतद्ध्यायिनःसदेति
व्योमसंहितायां ॥१५॥ ब्रह्मादिभावोविष्णोस्तुतन्नियामकताभवेत् । मत्स्यादितातत्स्वभावोनान्यथाक्व
चिदिष्यतइतिवामने । अनंतासनवैकुंठक्षीराब्धिस्थोहरिस्त्रिपादितिच ॥१६॥ नित्यज्ञानदृशानित्यंलवका
लमपीश्वरः । पश्येत्तात्कालिकंचैवतस्मादनिमिषोहरिः । कालस्यानिमिषत्वंचलवादेर्नित्यवीक्षणादितितं
त्रसारे ॥१७॥ [१९]अनिरस्तरतिर्नित्यरतिः ॥१९॥ [२३]स्वसामर्थ्यात्स्वकर्माणिरमयासहकेशवः । कुरुतेस्वयमेवै
षकानिचित्पुरुषोत्तमइतिनारदीये ॥२३॥ [२२]आत्मशब्दस्यमुख्यार्थोविष्णुरेकःसनातनः । संदोहदेहमनसोबु
द्धिजीवाःस्वयंतथा । ब्रह्माप्यमुख्याःक्रमशउत्कर्षोह्यात्मताभवेदितिप्रकाशसंहितायां ॥२२-२३॥ [२९]प्रार्थनम
पिमत्प्रेरणमेव ॥२९॥ तपआलोचनंप्रोक्तंविद्यानिष्ठाप्रकीर्तितेतिकपिलसंहितायां ॥ ३० ॥ देहेदेहेहरिस्त
स्मिँल्लोकाःसर्वेप्रतिष्ठिताः । अंगुष्ठमात्रेपिपरेपरशक्तिर्यतोविभुरितिच । आत्मनिस्थितेमयि ॥३१॥ [३३]स्वरू
पेणमयोपेतंहृदिस्थंजीवरूपंहिपरमेश्वरसहितंभवति । त्यक्त्वादेहाद्यात्मभावंजीवरूपेहृदिस्थिते । दृष्ट्वात्म

भावंतंचापिहरिपादाब्जसंस्थितं । यदापश्यत्यापरोक्ष्यात्तदामुक्तिंव्रजत्यसाविति दत्तात्रेययोगे ॥३३॥ [३८]भूतें
द्रियमनोबुद्धित्रिगुणादिषुसर्वशः । युक्तंनियामकतयापश्यञ्जानातिकेशवमितिच ॥३८॥ [३९]सौर्वज्ञादिगुणैर्यु
क्तंसत्वादिगुणवर्जितं । योजानातिहरिंतस्यप्रीतोभवतिकेशवइतिव्योमसंहितायां ॥३९॥ आधिकारिक
देवानांस्वाधिकाराधिकामनं । भवतिप्रीतयेविष्णोर्भक्त्याद्यैरपियत्सदेतिच ॥४०॥ निःश्रयेसंराज्यं । मो
क्षेपिरंजनीयामत्प्रीतिरेव । मुक्तस्यापिहरेःप्रीतिःसर्वतोप्यनुरज्यतइतिवामने ॥४१॥ सर्वतोपिप्रियोह्यात्मा
तस्यापिप्रियतांहरिः । आपादयतियत्तस्मात्स्वात्मनोपिप्रियोहरिरितिब्रह्मवैवर्ते ॥४२॥ इतितृतीयतात्पर्ये
दशमोऽध्यायः ॥१०॥ ॥ आत्मनिपरमेश्वरेमनआवेश्य ॥८॥ अनिमित्तस्यब्रह्मार्पणबुद्ध्याकृतस्य । अः
इतिब्रह्मेतिश्रुतेः ॥९॥ लक्षणंलक्ष्यमात्माचस्वरूपमितिकथ्यतइत्यभिधानं ॥ १० ॥ गुणव्यतिकरमाकरो
तितद्द्रष्टा । अप्रतिष्ठितोन्यत्र । सभगवःकस्मिन्प्रतिष्ठितइतिस्वेमहिम्नीतिश्रुतिः । तदुपादानं । गुणव्यति
करोपादानकर्तारं ॥११॥ सृष्ट्याद्यर्थत्वेनतस्यपुरुषस्य । ब्रह्मविष्णुमहेश्वरइतित्रीणिरूपाण्यात्मनासृष्टानि ।
ब्रह्मनिर्मातृकं । माययासामर्थ्येन । तत्रयत्संहर्त्रीश्वराख्यंरूपंतत्कालाख्यं । कलछेदनइतिधातोः । अथ

त्रयीवावप्रकृतिःसत्वंरजस्तमइतितांनारायणःपर्यपश्यदनन्यप्रतिष्ठःतंवाएतमाहुःपुरुषइतिपूर्णोह्येषभवति सत्रेधाबभूवैषांगुणानामुपादानायविष्णुर्वावसत्वस्यरजसोब्रह्मेशोनामतमसःसआविवेश । ब्रह्माब्रह्माणंनामचतुर्मुखंईशईशानंनामपंचमुखंयोवाईशईशानमाविवेशतंवाएनंकालइत्याचक्षतेकालइत्याचक्षतइतिसौकरायणश्रुतिः ॥१२॥ सृष्टिश्चप्रलयश्चैवसंसारोमुक्तिरेवच । देवाऋषिप्रभृतयोलोकाभूरादयस्तथा । अनाद्यनंतकालीनाःसर्वदैकप्रकारतः । जगत्प्रवाहःसत्योयंनैवमिथ्याकथंचन । येत्वेतदन्यथाब्रूयुःसर्वहंतारएवते । देवैर्ब्रह्मादिभिःशप्ताऋषिभिर्मानुषादिभिः । सेतिहासैस्तथावेदैःसर्वेयांत्यधरंतमः । सर्वब्रह्मत्ववेत्तारोजीवब्रह्मत्ववेदिनः । अन्यसाम्यविदोविष्णोर्विष्णुद्वेष्टारएवच । सर्वेयांतितमोघोरंनचैषामुत्थितिः क्वचिदितिस्कांदे ॥ १३ ॥ तामसस्यपदार्थस्यसत्वंहिलयकारणं । सात्विकस्यतमश्चैवतयोरपिरजःक्वचित् । गुणतोयंलयःप्रोक्तोद्रव्यतस्तुविरोधिना । कालतःकालसंख्याकोलयःसर्वस्यवस्तुनइतिब्रह्मतर्के । तमसोरजस्तुद्विगुणंरजसःसत्वमेवच । परिमाणतएवंस्युस्त्रयःप्रकृतिजागुणाः । तत्रसत्वंकेवलंस्याद्रजस्यपिशताधिकं । सत्वंरजःशतांशंतुतमस्तत्रप्रकीर्तितं । तमस्यपितथासत्वंतमसस्तुदशोत्तरं । तद्दशांशेनतुरजो

मूलजंयद्रजस्तुतत् । विलयेदशांशतःसत्वएकांशेनतमस्यपि । मिश्रितंभवतिह्येतांसाम्यावस्थांविदुर्बुधाः ।
यदातुतद्रजःसर्वंतमसासहसंगतं । तदात्वाहुर्महत्तत्त्वंतच्चतुर्भागसंभवं । तत्रत्रिभागोरजसएकोंशस्त
मसस्तथा । तदाहुर्ब्रह्मणोरूपंगुणवैषम्यनामकं । तदेवकेवलंसत्वमितरापेक्षयाभवेत् । श्रीर्मूलसत्वंविज्ञेया
भूर्मूलंरजउच्यते । मूलंतमस्तथादुर्गामहालक्ष्मीस्त्रिमूलिका । गुणेभ्योगुणमूलाच्चयोतीतःसजनार्दनः
॥१४॥ यद्रजोमूलरजसिमूलेतमसियद्रजः । तमश्चमूलेतमसिमहत्तत्त्वंतदात्मकं । दशांशास्तत्रसत्वंस्युरेकां
शोरजएवतु । तद्दशांशंतमोज्ञेयमहंकारस्तदात्मकः । सरुद्रस्तामसोज्ञेयोविरिंचापेक्षयैवतु । इतरापेक्षया
सत्वंसत्वाद्यास्तद्ददस्यच । तत्तमोंशात्सात्विकांशोमनआद्याःप्रकीर्तिताः । रजसोंशस्त्विद्रियाणितमसों
शश्चखादयइत्यादितत्त्वविवेके ॥ भूतानिद्रव्यशक्तीनिभूतेषुद्रवणंयतः । तथातन्मात्रशक्तीनिशब्दाद्यात्म
कतायतः । क्रियाशक्तीनिवागाद्यानींद्रियाणीतराणितु । ज्ञानशक्तीनिमनसादेवाश्चज्ञानशक्तयः । एते
षांमूलभूतत्वादहंकारस्त्रिशक्तिमान् । मानुषापेक्षयादेवाःसात्विकाःपरिकीर्तिताः । तत्रापिसात्विकाःप्रो
क्तास्तात्विकायास्तुदेवताः । तत्रापिसात्विकोरुद्रस्तत्रापितुचतुर्मुखः । अविकारौब्रह्मरुद्रौदेहभेदादिसंभ

वे । विकारवंतइंद्राद्यास्तस्माद्वैकारिकामताः । तएवेंद्रियरूपेणयतस्त्वतिविकारिणः । ज्ञानमात्रगुणोद्रि
क्तास्तस्मात्तैजसनामकाः । अविकारित्वयोग्यत्वंनिवृत्तंहींद्रियेषुतु । वैकारिकत्वनामापिततस्तेषांनविद्यते ।
यथाविप्रकुलेमूर्खोमूर्खइत्यभिधीयते । विद्यायोग्यत्वतःशूद्रोनमूर्खोमूर्खएवसन् । तामसानिहिभूतानि
किंचिद्व्यवहितत्वतः । ज्ञानस्यसुष्ठुज्ञत्वेपिपूर्णज्ञानोहरिःस्वयमितिच ॥१५।१६॥ अबुद्धिपूर्वमिवतुब्रह्मणोह
रिबुद्धितः । अविद्यापंचपर्वैषाप्रादुर्भूतामहात्मनः । तामसानांतुभूतानांसहस्रंसत्वभागिनां । शतांशरज
सामेकतमसांसर्ववेदिनां । केवलस्तामसोयोंशःसाविद्यापंचपर्विका । जातातिकृष्णातद्देहाद्दैत्यरक्षःपिशा
चकाः ॥ १७ ॥ [२६]यैंद्रजोभौतिकंतेनमानुषाणांसदाजनिः । तमोगूढेनरजसात्वितरस्थास्नुचारिणां ॥ २५ ॥
भौतिकेन[२७।२८]तुसत्वेनगूढंब्रह्मणआंडजं । रूपंतत्रापितुतमःशतांशेनप्रकीर्तितं । तज्जोरुद्रस्ततस्त्वेवमिंद्रादी
नांपुनर्जनिः । गूहितंभूतरजसातत्सत्वंमानुषायदा । देवाएवंगुणास्त्वेतेसर्वंव्याप्यव्यवस्थिताः । गुणातीतं
चयद्रूपंब्रह्मादीनांसुखात्मकं । चिद्रूपंतच्चसत्वस्यैवोत्कर्षोयत्रविद्यते । तच्चोत्कृष्टंतमोयत्रहीनंतत्रस्वभावतः । 
उपगूहनेतुनैवास्तिविशेषोनित्यचिन्मये । प्रकृतेर्गुणरूपायामूलिकायाश्चनक्वचित् । विशेषःपरमेतत्त्वेवासु

देवेकुतःपुनरितिच ॥२७-२८॥ [१३]अव्यक्ताद्याःपृथिव्यंताःसर्वाःप्रकृतयःस्मृताः । तदुपादानकःसर्गःप्रकृतः
परिपठ्यते । अंडंतुविकृतंज्ञेयंतज्जोवैकृतउच्यते ॥१३॥ [१७]पंचपर्वात्वविद्यातुभूतेभ्योहरिणापुरा । उद्धृत्यब्रह्म
णिक्षिप्तासापुनस्तेननिःसृता । तत्स्रष्टृत्वज्ञापनायतस्मात्साप्राकृतामतेतिच ॥१७॥ एतेगुणाहरेःसम्यक्स्वा
तंत्र्यविषयाःसदा । स्वतंत्राःप्रकृतेश्चापिब्रह्मणोन्येषुतुक्रमात् । देवेष्वेवतदन्येषुपरतंत्राहितेमताइतिच ।
स्थास्नुभिर्नियमान्मुख्यास्थितेर्गतिरवाप्यते । प्रायःपरोपकर्तृत्वात्तेमुख्यस्रोतसःस्मृताः ॥१८॥ [२०]नाधोनो
र्ध्वंतिरश्चांतुपुनस्तत्रैवयज्जनिः । यज्ञोपयोगंचसतामुपकारंविनापिच । तिर्यक्स्रोतसइत्येवप्रोच्यंतेज्ञानिभि
स्ततः ॥२०॥ [२४]प्रायोधोगमनंयस्मात्प्रयत्नेनविनाभवेत् । अर्वाक्स्रोतसइत्येवमानुषाःपरिकीर्तिताः ॥ २५ ॥
[११]नियमादूर्ध्वगंतारोदेवामोक्षैकभागिनः । ऊर्ध्वस्रोतसइत्येवतस्मात्तेपरिकीर्तिताइतिब्राह्मे ॥१९॥ [२६]तिरश्चां
स्थावराणांचबुद्धिपूर्वप्रवर्तिनां । असुराणांरक्षसांवापिशाचानांतथैवच । अर्वाक्स्रोतस्त्वमुद्दिष्टंनियमाद
सुरादिनामितिच ॥२५॥ [११]मुख्यस्रोतसइत्यस्यार्थउत्स्रोतसइति । ऊर्ध्वइत्येवयैस्तूच्चतमएवाभिधीयते । ऊर्ध्व
स्रोतसएतस्माद्देवाएवनतत्परे । उच्छब्दउच्चमात्रेपितस्मात्स्थास्नुषुभण्यतइतिच ॥१९॥ तिरश्चीनाःस्थाव

राश्चअंतस्पर्शाइतीरिताः । यत्प्रत्यक्षानुमानाभ्यांहृद्गज्ञानंनशास्त्रतइतिपाद्मे । यदप्रयत्नाद्धृदयंगमंतदेवजा
नंतिनोशास्त्रयुक्तिभ्यामित्यर्थः ॥ अष्टाविंशद्विशेषेणयज्ञेषूपकृतंयतः । तिरश्चांतावदेतस्माद्गण्यंतेशास्त्रवे
दिभिः ॥२०॥ [२१]गौरंजोमहिषःकृष्णःसूकरोगवयोरुरुः । अव्युष्ट्रौचखराश्वौचतथैवाश्वतरोपरः । गौरश्च
शरभश्चैवचमरीश्वसृगालकौ । वृकोव्याघ्रश्चमार्जारोहरिश्चशशशल्यकौ । कपिर्गजश्चगोधाद्याजलजाःपक्षि
णस्तथेतिब्रह्मांडे । कूर्मोजलजत्वेनाष्टाविंशत्स्वंतर्भूतोपिपंचनखत्वप्रदर्शनार्थंपृथगुक्तः । तत्तदाकारसंयु
क्तान्सृज्यान्स्त्रष्टारमेवच । यःसदासंस्मरेद्योगीनसभूयोभिजायतइतिस्कांदवचनात्प्रसिद्धानामपिद्विशफा
दीनांस्मरणविधानार्थमुक्तिः । उच्यतेसुप्रसिद्धंचस्मरणार्थंचकुत्रचित् । अप्रसिद्धज्ञापनार्थंद्विधाशास्त्रवचः
स्मृतमितिषाड्गुण्ये । वल्गूरोनृत्तपक्षीचसलल्लकश्चकथ्यतइत्यभिधाने॥२१-२४॥[२०]अष्टाविंशत्प्रधानास्तुतिरश्चां
यास्तुजातयः । योयस्यसदृशस्त्वन्यःसतत्रांतर्गतोभवेत् । जलजांतर्गताःसर्पाःकीटाद्यायाश्चजातयः । ते
षांजलप्रधानत्वाच्छरीरस्यतुसर्वशइतिसत्यसंहितायां ॥२०॥ [२५]रजोनिष्ठास्तमोनिष्ठाद्वेधार्वाक्स्रोतसःस्मृताः। ॥८१८॥
असुराद्यास्तमोनिष्ठमानुषास्तुरजोधिकाइतिव्योमसंहितायां । दुःखेचसुखमानिनोसुराः । सर्वार्थान्विप

रीतांश्चबुद्धिःसापार्थतामसीतिवचनात् । सुखेसुखैकभावास्तुदेवानैवंतुदानवाइतिषाड्गुण्ये॥२५॥कुमारंती
तिकौमारोदेवानामंडजोद्भवः । वैकारिकाणांजननात्प्राकृतोवैकृतश्चसः । वैकारिकेष्वेवान्येषामीषद्भोगि
त्वहेतुतः । उभयात्मकत्वंतेनैवप्रोच्यंतेष्टगणाअपीतिच । देवसर्गश्चेतिचकारार्थउभयात्मकइतिवैकारिक
स्तुदेवसर्गःप्राकृतत्वेनोक्तः ॥२६॥ प्रोक्ताअष्टविधादेवाविबुधाःसर्वएवतु । पितॄणांशतमेवात्रअसुरास्त्रिंश
देवच । गंधर्वाप्सरसांचैवद्विशतंपरिकीर्तितं । सप्ततिर्यक्षरक्षस्सुत्रिंशच्चारणजातिषु । शतंसिद्धास्तथान्या
सुसप्ततिःसर्वजातिषु । ऊर्ध्वस्रोतसएतेवैअन्यैर्वाक्स्रोतसःस्मृताः । वैकारिकेषुदेवेषुएतेवैमुख्यभोगिनः । अ
भोगिनस्तदन्येतुदेवाएतेततःस्मृताः । सर्वज्ञास्तेसहाराध्याभक्तास्तेष्वंतरेवच । नृत्तगानादिकर्तारोवाह
नादिकृतस्तथा । सिद्धसिद्धेतिवक्तारश्चाराश्चैषांक्वचित्क्वचित् । सेवाकराइतिह्येतैर्भेदैरष्टविधामताः । अ
न्येचयेतुसर्वज्ञाविबुधास्तेप्रकीर्तिताः । तथान्येकर्मभिस्तैस्तैरष्टभेदांतरंगताइतितत्त्वविवेके । यदिदेवादयो
दोषाज्जायेरन्मानुषादिषु । तथापिदेवाविज्ञेयाअसुराद्यास्तथाध्रुवमितिच ॥२७-२८॥ गुणाप्लुतोहरिर्नित्यं
गुणानांमध्यगोयतः । अनहंवेदनात्तस्यगुणासंस्पर्शएवचेतिच । सृष्ट्वादेवादिदेहान्सआत्मानंबहुधाकरोत् ।

तन्नियंतृतयात्मानंप्रकृतिंदेहभेदतइतिनारदीये । कर्ताचकरणंचैवकर्मचैवस्वयंहरिः । आत्मनोबहुधाभावेप्र
कृतेस्तुस्वतंत्रतेत्याग्नेये ॥२९॥ इतितृतीयतात्पर्येएकादशोऽध्यायः ॥ ११ ॥ ॥ कालपरिमाणंदर्शयितुंद्र
व्यपरिमाणंदृष्टांतत्वेनदर्शयति । मनुष्यादेवलोकेपिविशेषेणैवदर्शने । अंशांशित्वविशेषंतुयस्यद्रष्टुंनशक्नु
युः । चरमोविशेषइतितंमुनयोब्रूयुरंजसा । परमाणुःसविज्ञेयःकणादाद्यानिरंशिनं । अनंतांशयुतत्वेपियं
ब्रूयुर्भ्रांतिदर्शनात् । ततोपिपरमाणुत्वंतदंशानांतुयद्यपि । अनंतत्वाद्विवेकार्थमस्योक्तापरमाणुतेतितत्त्व
विवेके । अनेकांशैरासमंताद्युतः ॥ १ ॥ कालतोदेशतोगुणतश्चपरममहत्त्वंसतःपरब्रह्मणएव । सच्छब्दो
न्यत्राप्युपचारतोभवतीत्यतःपदार्थस्येति । सत्पदस्ययोमुख्याभिधेयस्तस्य । मुख्याभिधेयस्त्वर्थःस्याद्वाच्य
मन्यच्चभण्यते । अमुख्येष्वर्थशब्दस्तुनीचोपरिहितोभवेदितिब्रह्मतर्के । यद्वेवसमष्टुषिणेत्यादिनान्यत्रस्थित
स्यतत्परिमाणत्वमप्यस्तीत्यतःस्वरूपावस्थितस्येति । जगदावरकस्यस्वरूपस्यततःकिंचिन्महत्वमित्यतःकै
वल्यमिति । तत्रापिबहुविधानिरूपाणितस्यसंतीत्यविशेषइति । सर्वगतेप्रादेशमात्रमपिविद्यतइत्यतोनि
रंतरइति । परब्रह्मणोयःकेवलभावः । अंडाद्यंतःप्रविष्टंतदावरकंतस्यैवपरमपुरुषादिरूपांतरंतदेकदेशं

(प्रादेशःप्रादेशमात्रादिविशेषं)चविनायत्सर्वगतंरूपंतदेवपरममहान् । कालकोटिविहीनत्वंकालानंत्यंविदु
र्बुधाः।देशकोटिविहीनत्वंदेशानंत्यंतथैवच।गुणानामप्रमेयत्वंवस्त्वानंत्यंविदोविदुः । आनंत्यंत्रिविधंनित्यंहरे
र्नान्यस्यकस्यचित् । तस्यसर्वस्वरूपेष्वप्यानंत्यंतुत्रिलक्षणं । तथापिदेशतस्तस्यपरिच्छेदोपिविद्यते । परि
च्छेदस्तथाव्याप्तिरेकरूपेपियुज्यते । तस्याचिंत्याद्भुतैश्वर्याद्व्यवहारार्थमेवच । गुणतःकालतश्चैवपरिच्छेदो
नकुत्रचित् । व्याप्तत्वंदेशतोप्यस्तिसर्वरूपेषुयद्यपि । नचभेदःक्वचित्तेषामणुमात्रोपिविद्यते । तथापिविद्य
तेणुत्वंयस्मादैश्वर्ययोगतः । तस्माद्व्यवतारार्थमव्याप्तत्वंचभण्यते । यत्तस्यव्यापकंरूपंपरंनारायणाभिधं ।
शून्यंब्रह्मेतितत्प्राहुर्द्वितीयंस्रष्टृयत्ततः । परमःपुरुषोनाममितंतद्देशतोविभोः । तृतीयंवासुदेवाख्यंजगदा
वरकंमितं । देशतोजगदाविष्टंतुरीयंविष्णुनामकमितिब्रह्मतर्के । सर्वगतस्यापिब्रह्मरूपस्यकालादिरूपया
प्रकृत्यासमव्याप्तावपिदार्ढ्यातिकांतभावात्तदन्यस्मिन्नवस्थानाच्चस्वरूपावस्थितस्येत्युक्तं । देव्यांकालादिरूपि
ण्यांस्थितब्रह्मापिसर्वगं । उच्यतेऽनन्यगंयस्मादात्मवत्साहरेर्विभोः । महदादिगतंयत्तुतदन्यगतमुच्यतइति
ब्राह्मे ॥२॥ अनुमितःशास्त्रलोकानुसारेणज्ञातः । अनुमेतिद्वयंप्राहुर्यथाज्ञानंचलिंगजमित्यभिधानं । यावं

तंदेवलोकस्थोमानुषस्त्ववधारयेत् । महाप्राज्ञोदेवजूकःसकालःपरमाणुकः । सर्गाद्यैरनवच्छिन्नस्तदनंतरइ
त्यपि । तथैवपरमाण्वादिविशेषात्मापिनोभवेत् । पूर्वापरादिभेदोनसकालःपरमोमहानितिब्रह्मतर्के । स्व
रूपावस्थितस्यकैवल्यमविशेषोनिरंतरइत्येतानिविशेषणानिक्रमेणपरममहतःकालस्याप्यत्रोक्तानि । देश
तःकालतश्चैववस्तुतश्चत्रिधाहरेः । यथानंत्यंनचान्यस्यप्रकृतेर्देशकालतः । तथाशब्दस्यकालस्यदेशानंत्यंन
कालतः । कालशब्दात्मिकासैवतथापितुहरेःसदा । नास्याःसामर्थ्यलेशोपिज्ञानानंदगुणेष्वपि । ज्ञेयस्त
द्वरोवायुःशेषवींद्रहरास्ततः । अवरास्ततइंद्राद्यागुणैःसर्वैर्नसंशयइतिब्रह्मवैवर्ते । अण्वादिकालसंस्थान
भोक्तृत्वात्परमेश्वरः । अण्वादिनामवाच्योसौकालश्चेत्यभिधीयतइतिच । सतोब्रह्मणःअविशेषंस्वरूपंयःका
लःकालांतर्यामीतदेवब्रह्मभुंक्ते । तदपिब्रह्मपरममहान् । तस्यापित्रिधापरिच्छेदाभावात् । सर्वंसर्वत्रभोक्ता
पिविशेषादेकभोक्तृवत् । स्थितोहरिरचिंत्यात्मानिजैश्वर्यादजोविभुरितिब्रह्मतर्के ॥३-४॥ अगात्दृष्टिविष
यंप्राप्यज्ञातइत्यर्थः । राशिभेदात् ॥५॥ ऊनातिरेकात्सप्तवेति ॥८॥ काकणिकाचतुष्कंतुविंशांशोत्यभिधी ॥८२०॥
यते । कृष्णलेत्यपितंब्रूयुस्तैश्चतुर्भिस्तुमाषकं । चतुरंगुलदीर्घेतुकृतेमाषचतुष्टये । यावत्स्यात्परिणाहेनताव

द्वारंविधीयते । प्रस्थस्यनाडीपात्रस्यषट्दलस्यशुभेजले । भाराधिक्येनोदकेनक्षिप्रंपूर्तिर्भविष्यति । अति
शैत्येकलंकेचनाद्येनैवतुपूरणं । तस्माद्वसंतकालेतुप्रयागस्थोदकेनतु । नाडीशुद्धिपरीक्षास्यादन्यथानसमं
भवेदितिपाद्मे । निर्मलेनसमोष्णेननित्यसूर्यांशुवारिणा । प्रवाहगेनकार्यास्यात्कालशुद्धिःसदैवत्विति ब्र
ह्मांडे ॥९॥ यत्रोभयोःसशब्दःस्यात्तत्रद्विवचनेप्युभइत्यभिधानं ॥ १० ॥ [१४]ईडावत्सरनामासौनक्षत्रद्वादशे
स्थितः । तिथीनांद्वादशावर्तैर्योहरिःसोनुवत्सरः । वत्सरोयःस्थितस्त्वह्नांषष्ट्युत्तरशतत्रये । गुर्वावर्तैर्द्वाद
शांशेयःस्थःसपरिवत्सरः । सौरद्वादशकेमासेयःस्थःसंवत्सरोहरिः । एवंसकालनामापिकालस्थःपरमेश्वर
इतिब्रह्मतर्के ॥१४॥ [१३]सर्वदादर्शनात्तस्यानिमिषत्वंविदुर्बुधाः । सततंगमनाद्वापिकालस्थस्यमहात्मनइतिच
॥१३॥ [१५]अभ्रमायभूतभेदकः । ऋतुभिःस्वप्रज्ञाभिः । भूतानांज्यैष्ठ्यकानिष्ठ्यज्ञस्यैयज्ञादिवृत्तये । बोधयन्सृ
ज्यशक्तिंचकालस्थोवर्ततेहरिरितितंत्रप्रकाशिकायां ॥१५॥ [२३]दिनस्थोभगवान्भोक्ता ॥२३॥ युगैकसप्ततेरू
र्ध्वंसार्धाष्टादशलक्षकं । वत्सराणांमनोर्भुक्तिःसहस्रंचतुरुत्तरं । शतानांप्रलयश्चैवपंचोत्तरसथापिच । आद्येषु
षट्सुप्रथमेद्विसहस्रंप्रकीर्तितं । वत्सराणांमनोरंतरेवर्मिंद्रादिनांभवेदितिमहावाराहे ॥२४॥ [२७]ब्रह्मणाकालना

ह्मातुसहह्रशेतेहरिर्निशीतिब्राह्मे ॥२७॥ [३२]अस्यब्रह्मणः । ब्रह्मणोदिनमित्युक्तत्वात् । नायुर्मानंभगवतःकस्मिन्रूपेपिविद्यते । अनादित्वादमध्यत्वादनंतत्वाच्चसोव्ययइतिहरिवंशेषु ॥३२॥ [३]यमःकालोमानुषाणांतस्यकालःसुदर्शनः । तस्यापिरुद्रस्तत्कालोब्रह्मादुर्गापितस्यतु । साब्रह्मप्रलयेदेवीवर्ततेचक्ररूपिणी । संहरंतीसदालोकान्सैवब्रह्मादिषुस्थिता । तस्यानियामकोविष्णुःपरःकालःसउच्यते । कालाभिमानिनीसैवप्रभुर्नजगदीशितुः । तस्याःप्रभुःसएवेशोविष्णुःसर्वेश्वरेश्वरइतिच ॥३८॥ दशेंद्रियाणिचमनोभूतान्यंडगतानितु । विकाराइतिविज्ञेयाभूताहंमहतःपरइतिच । पृथिवींविशेषइत्याहुःशब्दादीनांबहुत्वतः । सासूक्ष्मत्वाद्गुणोत्यंडंद्विगुणातुदशोत्तराः । अबादयःप्रकृत्यंताअष्टप्रकृतयःस्मृताइतिच । अंतर्गताःशरीराणि । शरीराणांबहुत्वेनअतीतानागतैस्तथा । अस्यैवदेवकार्येषुप्रतिप्रतिचदर्शनात् । विष्णुसामर्थ्यतोंडानांबहुत्वंनान्यथाभवेदितिब्रह्मतर्के । एकमंडंबहुत्वेनप्रत्येकंरोमकूपगं । ब्रह्मापश्यत्तथात्मानंहरेस्तेषुपृथक्पृथगितिब्रह्मांडे । बृहदंडमभूदेकमितिचभारते ॥ ३९-४० ॥ धामगृहमंडराशयः ॥ ४१ ॥ इतितृतीयतात्पर्येद्वादशोऽध्यायः ॥१२॥ ॥ [२]तमस्तुशार्वरंप्रोक्तंमोहश्चैवविपर्ययः।तदाग्रहोमहामोहस्तामिस्रःक्रोधउच्यते। मरणं

त्वंधतामिस्रमविद्यापंचपर्विकेतिभारते । तमोज्ञानंविपर्यासोमोहोन्येतुतदाग्रहाइतिहरिवंशेषु ॥२॥ कौंल
तोबलतश्चैवज्ञानानंदादिकैरपि । सर्वैर्गुणैर्विष्णुरेवश्रेष्ठस्तदवमारमा । अनंतांशेनकालात्तुसमातस्याश्चतु
र्मुखः । अवरोबहुलांशेनतत्समोवायुरुच्यते । नियमाद्वायुरेवैकोब्रह्मत्वंयातिनापरः । तस्मात्समानतामु
क्तौवायुत्वेकिंचिदूनता । दशवर्षंतुतत्पश्चाज्जननंतत्स्त्रियोरपि । आनंदादिस्तद्दशांशःकालःसंवत्सरात्परः ।
यावत्पश्चाज्जनिस्तावत्पूर्वंदेहक्षयोभवेत् । ब्रह्मवाय्वोस्तुयेदेव्यौतद्दशांशःसुखादिकः । शेषस्यगरुडस्यापि
कालोदिव्यसहस्रकः । शेषरुद्रौब्रह्मवायूयथातद्वत्परस्परं । तद्देव्यस्तद्दशांशाःस्युस्ततस्त्विंद्रादयोमताः । एवं
मुक्तौचपूर्वंचनान्यथाक्वचिदिष्यते । अन्यथोक्तिर्यत्रचस्यात्तन्मोहार्थंभविष्यति । पूर्वापरविपर्यासोबहुरू
पत्वहेतुतइतिविष्णुकृततत्त्वविवेके । अथातआनंदस्यमीमांसा । देवासुरेभ्योमघवान्प्रधानइत्यादिच । इंद्रा
द्याःसनकाद्याश्चदक्षाद्यायेपिचापरे । ऋषयोमनवोदेवास्तद्दशायेचकेचन । उमायाअवराःसर्वैर्गुणैःसर्वैर्न
संशयः । तत्समोनभविष्योवानभूतोद्यतनोपिवा । ऋतेहरिंब्रह्मवायुशेषवींद्रान्सभार्यकान् । शंकरंचेतिवे
त्तव्यमन्यन्मोहार्थमुच्यतइतिविष्णुकृततत्त्वनिर्णये ॥ ४-२७ ॥ [३३] यांतत्याजविभुर्ब्रह्मामानुषींवाक्सास्मृता ।

सरस्वतीनिजाभार्यादेवींवाचंतुताविदुरितिच॥३३॥ [३]अभिमानितःशब्दतश्चब्रह्मावेदान्ससर्जहायज्ञादींश्चक्लृपे
वाचातथासर्वाभिमानिनः । इतिहासपुराणेतुश्रुत्वाहरिमुखात्स्वयं । भारतादीन्विनापश्चाद्धरिणान्यैश्चनि
र्मितानिति ॥३५॥ [४२]प्राजापत्यंब्रह्मचर्यमेकभार्यंतुगामितेतिव्यासस्मृतौ । वार्तायायावरंज्ञेयमेकाहित्वमसं
चयइतिच ॥४२॥ वैखानसामूलभक्षाःफलभक्षाउदुंबराः । वालखिल्याःसर्वभक्षाःफेनपावत्सफेनपाइतिच
॥४३॥ आन्वीक्षिकीतंत्रविद्यासाचवेदानुसारिणी । विष्णुप्रोक्ताशिवाद्युक्ताज्ञेयावेदबहिष्कृता । दंडनीती
राजधर्मस्त्रयीवेदाःप्रकीर्तिताः । वार्तावाणिज्यकादिःस्यादेताभिर्यत्तुजीवनं । तदान्वीक्षिक्यादिनामब्रह्म
णानिर्मितंपुरेतिच । प्रणवःपूर्ववक्त्रात् । प्रणवःपूर्ववक्त्रेणभूराद्याश्चमुखत्रयात् । प्रदक्षिणमवर्ततवेदाश्चैवाश्र
मास्तथेतिब्राह्मे ॥४४॥ [४६]स्पर्शास्तस्याभवञ्जीवात्स्वरादेहात्प्रजज्ञिरे । ऊष्माणइंद्रियेभ्यश्चअंतस्थाबलतोवि
भोरितिच । यस्माद्यज्जायतेचांगात्तत्तदंगाभिधंभवेदितिच ॥४६॥ शब्दब्रह्मात्मकोब्रह्मासर्वशब्दाभिधोयतः ।
ऋतेनारायणादीनिनाम्नांसविषयोयतः । व्यक्तंब्रह्मांडमुद्दिष्टमव्यक्तंमहदादितिच । तद्व्यापकत्वाद्ब्रह्मातुव्यक्ता
व्यक्तात्मकःस्मृतइतिच ॥४७॥ [४७]ऋषीणांभूरिवीर्याणामितिसिंहावलोकनं । यत्रपश्चात्तनःश्रेष्ठस्तत्रसिंहाव

लोकनमितिब्रह्मतर्के ॥ ४९ ॥ के[५१]नंप्राप्तत्वात्काय: ॥५१॥ इतितृतीयतात्पर्येत्रयोदशोऽध्याय: ॥ १३ ॥
[३३,३४]ब्रह्मांजस्तुहिरण्याक्ष:प्रथमंदंष्ट्रयाहत: । सएवपार्षदाविष्टोद्वितीय:(यं)कर्णताडनात् । पूर्वंलयोदकेमग्नांद्वि
तीयंतेनमज्जितां । भुवमुद्धरतैवासौहरिणाक्रोडमूर्तिनेतिब्रह्मांडे । व्यत्यासेनापिचोच्यंतेअविवेकेनकुत्र
चित् । दुष्टानांमोहनार्थायतत्रतत्रकथा:क्वचिदितिस्कांदे । अविवेकेनेत्यस्यविविच्यनोच्यतइत्यर्थ: । ननु
कर्तुरविवेक: । सर्वज्ञस्यकुतोऽज्ञानंव्यासस्योदारकर्मण: । दुष्टानांमोहनार्थायेतिच ॥३३-३४॥ इतितृतीय
तात्पर्येचतुर्दशोऽध्याय: ॥१४॥ ॥ पि[२८]शाचचर्यामचरद्रुद्रोविष्णवाज्ञयैवतु । गर्भिणीवधनोदार्थमहोविष्णु
विंडंबकृदितिवाराहे ॥२८॥ वि[४१]ष्णुहस्तवधाल्लोकोभक्तस्यान्यस्यनक्वचित् । तथाप्यसुरमोहायनविविक्तंक
चित्क्वचिदितिस्कांदे । हिरण्यकशिपुश्चापिभगवन्निंदयातमइतिच ॥४१॥ स्वं[४५]त:सद्गतियोग्यस्यपुत्रादेर्हेतु
ताभवेत् । योग्यतानादिभक्ति:स्यादयोग्यस्यकुतोगतिरितिब्रह्मतर्के ॥ ५० ॥ इतितृतीयतात्पर्येपंचद
शोऽध्याय: ॥१५॥ ॥ अ[१४]निमित्तेनविष्णवर्पणेन ॥१४॥ मु[१७]क्ताश्चैवाधिकारस्थाद्वेधावैकुंठलोकगा: । अ
मुक्तानांभ्रम:क्वापिनमुक्तानांक्वचिद्भवेदितिभविष्यत्पुराणे । कृष्णात्मनांनरजआदधुरितिच ॥१७॥ तिर

श्रीनाःस्थावराश्वसर्वेज्ञानाद्विकुंठगाः । अमुक्तामुक्तिमायांतिनियमात्कर्मणःक्षयइतिच ॥१८॥ भक्तैरर्चि
तेसतिभगवतातुलसिकाभरणेकृतेतस्यागंधार्थंतपोबहुमानयंति ॥१९॥ [३३]ऐंरचनानुवादाः ॥ २३ ॥ येनृग
तिंज्ञानादियोग्यांनप्रपन्नाः । तेमोहाद्भगवदाराधनंनकुर्वंति । धर्मज्ञानवर्जितामानुषाएवनभवंतीत्यर्थः
॥२४॥ [२८]वैंकुस्थयाभ्रुवासहनिर्गतेन ॥२८॥ [३०]जंयस्यविजयस्यापिकदाचिद्ब्रह्मशापतः । कृष्णावतारपर्यंतंप्रा
तिकूल्यंचजायतइतिनारदीये ॥३०॥ [३२]युवयोर्यथाविरुद्धस्वभावत्वंतद्भगवद्विषयइहशंकनीयःकः । तस्मा
न्निषेधोव्यर्थइत्यर्थः ॥३२॥ समस्तकुक्षौस्थितेभगवतिनहिभेदः । अस्मिंल्लोके । अंतस्थभगवद्रूपंबहिष्ठैक्ये
नपश्यंतिनभोनभसीव । तत्रप्रत्युदरभेदनिमित्तंभयंयुवाभ्यांव्युत्पादितंकिं । सर्वांतर्यामित्वेनाभयस्यभय
मस्तीतिभावःकृतः । अन्यथाकिमितिनिवारणं । सर्वोदरगतंब्रह्मयेभयेनविचक्षते । सर्वत्रापिभयंतेषांस्मृ
तानांतमएवचेतितत्त्वविवेके ॥३३॥ त्रयोरिपवोदेहत्रये । सुरहेलनस्यापिदंडोभवति ॥३४॥ [३६]अंत्रस्थित
योःपुनःपूर्ववन्मोहोनस्यादंशिनोः ॥३६॥ [३८]केसरारस्मयः ॥३८॥ कौस्तुभोब्रह्मणोरूपंप्राणश्चूडामणिस्तथेति
च॥३९॥[४२]अविद्यमानकरणंविद्यमानस्मृतिस्तथा । उभयंरचनंप्रोक्तंपूर्वसिद्धेषुतुस्मृतिरितिशब्दनिर्णये॥४२॥

अक्षरजुषामपितद्रूपसेवाभ्यासिनामपि ॥४३॥ [४६]भक्तिज्ञानपरीपाकात्किंचित्पूर्वंचमुच्यते । दर्शनेनहरेस्त
त्रनानंदःपूर्णतांव्रजेदितिब्रह्मतर्के ।अतोनपेक्षाणामानंदोद्रेकोमोक्षेच्छुभ्यः। तेषांपरिपाकतःपूर्वंब्रह्मदृष्ट्या
मुक्तिप्राप्तेः ।मुमुक्षोःकेवलोभक्तोमुक्तावपिसुखीभवेदितिच ॥४८॥ यावत्परमभक्तैस्तुभुज्यतेदुःखमुल्बणं।
तावन्मुक्तौसुखोद्रेकस्तत्रचेद्भक्तिवर्धनमितिच ॥४९॥ इतितृतीयतात्पर्येषोडशोऽध्यायः ॥१६॥ ॥ [६]सर्वो
त्तमोपिभगवान्विप्रादेःपूजनायतु । गुणलब्धितत्तोब्रूतेनित्यपूर्णगुणोपिसन् । ब्रूयुश्चान्येक्वचित्तत्तुतदुक्तेर
नुसारतः । उपादत्तेवरांश्चापिलोकानांमोहनायचेतिकौर्मे ॥६॥ विप्राणांचरणपद्मपवित्ररेणोःसेवयाप्रतिल
ब्धशीलंश्रीर्नजहातीतियत् । अतश्छिद्यां । अनुक्ताश्चगुणाविष्णोरुक्तादोषानतस्यतु । अज्ञानाद्दोषवि
ज्ञानंगुणज्ञानंयथार्थतइतिपैंगिश्रुतिः । विप्राणांचापिभक्तानामन्येषांचजनार्दनः। ब्रह्मणःशंकराद्वापिदेव
ताभ्यस्तथैवच । आत्मनश्चश्रियश्चैवसकाशात्प्रियतामपि । पूज्यतामत्ययुक्तंचवदेत्क्वापिविमोहयन्निति
स्कांदे ॥७॥ [१३]देवींद्योतमानां । ऋषिकुल्यां ऋषिकुलस्तुतिपरां ॥१३॥ [१५]तद्भ्रूविजृंभःपरमेष्ठिधिष्ण्यमित्यु
क्तं ॥१५॥ [१८]धर्मस्यापिदुर्ज्ञेयः ॥१८॥ [२०]मधुव्रतपतेः सारग्राहिणांपतेः । अंघ्रिस्थतुलसीलोकंस्थानमुरसिस्था

पिस्पर्धयेवकामयाना । लब्ध्वापिवक्षसिपदमितिच ॥२०॥ परमभागवतत्वेनतस्यामत्यादरः । नतुकामा
त् । हरिभक्तिर्हरेःप्रीतिर्ज्ञानानंदादयोगुणाः।अधिकारेचमुक्तौचब्रह्मवाय्वोश्चतत्स्त्रियोः। शेषवींद्रहराणांच
तत्स्त्रीणांवासवादिनां।यथाक्रमंतुविज्ञेयाभूमौकारणतोन्यथा। देहस्थलक्षणंचैवभूमावप्यन्यथाभवेत्। ब्रह्मा
दिषुक्रमेणैवनित्यंस्याद्देहलक्षणं । श्रियोधिकागुणाःसर्वेसर्वेभ्योनियमेनतु । उक्ताश्चैवाप्यनुक्ताश्चततोवि
ष्णोर्नसंशयइतितत्त्वनिर्णये ॥२१॥ धारणाद्भगवान्धर्मोयमनाद्यमउच्यतइतिशब्दनिर्णये । अनंतासनवै
कुंठक्षीरसागरगैस्त्रिभिः । रक्षांकरोतिभगवान्कपिलःसत्ववर्धनात् । असत्वोपिरजश्चैवतमश्चापिनिरस्य
त्वितिमूर्तिभेदे । कपिलोवरदश्चैवविकलश्चेतिकथ्यतइतिच । अतःसत्वस्यकारणत्वमात्रं कपिलोवरदात
नुः ॥२२॥ आत्मैवगोपोगोपकोयस्यतदात्मगोपं ॥२३॥ असुराअप्रियाश्चापिनित्यानंदान्नलोकवत् । निषे
ध्यबुद्धिविषयमप्रियंहिहरेर्मतमितिच । तस्मादनभीष्टमिव ॥२४॥ [२६]अंतर्भक्ताबहिःक्रुद्धाहिरण्याद्याहरिंप्र
ति।सर्वक्रुद्धाःशंबराद्याअंतःक्रोधवशास्तथेतिच ॥२६॥ [२७]स्वरूपश्रीस्तथाभार्याद्वेधाश्रीस्तुहरेर्मतेतिच॥२८॥ ॥८२४॥
[३१]अंतर्भक्ताबहिर्वैराहिरण्याद्याहरेर्मताः । तत्रभक्त्याभवन्पूताद्वेषआवेशकान्गतः । ब्रह्मजाअसुरायेतुवि

ष्णोःपार्षदतांगताः । कल्याद्याश्चहरेर्द्वेषमंतःकृत्वातमोगताइतिच । तस्मात्संरंभोल्पफलःकथ्यतएव । भक्तियोगएवब्रह्महेलननिस्तारकः ॥३१॥ इतितृतीयतात्पर्येसप्तदशोऽध्यायः ॥१७॥ ॥ [५]फट्कारश्चैवफूत्कारस्तथाकिलकिलादयः । अनुकारशब्दाविज्ञेयायेचान्येतादृशामताइत्यभिधानं ॥५॥ टंकारोप्यनुकारशब्दः । नाशस्तत्रसृगालानांशिवानांचान्यथास्वरइत्याग्नेये ॥९॥ [११]खात्कारोप्यनुकारशब्दः ॥ ११॥ नदे[२२]वानांप्रजापानांविजेतावरतोविना । बलेनविद्ययावापिनसमस्तत्पतीन्विना । वरोपितादृशोयावच्छरीरं नान्यदेहगइतितत्त्वनिर्णये ॥२२॥ इतितृतीयतात्पर्येअष्टादशोऽध्यायः ॥१८॥ [२३]अनेककल्पजननेतृत्वात्सहस्रणीः ॥२१॥ [२४]अक्षतःक्षतवद्विष्णुरसमःसमवत्तथा । अजितोजितवच्चैवज्ञोज्ञवच्चप्रकाशयेत् । सर्वरूपेष्वनंतोपिब्रह्माद्याश्चैवतन्मतेः।अनुसारितयाब्रूयुःकुर्युश्चसनदुःखभागितिब्रह्मांडे ॥२५॥ आदरंतुमुखंविंद्याच्छंबट्कारंतुभक्षणमित्यभिधानं ॥२६॥ मध्याह्नस्त्वभिजित्प्रोक्तआषाढोत्तरएवच । श्रवणस्यापिपूर्वार्धोविषुवंचाभिजित्स्मृतमितिच ॥२७॥ इतितृतीयतात्पर्येएकोनविंशोऽध्यायः ॥१९॥ ॥ धर्मःसत्यइतिप्रोक्तोधर्मश्चापिहरेःप्रियइतिब्राह्मे ॥ यथेच्छयैवसर्वंतुमनसादेहतोपिवा । कर्तुंशक्तोपिशस्त्राद्यालीलैवानंतशक्ति

तइतिवाराहे ॥५।२२॥ इतितृतीयतात्पर्येविंशोऽध्यायः ॥२०॥ ॥ सृष्टौलयेतारतम्यंदेवानांज्ञायतेस्फुटं ।
तारतम्यपरिज्ञानेमहातात्पर्यमिष्यते । अतस्तद्बहुशस्तूक्तमन्यच्चैतत्प्रकाशकमितिवामने ॥१०॥ महतोत्र
ह्मवायूचतद्भार्येचाभिमानिनः ॥१२॥ अहमःशेषवींद्रौचरुद्रेंद्रौकामतत्स्त्रियः । मनसस्त्वनिरुद्धश्चचंद्रश्चा
न्येयथोदितं । एवंक्रमोव्यत्ययस्तुसूक्ष्मस्थूलविभेदतः । सृष्टौगुणेचज्ञानादौमुक्तिस्थेवाप्ययंक्रमः । नियमे
नान्यथोक्तिस्तुमोहायासुरजन्मनामितिवाराहे ॥१३॥ निरात्मकःनव्यक्तस्तत्रात्मा ॥१५॥ संस्थयास्वयाभ
गवतिस्थितसामर्थ्येन ॥१७॥ ज्ञानन्नपिसमर्थोपिकंचिद्ब्रह्माहरेःप्रियं । ज्ञात्वाकरोतिकर्माणिह्यज्ञवच्चाप्यश
क्तवदितिच ॥२८॥ व्यसृजन्मलवद्देहंबाह्यंनतुनिजंपुरा । ब्रह्मातच्चाहरादित्वंप्रापदेवादिदैवतमितिकौर्मे
॥४१॥ ऊर्जंसारान्नमुद्दिष्टंतदेवपितृभक्षणमितिब्राह्मे ॥४२॥ येपुंरासृष्टादेवाः । दृष्ट्वातुपौरुषींसृष्टिंदेवाःशुक्र
तमूचिरइतिच ॥५०॥ यत्रापितुहरेर्नामतदन्यत्रप्रयुज्यते । तदांतरहरेस्तत्रगृहीतिर्नान्यथाभवेत्॥ स्वातं ॥८२५॥
त्र्यादवरत्वंचपरस्यापिप्रयुज्यते । स्थितस्यापियथाराज्ञःस्वानांजयपराजयावितिपाद्मे । अतोहृषीकेशोत्र
ह्मांतर्यामी ॥५२॥ इतितृतीयतात्पर्येएकविंशोऽध्यायः ॥२१॥ ॥ शब्दविषयंब्रह्म ॥ ८ ॥ अनंतछदि ।

अनंतावयवं । तृतीयोतिशयइतिमहाव्याकरणे । मथनान्मिथिलोजातइत्यादिवच्च ॥१८॥ [१०]स्वायंभुवोमनु
श्चैवपृथुश्चैवार्जुनावपि । ब्रह्मशेषविपारुद्रइंद्रऋष्याद्यस्तथा । विष्ण्वावेशयुताःसर्वेनतुविष्णुस्वरूपकाइ
तितत्त्वनिर्णये ॥५०॥ इतितृतीयतात्पर्येद्वाविंशोऽध्यायः ॥२२॥ ॥ [१६]स्वयाकांत्याऽन्याःक्षिपंतीश्रीर्यथात
द्वत्स्थितां ॥१६॥ [२९]ज्ञानानंदस्वरूपेभ्योरोमभ्योस्यकुशादयः । विधुन्वतःप्रयागेतुवराहवपुषोऽभवन् । रोमा
णितानिदेवस्यरूपाण्यासन्सहस्रशइतिस्कांदे । तएवासन्तेभ्यएवासन् । सप्तसुप्रथमेतिसूत्रात् ॥२९-३०॥
[३०]गंतसारंयातयामंयामःसारइहोच्यतइतिनारदीये ॥३५॥ [३७]पर्यासेमानुषत्वेनावस्थानेपि ॥३७॥ इतितृतीय
तात्पर्येत्रयोविंशोऽध्यायः ॥२३॥ ॥ [१८]देहलीद्वारबंधः ॥३०॥ [२०]कृत्रिमान्शोभार्थंकृतान् ॥२०॥ [३०]आदर्शेद
दर्श ॥१८॥ [३८]उद्गुणपानवीच्यः । उत्तमामृतवीचीयुक्तः ॥३८॥ प्राप्तषोडशवर्षःसन्नावीच्यइतिकथ्यतइत्यभि
धानं ॥४५॥ इतितृतीयतात्पर्येचतुर्विंशोऽध्यायः॥२४॥ ॥ [१]मालिनीशालिनीमाल्याचार्याभार्येतिचोच्य
तइतिच ॥१५॥ [६]नावतारेष्वपिहरेर्देहःशुक्रादिसंभवः । तथापिशुक्रसंस्थःसन्मातृदेहंप्रविश्यच । विलाप्य
शुक्रंतत्रैवकेवलज्ञानरूपकः । उदेतिभगवान्विष्णुःकालेलोकंविमोहयन्नितिमहावाराहे । अग्निरिवदारुणी

तिव्यक्तिस्थानमात्रत्वेदृष्टांतः ॥९॥ [२५]महागुणाभिपूर्णत्वंसत्वमित्युच्यतेबुधैरितिवामने ॥१०॥ [२७]सम्यग्ज्ञानंतु
सांख्यंस्यात्तदर्थोयोगउच्यतइतिकापिलेये ॥ १७ ॥ [२६]युगत्रयावतारेणत्रियुगश्चेतिकथ्यतइतिपाद्मे ॥ २६ ॥
[३१]यानियानिब्रह्मादिरूपाणिरोचंतेस्वजनानांतान्येवतेव्यक्तयर्थमभिरूपाणि । व्यक्तोभवेद्धरिस्तत्रयत्स्थानंर
चितंसतामितिकौर्मे ॥३१॥ वेदैर्वृतत्वाद्भगवांस्त्रिवृदित्युच्यतेबुधैरितिच ॥३३॥ [३८]सत्यलौकिके । यथार्थज्ञा
नविषये । आभासोज्ञानमालोकोलोकाभासश्चकथ्यतइत्यभिधानं ॥३५॥ [४०]विश्वमेतदेतादृशंअसारंयतः ।
अतईश्वरंविज्ञाय । नख्यात्युपप्लवःदुःखाज्ञानाद्युपद्रवोन ॥४०॥ [४४]अनन्याधीनशक्तित्वाद्धरिःस्वइतिचोच्य
तइतिमात्स्ये । प्रत्यग्रःप्रत्यग्रतिः ॥४५॥ भूतगर्भश्चभूतस्थःपूर्णएवंद्विरूपवान् । अतआत्मेतितंप्राहुःसदै
वाप्तगुणोयतइतिच ॥४६॥ इतितृतीयतात्पर्येपंचविंशोऽध्यायः ॥२५॥ ॥ [१]नारायणोब्रह्मवायूवींद्रशेषौ
हरस्तथा । कामःशक्रोगुरुर्दक्षोमन्वाद्याभास्करादयः । सर्वजीवाश्चक्रमशःपुरुषाख्याभिशब्दिताः । एत
त्पत्न्योबंधशक्तिःस्त्रियःसर्वास्तथाजडं।क्रमात्प्रकृतिशब्दोक्तास्तज्ज्ञानाद्विप्रमुच्यतइतिदत्तात्रेययोगे॥११॥ [१३]प
रमात्मादिकंदेहेयदध्यात्मंतदीरितमितिच । सुखंशरीरभोग्यंतुदुःखंसर्वंतथैवच। मुक्तौविलयमायातिनित्या

नंदस्तुभुज्यतइतिच ॥१३॥ [१६]बाह्येसुखेत्वनासक्तेरसुखंदुःखवर्जनात् । अदुःखंहरिभक्त्यैवनित्यानंदंयदाम
नः । तदातंपरमात्मानंपश्यत्यात्मप्रसादतइतिकापिलेये । अभेदात्स्वावतारेषुनिरंतरउदाहृतः । गुणदेहें
द्रियाभेदात्केवलोसदृशत्वतः । अखंडपूर्णशक्तित्वादहमेकःसदामतइतिच ॥१६॥ [१८]बंधेशक्तिःप्रकृत्याख्या
विष्णुशक्त्यावियुज्यतइतिच ॥१८॥ [२२]योदृशीमयिभक्तिःस्यात्तादृश्यन्यत्रनैवचेत् । अनन्यभक्तिरुद्रेकात्सा
ययैवतरेत्सृतिमितिच ॥२२॥ एकःपूर्णोहरिर्नान्यस्तदन्येतद्वशामताः । इतिज्ञानंस्थिरंयत्तदैकात्म्यज्ञानमु
च्यतइतिब्रह्मांडे ॥२३॥ [३१]शुंक्लेनजनिरन्येषांहरेःस्वतनुवैवतु । नित्योदितज्ञानतनोःकुतःस्याच्छुक्लतोजनिरि
तिगारुडे॥३१॥आनुश्राविककर्मासौश्रुत्युक्तंयोनलंघयेदितिभविष्यत्पर्वणि । सदासर्वगुणाढ्यत्वात्सत्वोवि
ष्णुरुदीर्यतइतिकापिलेये । अपूर्णभक्तेर्मुक्तौतुनसुखंपूर्तिमेष्यति । अतस्तादृशमुक्तेश्चभक्तिःपूर्णागरीय
सीतिच ॥३२-३३॥ नेच्छंतिसायुज्यमपिफलत्वेनहरिर्यदि । ददातिभक्तिसंतुष्टआज्ञात्वेनैवगृह्णते । तादृ
शानांसुखाधिक्यंपुनर्मुक्तौभविष्यतीतिच ॥३४॥ [४१]आदानादिकर्तृत्वादात्मा ॥ ४१ ॥ इतितृतीयतात्पर्येष
१३९ ड्विंशोऽध्यायः॥२६॥ ॥[१]सपरमोनजायतेनम्रियतइतिप्रसिद्धंहि । देहाद्युपाधिभिरात्तधर्मोजीवोपिस्वप्नवद्भ्रां

त्वाजायतेम्रियतेच । भ्रांतित्वाद्देहात्मत्वस्य । किमुसर्वज्ञत्वस्वतंत्रत्वादिवैलक्षण्ययुक्तईश्वरः । परस्यजन्म मृत्याद्याःस्युःस्वतंत्रस्यकिंपुनः । जीवस्यापियतोभ्रांत्याजन्ममृत्यादिसंगतिरितिमहाकौर्मे ॥४॥ उपगतां समीपस्थां ॥५॥ मुमुहेमोहयामास । तदेतन्मेविजानीहि । कृत्वाविवाहमित्यादिवत् । यत्रकारयितातीवस्वतंत्रस्तत्रकर्तृता । प्रोच्यतेतुयथाब्रह्मत्वज्ञंसंसारभागितीतिच । लयेवाप्यथवासृष्टौत्वंतरालेपिनकश्चित् । प्रकृत्यारहितंब्रह्मकदाचिदपितिष्ठतीतिकापिलेये ॥६॥ एवंपराभिध्यानेनपरात्मेच्छया । प्रकृतेःकर्तृत्वंजीवआत्मनिमन्यते ॥७॥ विष्णोःसुराणांगुरूणांनित्याजीवस्वतंत्रता । यत्तुतस्यान्यतंत्रत्वंतज्ज्ञानाद्विनिवर्ततइतिच । अकर्तुरीशस्यसकाशात् । अक्लिष्टत्वादकर्तासावकार्यत्वादथापिवेतिच । एषकर्तानक्रियते कारणंचजगत्प्रभुरितिभारते ॥८॥ ब्रह्मादिभिःसर्गकरीश्रीर्विष्णुबलसंश्रयात् । सुखदुःखप्रदोविष्णुःस्वयमेवसनातनः । कर्तृत्वंसुखदुःखानामन्येषांतुतदाज्ञया । भोक्तृत्वंसुखदुःखानांकरोत्येकोहरिःस्वयं । भोक्तृत्वमात्वहेतुत्वंजीवेनान्यत्रकुत्रचिदितिभविष्यत्पर्वणि । प्रकृतिंपुरुषंचैवविद्ध्यनादीइतिच ॥९॥ व्यक्ताव्यक्तात्मकंयत्तद्विद्यात्सदसदात्मकं । असर्गाकेवलाव्यक्तासिसृक्षुरुभयात्मिका । व्यक्तैवकार्यरूपातुप्रकृतिस्त्रिवि

धामता । कार्यतःसाप्रधानत्वात्प्रधानमितिकीर्त्यते । अविशेषाह्यकार्यत्वात्साचश्रीर्विष्णुसंश्रयेतिहरिवं
शेषु । विशेषःकार्यमुद्दिष्टंविशेषाद्दृश्यतेयतइतिपाद्मे ॥११॥ [१५]बुद्धिरध्यवसानायसंशयंकुरुतेमनः । अभि
मानोह्यहंकारश्चित्तंस्मरणकारणमितिस्कांदे ॥१५॥ हरिस्तुनिर्गुणंब्रह्मश्रीर्ब्रह्मसगुणंस्मृता । तदंगजानित
त्त्वानितस्मात्तद्रूपमुच्यतइतिहरिवंशेषु ॥१६॥ पुरुषोहृदिस्थःपरमःकालःसर्वगतोहरिः । अथवारुद्रदेहस्थो
हरिःकालइतीरितइतिब्राह्मे । पौरुषंप्रभावं । पुरुषस्यप्रकर्षेणभावंव्याप्तंरूपं । एकेसम्यग्ज्ञानिनः । अप्रा
कृताः ॥१७॥ [२०]प्रकृतेःक्षोभकंरूपंदेवंनारायणाभिधं । प्रकृतौमहतःस्रष्टापरमःपुरुषोमत ॥२०॥ [२२]तंदेववासु
देवाख्यंमहत्तत्त्वनियामकं ॥२२॥ [२७]संकर्षणाख्यस्तुहरिःसूक्ष्माहंकारयामकः । स्थूलाहंकारनियमीविष्णुःप्र
द्युम्ननामकः । अनिरुद्धोमनस्तत्त्वनियंताभगवान्हरिः । महत्तत्त्वादिजीवास्तुब्रह्मशेषांगजास्तथा । सूक्ष्म
स्थूलविभेदेनकामजश्चानिरुद्धकइतिकापिलेये ॥२७॥ [२१]अंकेरमयतेयस्मात्केशवोजगदंकुरः । महांतंयो
सृजज्जीवमोहकंचतमोग्रसदितिच ॥२१॥ यद्वासुदेवाख्यंभगवद्रूपंततोमहदात्मकंचित्तंजायते । सत्वशब्दे
नचोच्यंतेपूर्णानंदादयोगुणाइतिच । महत्तत्त्वगतोयोसौवासुदेवाभिधोहरिः । सचित्तजनकःप्रोक्तःप्राणि

नांचपृथक्पृथगितिच ॥२२॥ चित्तस्यस्वच्छत्वादयःपृथग्गुणाउच्यंतेस्वच्छत्वमित्यादि । स्तिमितोदकचि
त्तादेरविकारोल्पविक्रियेतितत्त्वविवेके । वृत्तिःस्वभावोवृत्तंचस्थितिरित्यभिधीयतइतितत्वनिर्णये । वृत्ति
भिर्लक्षणंप्रोक्तमितिस्वाभाविकंलक्षणमित्यर्थः ॥२३॥ ज्ञानप्रधानस्तुमहानहंकारःक्रियाधिकः । इतरापेक्ष
यासोपिज्ञानाधिकउदाहृतइतिच ॥२४॥ देवताधिकृतंयत्तदधिदैवमितिस्मृतमितिच । वैकारिकोधिदैव
मित्यादिपंचम्यर्थे । सप्तसुप्रथमातत्रस्वातंत्र्यंयद्विवक्षितमितिशब्दनिर्णये ॥२६॥ मनोरूपेणकर्तृत्वंदेहरूपे
णकार्यता । इंद्रियात्मतयाचैवकरणत्वमहंकृतेः । यतोमनस्यहंभावस्तस्मात्कर्तृमनःस्मृतं । स्वभावकर्तु
र्जीवस्यत्वासन्नोपाधितद्यतः । कर्मज्ञानेकरणतायतःकरणमिंद्रियं । कार्यदेहःसमुद्दिष्टउत्पाद्यत्वात्पुनःपुन
रितितत्त्वविवेके । शांतरूपोदेवपिताघोरःकरणसृड्मतः । तावज्ज्ञानस्याप्रकाशान्मूढोभूतपितास्मृतः ।
त्रिरूपोयमहंकारःशेषइत्येवतंविदुरितितत्त्वविवेके ॥२८॥ द्रव्यस्फुरणेयद्विशेषज्ञानं । सामान्यंमनसाजातं
(ज्ञानं)विशेषाद्बुद्धिजंभवेत् ॥३१॥ अचलःसंशयोबुद्धेश्चलोमानसउच्यते । चंचलातुस्मृतिर्बुद्धेश्चित्तजैवस्थि
रास्मृतिरितिच । येनयज्ज्ञायतेवस्तुतत्तल्लक्षणमुच्यते । तत्स्वरूपंपृथक्चेतिद्विविधंकवयोविदुरितिकापिले

ये ॥३२॥ प्रधानवायुःसूत्रात्मामहतासहजायते । तैजसश्चखजःस्पर्शइत्याद्यास्तत्सुताःस्मृताः । तदावि
ष्टाअन्यजीवास्तदाधाराश्चतद्बलाइतिच ॥३३॥ [३४]अर्थाश्रयत्वंअर्थविषयत्वं । शब्देनैवयतोज्ञेयोहरिर्लिंगंतु
तस्यतत् । स्पर्शाद्यभावात्तन्मात्रानभसश्चेतिकीर्त्यते । स्पर्शादयश्चतन्मात्राइतरेपूर्वसंस्थितेः । तिष्ठत्येको
गुणोभूतेप्रत्येकंपंचसुस्थितः । शब्दोवर्णात्मकोनित्योध्वनिराकाशसंभवः । आकाशएवसूक्ष्मस्तुध्वनिरित्ये
वशब्द्यते । सएवव्यज्यमानस्तुभवेत्कर्णैकगोचरइतिच ॥ ३५ ॥ [३७]नभसःशब्दतन्मात्राच्छब्दमात्रगुणादभू
त् । स्पर्शादयोपिवाय्वादेःसूक्ष्मावस्थाप्रकीर्तिताइतिच । सूक्ष्मेंद्रियाणिसंत्येवस्युःस्थूलान्यप्यहंकृतेः । भूते
भ्यश्चोपचीयंतेपुनर्ब्रह्मशरीरतइतिच॥३७॥[३९]प्राप्नोतिवायुःसर्वंतुस्वतएवहरेस्तथा ।अतःप्राप्तिरितिप्राहुर्वायुंभू
तपतिंप्रभुं।प्रधानवायुरन्येषुनित्याविष्टोयतस्ततः।तद्गुणास्तेषुचोच्यंतेनीचतानास्यतत्कृतेतिब्रह्मवैवर्ते ।स्वरू
पमपिकर्मेतिविषयत्वादुदीर्यतइतिशब्दनिर्णये॥३९॥[४१]व्यक्तिसंस्थात्वंव्यक्तत्वेनस्थितिः।गुणताप्रकाशत्वं ।आ
लोकोगुणइत्येवप्रकाशश्चेतिकथ्यतइत्यभिधानं।तेजस्त्वमथचोग्रत्वंक्रौर्यमित्यपिचोच्यतइत्यभिधानं ॥४१॥
[४५]उंदनंबिंदुभावःस्यात्स्यंदनंस्रवणंस्मृतमित्यभिधानं । पृथिव्यम्न्यपेक्षयाभूयस्त्वंदेहे ॥४५॥ [४७]भावनमुत्पादक

त्वं । ब्रह्मस्थानंतुपृथिवीशरीरेब्रह्मदर्शनादितिकापिलेये । सद्विशेषणं । विशेषेणव्यक्तत्वं । असदव्यक्तना
मस्याव्यक्तंसदितिचोच्यतइतिब्राह्मे । सर्वसत्वगुणोद्भेदःशरीरेहिसर्वप्राणिनांगुणाव्यज्यंतेसंसारावस्थायां ।
शरीरंपार्थिवंज्ञेयमिंद्रियाण्यौदकानितु । तैजसःकोष्ठगोवह्निश्छिद्रमाकाशसंभवं । प्राणावायुमयाःसर्वेप्रत्ये
कंपंचधापुनरितिकापिलेये ॥४८॥ [५४]अचेतनाद्यतस्त्वंडाद्ब्रह्मासमजनिस्फुटं । अतोब्रह्मांडमित्याहुर्विराड्
ब्रह्मप्रकाशनादितिच ॥५४॥ [६१]यज्ञनामातुदेवोन्योविज्ञेयःपाददेवता । तमाविष्टोहरिर्नित्यंतमाहुःपाददैव
तं । तस्येंद्रियाभिमानित्वंकुतःपूर्णामलात्मनइतिच ॥ ६१ ॥ [६४]चैत्योपिभगवान्विष्णुरंतर्यामीचतुर्मुखात् ।
स्वेच्छयाव्यक्तिमगमत्ततोसौब्रह्मजःस्मृतइतिच ॥६४॥ [६७]यज्ञांतस्थःस्वयंपादौविशन्नोत्थापयद्धरिः । शक्तोपि
ब्रह्मावाय्वोस्तुबलज्ञप्त्यैजनार्दनः । तत्स्थउत्थापयामासब्रह्मदेहंविशन्प्रभुरितिच ॥७०॥ [७२]ब्रह्माबृहस्पतिः ।
यस्मिन्ब्रह्माराजनिपूर्वएतीतिश्रुतिः । बृहस्पतिःपुरोधाश्चब्रह्माचब्रह्मणस्पतिरित्यभिधानं ॥७२॥ अंशेन
सुप्तोब्रह्मापिअंशेननिरगात्तथा । स्वदेहाद्वायुसहितोविष्णुनाचजगत्प्रभुः । तमुत्थापयितुंदेवास्तानृते ॥८२९॥
त्रीन्महाबलान् । नाशक्नुवन्नेकसंस्थास्ततस्तेत्वविशंस्त्रयः । उदतिष्ठद्ब्रह्मदेहस्तदातेषांप्रभावतः । विशेषेण

हरेरेवप्रभावेनश्रियःपतेः । चित्ताभिमानीब्रह्मैवक्षेत्रज्ञस्तद्गतोहरिः । प्राणोवायुरितिप्रोक्तस्तयोरीशोह
रिःस्वयमितिच ॥७३॥ इतितृतीयतात्पर्येसप्तविंशोऽध्यायः ॥२७॥ ॥ अज्ञानंसुप्तिशब्दोक्तंस्वप्नश्चैवविप
र्ययइतिभारते ॥५॥ बुद्धेरवस्थानंनिद्रादि ॥११॥ असतिप्रलये । शेषस्यप्रतिबिंबास्तुदेवाःशेषस्तुब्रह्म
णः । सपरब्रह्मणश्चैवतेस्वबिंबप्रदर्शकाः । ततःस्वबिंबद्वारेणपरमात्मप्रदर्शनमितिब्रह्मतर्के ॥१२॥ योवि
निद्रःसंसत्यदृक् ॥१४-१५॥ यःअनष्टोनष्टवन्नाज्ञासिषमितिमन्यमानः । सआतुरोद्रष्टाजीवः ॥१६॥ साहं
कारंद्रव्यंजीवःतस्यावस्थानमनुग्राहकश्चपरमात्मा । नित्यदृक्परमात्मासौमृतवद्योनकिंचन । जानातिजी
वःसज्ञेयःपरमात्मातदाश्रयइतिहरिवंशेषु ॥१७॥ इतितृतीयतात्पर्येअष्टाविंशोऽध्यायः ॥२८॥ ॥ सबी
जोवैष्णवोयोगोनिर्बीजस्त्वन्यदैवतः । बीजंविष्णुर्हिजगतःशाखाद्याश्चान्यदेवताइतिकौर्मे ॥१॥ समाधि
रप्रयत्नेनमनसःसंस्थितिर्भवेदितिच ॥६॥ सर्वस्मरणाशक्तावेकांगे । यावन्नच्यवतेमनइत्युक्तत्वात् । सर्वस्म
र्तुमशक्तःसन्नेकांगंचिंतयेद्बुधइतिच ॥१८-२०॥ ब्रह्माचित्ताभिमानेनचैत्यस्तन्नियमाद्धरिः । सचब्रह्माहरेःकं
ठेकौस्तुभत्वेनभासतइतिभागवततंत्रे ॥२७॥ साक्षाच्छ्रीस्तुहरेरूपमिंदिरातुतदाश्रयादितिच ॥२९॥ नैपृ

थग्दिदृक्षेत् । तमेवदिदृक्षेदित्यर्थः ॥३२॥ चित्तबडिशवियोगोध्यानानंतरसमाधिः ॥३३॥ मुक्ताश्रयंवि
ष्णुविषयं । स्वचित्तंजीवचैतन्येततंनिर्वाणमृच्छति । शरीराभिमानंजहाति । स्वचिदभिमानेन ॥ ३४ ॥
असत्कर्तातुजीवःस्यात्सत्कर्तापरमेश्वरइतिशब्दनिर्णये । दुर्दुःखमितिविज्ञेयंखंसुखंचतयोर्यतः। प्रदातापर
मोविष्णुस्तस्माद्दुःखादिनामवानितिहरिवंशेषु॥३५॥[41]अनन्यभावेनतद्रूपाणामभेदेन । तदात्मतांतस्यादाना
दिकर्तृत्वंचभूतविषये ॥४१॥ [43]प्रकृतिंपराभाव्यतदुत्तमत्वेनैवसदावतिष्ठतेपरः । सर्वभूतस्थमीशेशंजेतारंप्रकृ
तेरपि । अविशेषंसदैवैकंचिंतयन्विप्रमुच्यतइतिच ॥४३॥ इतितृतीयतात्पर्येएकोनत्रिंशोऽध्यायः ॥२९॥
[2]यथासांख्येषूक्तंतथाकथितं । यत्सांख्यमूलंतल्लक्षणंप्रचक्षते । तद्रूपाणांपृथग्भावः ॥२॥ [10]अपृथग्भावःसा
त्विकः। अज्ञोर्चयेदेवार्चायामन्यथादोषवान्भवेत्। ज्ञस्त्वर्चयन्सगुणवानन्यथादोषवान्नत्वितिकापिलेये॥१०॥
[26]अंतरोदरंभिन्नंब्रह्म । आत्मस्थमन्यस्थंचब्रह्मयोभेदेनपश्यति । उदरंब्रह्मेतिश्रुतेः ॥ २६ ॥ [28]प्राणभृतश्चलन
युक्ताः । पशुवृक्षादिभेदेनजीवाएवस्वतःस्थिताः । संसृतौव्यत्ययस्तेषांमुक्तौतत्तत्स्वरूपता । तत्रस्थावरमु
क्तेभ्योवराजंगममुक्तकाः । तेभ्योमानुषमुक्ताश्चविप्रमुक्तास्ततोधिकाः । तत्रोपदेशमात्रेणमुक्तेभ्योवेदवेदि

नः । अर्थज्ञाऋषयस्तेभ्योतोदेवाःसंशयच्छिदः । पूर्णधर्मास्ततस्त्विंद्रोनिःसंगोगरुडस्ततः । भक्तिपूर्णोहरे ब्रह्मातस्मान्नान्योधिकस्ततः । मुक्तौवासंसृतौवापिसम्यगेषुहितेगुणाइतिकापिलेये ॥२८॥ जीवैंकलयास हभूतानिबहुमानयंस्तदालयत्वेनेश्वरंप्रणमेत् ॥३४॥ एकतरभावेन्यतरस्यनियतत्वादेकतरेणैव ॥३५॥ सर्व कर्माणियस्यविचेष्टानिमित्तानितत्कर्मविचेष्टितं ॥३६॥ भिन्नदृशां । ईश्वरापेक्षयाल्पदृशां । भिन्नमल्पंवि जानीयादभिन्नंपूर्णमिष्यतइतिशब्दनिर्णये ॥ ३७॥ यथायोग्यातिरेकेणनद्वेष्यश्चप्रियोहरेरितिकापिलेये ॥३९॥ इतितृतीयतात्पर्येत्रिंशोऽध्यायः॥३०॥ ॥ कीनाशःकर्षकोमतः॥१३॥उत्तारमुद्गतिविंद्यात् ॥१६॥ त्रिभि र्मुहूर्तैर्द्वाभ्यांवादिनैर्दशभिरेववा ।पक्षान्मासेनवायातियमलोकमितोमृतइतिनारदीये ॥२४॥ अंत्रे वेत्येवशब्दःसामीप्यार्थे । सामीप्येचप्रधानेचएवशब्दोवधारणइतिशब्दनिर्णये । अत्राप्यस्तीत्यर्थः ॥२९॥ इतितृतीयतात्पर्येएकत्रिंशोऽध्यायः ॥३१॥ नानाविधागर्भवृद्धिःकर्मभेदाद्भविष्यति । अतोनानाविधंग्रंथे गर्भसंस्थानमुच्यइतिषाड्गुण्ये ॥२॥ वैंश्रयस्त्विंद्रियाण्याहुर्हृषीकाणीतिचाप्युतेतिशब्दनिर्णये ॥ १२ ॥ कंत मःसुखतमः ॥ अंशरीरवत्परमात्मवत् । परमात्मनएवदेहोपितद्वशत्वात् ॥ तत्त्वज्ञानंतुदेवानांगर्भस्थानां

भविष्यति । उत्तमानामृषीणांवाप्यन्येषाबहुजन्मगमितिस्कांदे ॥२०॥ खंडितात्मावसायिषुजीवमात्रज्ञानि
षु ॥३६॥ मयःप्रधानउद्दिष्टोमायातद्वशउच्यतइतिषाड्गुण्ये ॥४०॥ सत्पुंस्सुचतथास्त्रीषुनसंगोदोषमावहे
त् । यथायोग्यंगुणायैवदोषकृद्दुष्टजंतुष्वितिवाराहे ॥४१॥ जीवभूतेनजीवकर्मभूतेन ॥ ४५ ॥ चक्षुःसका
शाद्द्रष्टुर्द्रष्टृत्वमक्ष्णोर्योग्यता ॥४८॥ केवलंज्ञानंपुरुषार्थः। देहादिष्वसंगिनोजीवस्यतन्निमित्तसुखदुःखाद
योनसंतिकिमुतदेहस्याचेतनत्वात् ॥५०॥ इतितृतीयतात्पर्येद्वात्रिंशोऽध्यायः ॥३२॥ ॥ ईषद्भक्तोभग
वतिसुकर्मास्वर्गमेष्यति । अभक्तोनिरयंयातिसुकर्मापिनसंशयइतिवामने ॥ ३ ॥ अभिमानेनपूर्णज्ञानेन
॥१२॥ संगत्यलयेपरमेश्वरंप्रविश्य । यथापूर्वंप्रजायते । उच्चनीचादिभावेनजायते । अगुणव्यतिकरेबहिः
श्वेतद्वीपेनिर्गच्छति ॥ गुणव्यतिकराभावेप्युच्चनीचादिपूर्ववत् । विष्णोश्चैवविमुक्तानांनकदाचनगच्छती
तिगारुडे ॥१३॥ गुणव्यतिकरेअसति । प्रलयेप्राप्तेपुनःपरमेश्वरमायांति ॥ ब्रह्मादेवैःपरिवृतःप्रलयेपरमे
श्वरं । प्रविश्यसर्गेतुपुनःश्वेतद्वीपेप्रमोदते ॥ ज्ञानधर्मफलांस्तत्रभोगान्भुक्त्वालयेपुनः । नारायणंसमावि
श्यज्ञानंव्यक्तंनिजंसुखं । भुंजतेत्वेवमेवैषांकालेसंसर्गनिर्गमौ । नित्यौनित्यसुखंचैवसृष्टौभोगास्तथोत्तमाः ।

यथापूर्वंहरेःसर्वगुणैर्नीचोच्चतातथा । ब्रह्मणश्चतथान्येषामन्येषांचयथापदमितिस्कांदे ॥ १४ ॥ [१६]अत्यल्पभ
क्ताविष्णौचसदाश्राद्धादिकारिणः । पितृलोकंसमाविश्यस्वसंतानेपुनःपुनः । क्षिप्रमेवप्रजायंतेयेतुभक्ति
विवर्जिताः । अन्यसामान्यवेत्तारस्तदन्योत्तमवेदिनः । तद्भक्तनिंदकाश्चैवयांत्येवनिरयंध्रुवं । अपिधर्मैक
नियमानात्रकार्याविचारणेतिच ॥ मुक्तियोग्यास्तुदेवाद्यामानुषायज्ञभोगिनः । मनुष्यभेदाःश्राद्धादिक्र
तोविद्वेषिणोसुराइतिच ॥१६-२१॥ [२८]मत्स्यकूर्मादिरूपंचविष्णोर्ज्ञानैकमात्रकं । तन्मन्यंतेभौतिकंतुयेगच्छं
त्यधरंतमइतिब्राह्मे ॥ २८ ॥ एकादशेंद्रियात्माचपंचभूतात्मकस्तथा । सर्वाभिमानीभगवान्स्वराडिंद्रःपुरं
दरः । इदमंडंजगत्सर्वंशक्रदेहंविदुर्बुधाः । तत्पतिस्त्रिगुणोरुद्रस्तस्यब्रह्मातततोहरिरितिवामने ॥ यथैतान्प
श्यंतितद्वदेवज्ञानात्मकंमत्स्यादिरूपंपश्यंत्यज्ञाः ॥२९॥ [३२]ज्ञानभक्तीविनानैवमुक्तिःकस्यापिविद्यते । तयोरे
कतरेणापिविष्णुगेनोभयंविना । एवमप्येतयोरेकभावेन्यनियतेर्ध्रुवं । एकेनापिभवेन्मुक्तिस्तदर्थंत्वन्यसा
धनमितिहरिवंशेषु ॥३२॥ इतितृतीयतात्पर्येत्रयस्त्रिंशोऽध्यायः ॥३३॥ [२]भूतेंद्रियार्थात्ममयं । तेभ्यःप्रधानं ।
त्वंप्रधानमयोदेवप्रधानादधिकोयतइतिवाराहे ॥२॥ देहंतंत्रःदेहप्रकाशः । ततिःप्रकाशोविस्तारस्तंत्रंचेत्य

भिधीयतइतितंत्रमालायां ॥५॥ जीवोपाधि[२७]प्रभृतयआमुक्तेःसर्वदेहिनां । नियमात्संत्यभावस्तुनिष्फलत्वा
दुदीर्यतइतिवाराहे ॥ २७॥ इतिश्रीमद्भागवततृतीयस्कंधतात्पर्येश्रीमदानंदतीर्थभगवत्पादाचार्यविरचि
तेचतुस्त्रिंशोऽध्यायः ॥२४॥ तृतीयस्कंधःसंपूर्णः ॥३॥ ॥ ॥ ॥
श्रीवेदव्यासायनमः ॥ पुनःपुनःकथांप्राहुरभ्यासादुत्तमंफलं । विज्ञापयितुकामास्तुविद्वांसस्तत्रतत्रत्वित्या
ग्नेये ॥१॥ [२८]ब्रह्मस्थश्चैवरुद्रस्थःस्वयंचापिहरिःप्रभुः । प्रजांत्रिपूरुषसमांयच्छत्वित्यत्रिरैच्छत । तस्मात्सब्रह्मरु
द्राभ्यांसहविष्णुर्जगत्पतिः । आगत्यतुत्रिमूर्त्यंशान्पुत्रान्प्रादाज्जनार्दनः । भावित्वाच्चैवकार्यस्यलोकानां
मोहनायचेतिब्रह्मवैवर्ते ॥२८॥ [३०]तत्स्थविष्णवपेक्षयातेवयमिति ॥३०॥ [३३]ब्रह्मणोनावतारोस्तिसन्निधानंतुकेव
लं । ऋतेविष्णोरात्मनश्चतदंशोक्तिःप्रवेशतइतिच । सृष्टिभेदाद्धिरूपंतुकथापंचोत्तरंशतं । वैरूप्यमन्यद्धि
ज्ञेयंतात्पर्यान्मोहनायचेतिस्कांदे। ऋतेतुपांडवकथांकार्ष्णंरामायणंतथा । विष्णोर्ब्रह्मादिनांचैवक्रमाद्यत्यस्त
शक्तितां । एतदापादकंचान्यदृतेकल्पादिभेदतः।कथाभेदस्तुविज्ञेयोमोहायैतेषुभिन्नतेतिवाराहे ॥३३॥ [५९]नरे
विष्णुःसमाविष्टःस्वयंनारायणोहरिः । अर्जुनेचनरावेशःकृष्णोनारायणःस्वयमितितत्त्वविवेके ॥५९॥ खे

[५६]रूपभेदो (वाय्वादिकः) आदिः । यथाकाशस्थितोनित्यमित्यादिच । यथाकाशेविमानादिरूपभेदःप्रतीय
ते । तथाहरौजगदिदंतत्सामर्थ्यात्प्रतीयतइतिब्राह्मे ॥५६॥ [६६]अप्रौढेवअस्वीकृतेव ॥६६॥ इतिचतुर्थतात्पर्ये
प्रथमोऽध्यायः॥१॥ ॥[२३]येज्ञानविषयाःशापामुक्तिगाश्चाधिकारिणां । कादाचित्कास्तेभवंतिनैवतेसार्वकालि
काः । तेषांज्ञानस्यमुक्तेश्चतारतम्यस्यचैवहि । भगवन्नियतत्वात्तुशापादिर्नात्रकारणमितिवाराहे ॥ २३॥
[२६]गिरिःप्राणःसमुद्दिष्टस्तत्सुतावेदवाक्स्मृता । पुष्पंस्वर्गादयःप्रोक्ताःफलंमोक्षउदाहृतमितिवामने । अनंगो
मन्मथोमंथाःकामोंगजउदाहृतइतिशब्दनिर्णये ॥२६॥ इतिचतुर्थतात्पर्येद्वितीयोऽध्यायः ॥२॥ ॥ [२३]वि
शेषेणधीयतेचिंत्यते । रुद्रेणधीयतेविष्णुर्विष्णोर्ध्येयोनकश्चनेतिब्रह्मवैवर्ते ॥ २३ ॥ इतिचतुर्थतात्पर्येतृती
योध्यायः ॥३॥ ॥ [१५]ब्रह्मरसासवार्थिभिःशिष्याणांमनोलिभिः । सनकादयोरुद्रशिष्यास्तेषामन्येतुयोगि
नः । ब्रह्मशिष्यस्तथारुद्रोब्रह्मानारायणस्यचेतिब्राह्मे ॥१५॥ ब्रह्मादयोब्रह्मपुत्राः । सुपर्णशेषप्राणेशब्रह्मविष्णू
न्गिरंश्रियं । ऋतेनसंतिनोरुद्रंकएवपुरुषार्थभागितिगारुडे ॥१६॥ [३]आब्रह्मणिसम्यग्ज्ञानिनि । आब्रह्मस्थि
१४० तधीर्जीवन्मुक्तश्चेत्यभिधीयते । यस्तस्यननिवृत्तंचप्रवृत्तंकर्मचेष्यते । यत्तुदेवाःप्रकुर्वंतिसमहानियमःस्मृतः ।

स्वर्गाद्यर्थंप्रवृत्तंस्यान्निवृत्तंमुक्तयेतुयत् । समहानियमोनामकर्मयत्त्वाधिकारिकं । महतोनियमाद्विष्णोःप्री
त्यामुक्तौसुखोन्नतिः । केचिन्निवृत्तमित्याहुर्महानियममप्युतेतिभविष्यत्पुराणे । यदिदेवाश्चऋष्याद्यानिंद्यंते
यत्कुत्रचित् । नतावतागुणैर्हीनाःस्थितप्रज्ञाहितेमताः । यथायोग्यंतुतात्पर्यंनिंदायाअन्यदेवत्विातिगा
रुडे ॥२०॥ इतिचतुर्थतात्पर्येचतुर्थोऽध्यायः ॥४॥ ॥ नैचापरंतस्मादवरंनचिंतयती । परंतुविष्णवादि
कंचिंतयतीचशब्दात् । रुद्रंचब्रह्मवायूचविष्णुंचैवश्रियंगिरं । उमाचिंतयतीदेहंतत्याजान्यंनचास्मरदिति
तत्त्वनिर्णये ॥४॥ इतिचतुर्थतात्पर्येपंचमोऽध्यायः ॥५॥ ॥ वीरभद्राख्यरूपेणस्वेनपूर्वंययौहरः । मूल
रूपेणपश्चात्तुगत्वादक्षमथावधीत् । तत्रोपेंद्रेणहरिणाजितोधर्मात्मजेनच । अन्याञ्जिगायप्रययौकैलासंस्वं
निकेतनमितिब्राह्मे ॥२२॥ इतिचतुर्थतात्पर्येषष्ठोऽध्यायः ॥ ६ ॥ ॥ त्रिमूर्तिगेनरूपेणनारायणोनाययौ
॥ ३ ॥ यँज्ञइंद्रः । यज्ञोयज्ञपतिस्त्विंद्रःपुरुहूतःपुरुष्टुतइत्यभिधानं । तस्यात्मतंत्रस्य । तस्यविष्णोर्मनोवश
स्य । नाहंचेंद्रोनचैवान्येयत्तत्त्वंनविदुःपरं । तस्यविष्णोर्वशेरुद्रोममवायोरथापिवा । नान्यस्यकस्यचित्पुं
सस्तस्येत्थंवःकुतःकृतमितिब्रह्मवैवर्ते । मुमुक्षवोब्रह्मणश्चशिवादिंद्रादिभिस्तथा । श्रुत्वाज्ञानंपरंगुह्यंमुच्यं

तेब्रह्मणासहेतिकौर्मे ॥७॥ [४०]महत्तमस्तेजस्वितमोर्कस्यसकाशादपि। तेजोर्थउत्तमार्थेचपूज्यार्थेचप्रयुज्यते। महच्छब्दोमहःशब्दोमान्यशब्दस्तथैवचेतिशब्दनिर्णये ॥४०॥ [४३]अंतर्याम्यपेक्षयाशक्तेःशिवस्यचपरमिति। क्रियंतेस्तुतयोन्यत्रतदंतर्याम्यपेक्षया। नजीवेषुगुणाःपूर्णायथायोग्याहितद्गताइतिब्राह्मे। तद्वशत्वात्स्वरूपंतुविष्णोःसर्वमुदीर्यते। स्वरूपंसचसर्वस्यंबिंबत्वादेवतूच्यते। साक्षात्स्वरूपंमत्स्याद्याविष्णोर्नान्येकथंचन। तस्मादन्यगतादोषानतस्मिन्पुरुषोत्तमइतितत्त्वनिर्णये ॥४३॥ अभिपत्तयेप्रतीकाराय। सूत्रेणदोषसूचकेन ॥४४॥ [४६]तवत्वां। चतुर्षुषष्ठीतिसूत्रात् ॥ विष्णवधीनाजगत्सत्ताप्रतीतिश्चेष्टितंगतिः। इतियन्नियतंज्ञानमपृथग्दर्शनंस्मृतं। मिथ्याज्ञानंपृथग्ज्ञानमितिवेदविदोविदुः। यथैवार्थस्तथाज्ञानमपृथग्दृष्टिरुच्यतइतिगारुडे ॥४६॥ [४८]यदायस्मात्। हृदयस्यद्रवीभावस्त्वनुकंपेतिकथ्यते। उपकारंकर्तुमिच्छाकृपेत्याहुर्मनीषिणइतिशब्दनिर्णये ॥ ४८ ॥ [४९]माययाविष्णवधीनयाबंधकशक्त्या। विष्णुमायाहरेरिच्छाबंधशक्तिश्चतद्वशा। सर्वत्रगाहरेरिच्छाबंधशक्तिर्ज्ञवर्जितेतिशब्दनिर्णये ॥४९॥ इतिचतुर्थतात्पर्येसप्तमोऽध्यायः ॥७॥ [२६]उत्पत्तिर्हरिरूपाणांव्यक्तिरेवनसंशयः। उत्पत्तिरेवजीवानांदेहोत्पत्तिरितीर्यतइतितत्त्वनिर्णये। जडमाया

नतस्यास्तिशरीरत्वेनकुत्रचित् । सृष्ट्वातयाशरीराणितत्स्थितेःपुरुषःस्मृतः । मायामयशरीरायामपिविष्णुः स्वयंस्थितः । तस्मात्प्राकृतइत्येवजीववत्तंवदंतिहि । अस्पृष्टत्वेपितद्धर्मैस्तद्गत्वादेवकारणादितितत्त्वविवेके ॥२६॥ अधिदैवंउत्तमदैवं । यद्यज्ञभागार्थंयज्ञभुग्देवताशरीरेआस्थाः । भुंक्तेयज्ञभुजोदेवानाविश्यपुरुषोत्तमइतिच ॥२७॥ [31]आशिषोपिततएवभवंतीत्यतश्चशब्दः ॥ २९ ॥ [31]अव्यक्तादिपदार्थानांविशेषज्ञानिनापितु । नदेहोवैष्णवोज्ञेयआनंदःप्राकृतोनहीतितंत्रसारे । पदार्थभेदग्रहःपदार्थविशेषज्ञः । भेदोंतरंविशेषश्चसूक्ष्मेक्षाचाभिधीयतइतितत्त्वनिर्णये ॥३१॥ [34]ईश्वरान् ॥३४॥ [37]मायाह्येषाभवदीया । भगवत्सामर्थ्यमेव । भगवन्महिमैवासौयद्दृश्योभगवान्स्वयमितिच ॥ ३७ ॥ नपृथग्यआत्मनः । अन्यथायोनपश्यति । पृथग्ज्ञानंतदित्याहुर्यत्किंचिद्वीक्ष्यतेन्यथा । ज्ञानज्ञेयाविरोधेनत्वपृथग्वस्तुनोदृशिः । केचिद्भेदंविनिंदंति ह्यासुरज्ञानवृत्तयः । निराकुर्वंत्यथोमंदाभेदस्यपरमार्थतां । येतुतत्त्वविदोमुख्याभेदंब्रह्मान्यवस्तुनोः । परमार्थमितिज्ञात्वानित्यंविष्णुमुपासतइतिगारुडे । हेभृत्येश । तयानन्यवृत्त्योपधावतामस्माकमनुग्रहोस्त्येव । तथापिपुनरनुगृहाण । यथार्थज्ञानिनोनान्यःप्रियोविष्णोस्तुकश्चन । तथाप्यधिकसंतुष्ट्यैप्रसीदेत्यर्थंनंपुन

रितिच ॥३८॥ प्रकृत्याजडयामिथ्याज्ञानंजनयतीश्वरः । तस्यभ्रमश्चसत्वाद्यानसंतिपरमेशितुरितिच॥३९॥
[४३]यज्ञोयज्ञपुमांश्चैवयज्ञेशोयज्ञभावनः । यज्ञभुक्चेतिपंचात्मायज्ञेष्विज्योहरिःस्वयं । आश्रावयास्तुश्रौषड्यजा
थोयेयजामहे । वषट्कारांतकैर्नित्यंयजुर्भिःपंचभिर्विभुरितितंत्रसारे ॥४३॥ [४५]सर्वशब्दाभिधेयत्वंसर्वांतर्या
मिकत्वतः । नतुसर्वस्वरूपत्वात्सर्वभिन्नोयतोहरिरितिमात्स्ये । अंतर्यामिस्वरूपेणब्रह्मरुद्राद्यभिन्नता । न
तुजीवस्वरूपेणजीवाभिन्नायतोहरेः । विशेषाभेदवचनंसन्निधानविशेषतः । सन्निधानंतुतत्प्रोक्तंसामर्थ्य
व्यंजनंहरेरितिभविष्यत्पर्वणि ॥ ४५ ॥ [५४]हरेर्वंशत्वदृष्टिस्तुभूतानामपृथग्दृशिः । प्रियत्वदृष्टिरथवाब्रह्मादी
नांविशेषतइतिगारुडे । सर्वभूतात्मना सर्वभूतांतर्यामित्वेन ॥५४॥ उभयतःसोमतोहविषश्च ॥ ५५ ॥
[५९]शक्तत्वाद्विष्णुशक्तिस्तुशक्तिशब्देनचोच्यते । शक्यत्वात्प्रकृतिश्चापिस्वापःसृष्टिंविनाहरौ । रतिस्तस्यास्तु
कथितोनह्यन्यःस्वापउच्यतइतितंत्रसारे ॥५९॥ [६४]स्वाहाद्वारेणनदीतीरेशरकाननेचच्छर्दइतिभारतोक्तेः ॥
॥६४॥ इतिचतुर्थस्कंधतात्पर्येअष्टमोऽध्यायः ॥८॥ आँविष्टाहरिणाजीवाब्रह्मादक्षोमनुःपृथुः । शक्राद्याऋ
षयश्चैवमत्स्यव्यासादयोहरिरितिब्रह्मवैवर्ते ॥ ७ ॥ प्रियव्रतोत्तानपादप्रमुखेषुहरिःस्वयं । आविष्टःसर्वभूते

पुऋषभाद्याःस्वयंहरिरितिहरिवंशेषु ॥ ८॥ विविधं[31]कल्पनेविद्यमानेपि ॥ ३१ ॥ [54]परिणततयाएकस्मिन्ने
वभूतेन ॥ ५४ ॥ मंत्रैः[61]हृदयेन । मंत्रेणचनमःशब्देनच ॥ ६१ ॥ तस्यैव[72]योग्यत्वाल्लोकपालानांदुष्करं ।
नाशक्यंदेवतानांतुयदन्यैःशंकितंक्वचित् । शक्ताअपिनकुर्वंतियदन्यविहितंबुधाइतिब्राह्मे ॥ ७२ ॥ दृष्ट्या[74]
निरूपणया । आदेशेनउपदेशेन ॥ ७४ ॥ यंत्र[80]देवैःकृतेविघ्नेखंडितोनपुमान्भवेत् । तत्रतद्यशसेविघ्नंकुर्यु
र्नतुविघातने । यत्रखंडितताातत्रखंडनायैवकेवलं । सत्यकामायतोदेवास्तेचित्ताद्यभिमानिनः । अतो
विमोहनायैवप्राप्नुयुस्तेपराजयं । तेषामशक्तितोक्तिश्चविमोहायसुरद्विषामितिब्रह्मांडे ॥ ८० ॥ भूतेंद्रि
याश्रयंभगवद्रूपं ॥ ८१ ॥ वि[84]श्वंभगवंतं । आत्मनोद्वारंसर्वजीवोत्पत्त्यादिद्वारं । लोकानामेवनिरुच्छ्वा
सःलोकपालास्तदर्थमेवशरणंययुः । ध्यातुर्ध्रुवस्यकीर्त्यर्थंहरिणासहदेवताः । लोकोच्छ्वासंनिरुध्याथश्वा
सार्थंचहरिंययुः । अन्यप्रवृत्तयस्तेभ्योनतेषामन्यतःक्वचित् । स्वोत्तमेभ्यस्तुदेवेभ्यस्तेषांस्युःस्वप्रवृत्तयइति
तत्त्वनिर्णये ॥ ८४ ॥ अखिलसत्वसमूहस्य । तेजःशक्तिःसमूहश्चगृहंधामेतिकथ्यतइतितत्त्वनिर्णये ॥ ॥८३५॥
॥८५॥ इतिचतुर्थतात्पर्येनवमोऽध्यायः ॥ ९ ॥ ॥ परं[ब्र]ह्मणिस्थितस्यापिध्यानादिकंविनानभवति ।

सुसौहृष्टत्वात् ॥१०॥ ये[१२]स्वाःसंपदःस्मरंतितेत्वांनस्मरंति । येभगवद्भक्तसंगाःतेस्वाःसंपदोनस्मरंति ॥१२॥
पश्यमानोपितुहरिंनतुवेत्तिकथंचन । वेत्तिकिंचित्प्रसादेनहरेरथगुरोस्तथेतिब्रह्मतर्के ॥ १३ ॥ [१५]वधिं
अवधिं। अल्लोपेन । संसारस्यावधिभूतंत्वामास्थिताः । तैःसहैवास्ते ॥ १५ ॥ आनुपूर्वीश्रुतिश्चैवत्रयी
चाम्नायउच्यतइत्यभिधानं ॥१६॥ [१७]तवपादमूलंभजतआचार्यस्याशिष्टयःशिक्षाःसत्याशीःप्रदाएव । तथा
पिअस्मान्शिष्यान्विशिष्टफलप्राप्तयेपुनःपरिपातिभवान् ॥ १७ ॥ [३१]आधिपत्यमनित्यंतुध्रुवलोकस्ययद्ध्रुवे ।
नतुतत्स्थानगंतॄणांयतीनांगतिरुत्तमा । तस्यापिमुक्तिर्नियतानियतंचापितत्पदं । तथापिकामनानिंदाध्रु
वेणसुकृतावतेतिभविष्यत्पर्वणि ॥३१॥ [३३]द्वितीयस्यस्वतंत्रस्यत्वभावाद्भयवर्जितः । ईश्वरश्चेशितव्यस्यभा
वात्सपरमेश्वरइतिहरिवंशेषु ॥३३॥ [३४]हरौनियतचित्तत्वाद्गृहवत्तत्प्रवेशनात् । मोक्षंतादात्म्यमित्याहुर्नतद्रू
पत्वतःक्वचिदितिभविष्यत्पर्वणि । तच्चित्ततैवतादात्म्यं। नैकात्म्यतांमेस्पृहयंतीत्युक्तत्वात् । हरीच्छितेच्छु
तैकात्म्यंनतेनैकस्वरूपतेतिच । कामेनमेकामआगादितिचश्रुतिः ॥३५॥ [५३]कलभश्चैवकन्यानांकारिणीबा
लमंगलेतिराजनीतौ ॥५३॥ इतिचतुर्थतात्पर्येदशमोऽध्यायः ॥१०॥ ॥ [४८]हरिरक्लिष्टकारित्वादयस्कांत

वदुच्यते । कामकर्मस्वभावेषुकालेचावस्थितोहरिः । सर्वकारणभूतःसंस्तत्तन्नाम्नाभिधीयतइतिसत्यसंहि
तायां ॥ ४८ ॥ इतिचतुर्थतात्पर्येएकादशोऽध्यायः ॥ ११ ॥ ॥ पैरमेश्वरंविनाहंत्वंकर्तेतिभ्रांतिः ।
नाहंकर्तानकर्तात्वंकर्तायस्तुसदाप्रभुरितिमोक्षधर्मे । विपर्ययोदुःखादिःसुखादिरूपस्य ॥ ४ ॥ आत्म
सामर्थ्याख्ययाशक्त्यायुक्तं । गुणमय्याविरहितं ॥ ६ ॥ निरंतरंभगवत्पादमानसं ॥ ७ ॥ [१०]द्रव्यक्रिया
देवतानांविषयं । अकर्मफलप्रदंमोक्षप्रदं ॥ १० ॥ विश्वःपूर्णस्तथासर्वःसमस्तश्चाभिधीयतइत्यभिधानं
॥११॥ [१५]अन्यथात्वात्क्षिप्रनाशाज्जगत्स्वप्नादिवत्स्मृतं । वर्तमानंनियत्यैवसदैवपरमात्मनीतिवाराहे । महा
मायेत्यविद्येतिनियतिर्मोहिनीतिच । प्रकृतिर्वासनेत्येवंतवेच्छानंतकथ्यतइतिस्कांदे ॥ स्थूलेपातालादिके ।
शिलावत्प्रतिमारूपे । शिलावत्प्रतिमैषाहिविष्णोर्लोकचतुर्दशीतिच ॥१७॥ [२६]शिंशुमारोध्रुवश्चैवसंस्थितौ
यत्पुरेसदा । तत्पश्यंतिनयांत्यन्येलोकंयांतिसुरान्विनेतिच ॥२६॥ [४१]मनसापरमात्मानंप्रतिसंतुष्टः ॥ ४९ ॥
इतिचतुर्थतात्पर्येद्वादशोऽध्यायः ॥१२॥ ॥ [२]स्वरूपंजीवस्यबिंबरूपंपरमात्मानं । भिन्नस्वरूपमभिदंस्व
रूपंतुद्विधाहरेः । भिन्नस्वरूपंब्रह्माद्यामत्स्याद्यभिदमुच्यतइतिगारुडे ॥९॥ [११]कल्पःकल्पाभिमानीसन्शिंशु

मारानुगःस्थितः । वत्सरोराज्यमकरोत्पित्रादत्तंमहाबलइतिब्राह्मे । चक्रेनारायणःसाक्षात्किंस्तुघ्नःकल्पमा
त्मजमितिपाद्मे ॥११॥ [३३]अनपत्योपिसद्धर्मालोकजिन्नात्रसंशयः । देवैस्तुपृथुजन्मार्थैहविरंगस्यनोहृतं॥३३॥
[४१]अनपत्यत्वकर्मासौबालहत्याकृतेःपुरा । अतोदुष्टोभवत्पुत्रइष्टोविष्णुरतःपृथुरितिवामने ॥ ४१ ॥ [३९]मृत्युर्दे
वोयमभ्रातावेनमातामहोसुरः ॥३९॥ [४०]पीडांवेनेतिचप्राहुर्वेनोसौपीडनादभूदितिच ॥४०॥ इतिचतुर्थता
त्पर्येत्रयोदशोऽध्यायः ॥१३॥ ॥ [२२]सर्वलोकान्संगृह्णातीतितत्संग्रहः । सर्वस्यग्रहणाद्विष्णुःसर्वसंग्रहउच्य
ते । वेदस्यतद्वक्तृकत्वात्प्राधान्यंतुत्रयीमयः । सर्वंतद्विषयत्वेनमुख्यंसर्वमयस्ततइतिस्कांदे ॥२२॥ विष्णोः
सन्निहितत्वात्तुसर्वेदेवाहरेःकलाइतिच ॥२३॥ [३५]अहंब्रह्मेतिवेनस्तुध्यायन्नापाधरंतमः । तद्भ्राद्धांतोमहींव्या
प्तोभेर्याख्यापयतोनिशं । असुराराक्षसाश्चैवपिशाचास्तत्पथिस्थिताः । भूमौतत्पृथुनासर्वंनिरस्तंमहिता
त्मना । पुनःकलियुगेप्राप्तेअष्टाविंशतिमेमनोः । वैवस्वतस्यसमयेजाताःक्रोधवशाभुवि । ख्यापयंतिदुरा
त्मानोमणिमांस्तत्पुरःसरइतिभविष्यत्पुराणे ॥३५॥ [४७]त्र्यंशोवेनःसमुद्दिष्टःसत्वांशःपृथुतामगात् । रजोंशश्च
दिवंयातोनिषादस्तामसोभवत् । स्वयंवेनश्चतुर्थस्तुमहातमसिपातितइतिकौर्मे । पापरूपीपृथग्जातोनिषा

दोवेनदेहतः । यस्मात्तस्मात्पृथोःपुत्रादृजोवेनोदिवंययाविति गारुडे ॥ ४७ ॥ पृथुहैहयादयोजीवास्तेष्वा
विष्टोहरिःस्वयं । विशेषावेशतस्तेषुसाक्षाद्धर्यंशतावचः । किंस्तुभव्यासऋषभकपिलामत्स्यपूर्वकाः । आकू
तिजैतरेयौचधर्मजत्रयमेवच । धन्वंतरिर्हयग्रीवोदत्तात्रेयश्चतापसः । स्वयंनारायणस्त्वेतेनाणुमात्रविभेदि
नः । बलतःस्वरूपतश्चैवगुणैरपिकथंचनेतितत्त्वनिर्णये । तत्रसन्निहिताश्रीश्चयत्रसन्निहितोहरिः । नास्यस
न्निधिमात्रेणरमापत्नीत्वमाव्रजेत् । साक्षादेवतुसाक्षाच्चहरेःसन्निधितःक्वचित् । गोप्यादिरूपाभवतिविपरी
तंनतुक्वचिदितिच ॥५०॥ इतिचतुर्थतात्पर्येचतुर्दशोऽध्यायः ॥१४॥ ॥ तत्रसन्निहितःसाक्षाद्भगवान्
॥२॥ ब्रह्मण्यंतेगरुडेरुद्रेकामेशचीपतौ । अनिरुद्धेमनौचैवपृथौचकृतवीर्यजे । नारदेचैवमाद्येषुविशेषात्स
न्निधिर्हरेः । सुदर्शनादिष्वस्त्रेषुतथासन्निहितोहरिः । नरलक्ष्मणौबलश्चैवशेषस्यांशाःप्रकीर्तिताः । तथा
भरतशत्रुघ्नौचक्रशंखावुदाहृतौ । प्रद्युम्नश्चकुमारश्चस्कंदःकामांशकाःस्मृताइतिस्कांदे । वैन्येपृथौसन्निहि
तोराजरूपीजनार्दनइतिब्राह्मे ॥१॥इतिचतुर्थतात्पर्येपंचदशोऽध्यायः ॥१५॥ ॥ यँल्लोकेनिरर्थकंतद्भग
वद्रूपेषुप्रतीतनानात्वदृष्टांतेनपश्यंतिसंतः । मत्स्यरूपादिनानात्वदृष्टिवद्यन्निरर्थकमितिपाद्मे । एवंधर्मा

न्पृथक्पश्यन्निति च ॥२०॥ इतिचतुर्थतात्पर्येषोडशोऽध्यायः ॥१६॥ ॥ [२]राज्ञासमानवयसःश्रेणयस्त्वंगरक्षकाइत्यभिधानं ॥२॥ [६]पूर्वंतनानांकथासंबंधेनहरेर्यशः ॥६॥ [३१]ब्रह्मादिजीवदेहास्तुमायादेहाःप्रकीर्तिताइतिवाराहे ॥२९॥ [३२]संपरतःईश्वरइत्याक्षेपः ॥३२॥ विरुद्धशक्तयोयस्यनित्यायुगपदेवच । तस्मैनमोभगवतेविष्णवेसर्वजिष्णवइतिच ॥३३॥ इतिचतुर्थतात्पर्येसप्तदशोऽध्यायः ॥१७॥ ॥ [१५]गुणाःस्वरूपभूताश्चबाह्याश्चेतिद्विधामताः । स्वरूपभूताव्यज्यंतेहरेर्बाह्यान्दुदुहुःपयइतिब्राह्मे ॥१५॥ प्रतिमन्वंतरंप्रायःप्रह्लादाद्याबभूविरइतिच ॥१६॥ [३१]गोष्ठंघोषइतिप्रोक्तोव्रजस्तत्पालसंस्थितिरित्यभिधानं ॥ ३१ ॥ इतिचतुर्थतात्पर्येअष्टादशोध्यायः ॥१८॥ [१७]देवाःशक्ताश्चमोहायदर्शयेयुरशक्तवत् । ऋषीणांचैवराज्ञांचनहितेदेवतासमाः । आज्ञयावाहरेःक्वापिकार्यतोवाक्वचित्क्वचिदितिगारुडे । प्रणिपातादिकंदेवैर्ऋष्यादिषुजनार्दने । क्रियतेतोनतेषांहितेजोभंगःकथंचन । अत्युत्तमानामवरेतेजोभंगोनविद्यते । यथानराणांतिर्यक्षुप्रायःसाम्येहिसस्मृतइतिस्कांदे ॥१७॥ [२५]धर्मोपमस्त्वधर्मोयमुपधर्मःसउच्यतइतिहरिवंशेषु ॥२५॥ इतिचतुर्थतात्पर्येएकोनविंशोऽध्यायः ॥१९॥ ॥ [७]अन्येषामावृतोविष्णुःस्वस्यानावृतएवच ॥७॥ आत्मासर्वस्यजगतःस्वस्यात्मान्यो

नविद्यते । सुषुप्तवच्चनिर्दुःखोजाग्रद्वच्चप्रवृत्तिमान् । अनन्यसदृशत्वाच्चकेवलोसौहरिःस्मृतइतितंत्रसारे ।
आत्मनैवावगम्यत्वाद्धरिरेषसुषुप्तवत् । केवलत्वेनविज्ञेयोमुक्तिस्तद्वद्दुःखतेत्यध्यात्मे ॥८॥ [१२]हरिरक्लिष्टका
रित्वादुदासीनइतीर्यतइतिच ॥१२॥ जीवाद्भिन्नस्यमनसोगुणाःसत्वादयोमताः । तज्ज्ञात्वानविकुर्वीतस्व
स्वरूपंमनस्तथेतिषाड्गुण्ये ॥१३॥ [१९]आयासदुःखव्रीडादीन्प्रायशःसुखिनोपितु । नियमाद्दृषिभूतेषुमोहाया
दर्शयन्सुराइतिब्रह्मतर्के ॥१९॥ अपक्वभक्तियुक्तायेनतेषांविष्णुदर्शनं । प्रायोभवतिदुःखस्यत्वभावःप्राय
शोभवेदितिप्रकाशसंहितायां । जगत्समस्तंविश्वंचनिखिलंपूर्णमुच्यतइत्यभिधानं ॥ २० ॥ [२१]धिष्ण्यंतेजश्च
सामर्थ्यंमहिमाधामचोच्यतइत्यभिधानं । अल्पपुण्यत्वान्नमद्भक्तियोग्यइतिनमंतव्यं । यतःफल्ग्वप्युरुकरो
षिवात्सल्यात्।विनावात्सल्यंश्रियापिकिंतव॥२९॥अथान्यच्च।अतःवात्सल्यादेव॥३०॥ [३१]भूतेषुहरिरित्येवहर्य
र्पणधियातथा।सर्वभूतेषुचहरेःपूजाकार्यात्मवेदिभिरितिपाद्मे॥३७॥इतिचतुर्थतात्पर्येविंशोऽध्यायः ॥२०॥
देवे[१०]भ्यंऋषयोभूपाश्चोच्यंतेशक्तिमत्तया । क्वचित्क्वचिन्मोहनार्थंकादाचित्काच्चहेतुतइतिनारदीये ॥ १० ॥
[२६]प्रकाशवद्ध्रुवोदेवामानुषाश्चापिकेचनेतिवाराहे ॥ २६ ॥ [२९]एकात्माहरिरुद्दिष्टःप्रधानत्वात्समस्ततइतिच ।

प्रायइत्यवधारणाक्षेपः । प्रायःपदंस्यात्प्राचुर्येचाक्षेपात्मावधारणे । अर्थतोवधृतिःक्षेपोमुखाक्षेपोवधारणमि तिच ॥२९॥ [३३]संपद्यतेप्राप्यते ॥३३॥ प्रधानादीन्गृहीत्वाजीवंप्राप्यपुण्यकर्मभिर्ज्ञायते । यथागुणवद्दिंधने भिर्मथनादिना ॥३४॥ [३७]हरिरिंद्रोयच्चरणाभिवंदनादनपायिनींलक्ष्मीमाप । सोपिविष्णुर्ब्राह्मणप्रियः । यत्प्र सादेनदेवेंद्रोवेदोदितयशाअभूत् । सोपिविष्णुरमेयात्मासदाब्राह्मणवत्सलइतिहरिवंशेषु ॥ ३७ ॥ [३९]तस्मा न्मोक्षसुखात्परंहविर्भुजांदेवानामप्यत्रसंसारेस्तिकिं ॥३९॥ पारमहंस्यवर्यागावोयस्य ॥४०॥ [४५]वेनस्थोराज सोजीवःपृथुनास्वर्गतिंगतः । स्वयंतुतमएवापसात्विकःपृथुतामगादितिब्रह्मांडे ॥४५॥ [४८]अहोवयमित्यादि तत्स्थपरमेश्वरापेक्षया । योब्रह्मक्षत्रमाविश्येतिवचनात् ॥४८॥ इतिचतुर्थतात्पर्येएकविंशोऽध्यायः ॥२१॥ [५]सर्वज्ञाश्चविरिंचाद्यानजानीयुर्हरिंपरं । हेतवोजगतोप्यस्ययथासौवेदकेशवइतितंत्रसारे ॥५॥ [१६]हरेस्तुप्रति माप्राज्ञास्तत्रस्थःकेशवःस्वयं । ददातिज्ञानमीशेशःपरमात्मास्वयंविभुरितिच ॥१६॥ [२०]कैषणेनगच्छतीतिक षायःपापंतदुभयमेवमलं । रतिःपरात्मनिहरावन्यत्रारतिरेवच । पुमर्थसाधनंज्ञेयंनातोन्यन्मुख्यमिष्यतइ ति ॥२०॥ [२६]अबीजंहृदयं । बीजहृदयंविना । जीवोपाधिर्द्विधाप्रोक्तःस्वरूपंबाह्यमेवच । बाह्योपाधिर्लयंया

तिमुक्तावन्यस्यतुस्थितिः । सर्वोपाधिविनाशेहिप्रतिबिंबःकथंभवेत् । कथंचात्मविनाशायप्रयत्नःसेत्स्यति
क्वचित् । अपुमर्थताचमुक्तेःस्यादभावात्पुंसएवतु । ज्ञानज्ञेयाद्यभावाच्चसर्वथानोपपद्यते । तस्मादेतन्मतं
येषांतमोनिष्ठाहितेमताइतिस्कांदे ॥ २६ ॥ दग्धाशयः । बीजाशयनाशेतद्गुणानांज्ञानादीनामभावान्नकिं
चिद्विचक्षीत । परात्मनोर्यदाव्यवधानंसंसारावस्थायांतदास्वप्नइवेत्येतावद्बीजहृदयनाशेत्वपुरुषएव । ना
त्मनाशएवेत्यर्थः । अतःसंसारावस्थैवोत्तमास्यात् । भिदायदिनदृश्येतजीवात्मपरमात्मनोः । मुक्तौतदा
विमोक्षायकोयत्नंकर्तुमर्हतीतिब्रह्मांडे । मग्नस्यहिपरेऽज्ञानेकिंनदुःखकरंभवेत् । प्रवृत्तिधर्ममेवाहंमन्येभरत
सत्तमेतिमोक्षधर्मेषु ॥२७॥ [३०]एवंविधाज्ञानकारणमाह । इंद्रियैर्विषयाकृष्टैरित्यादि । बहुस्मरणशक्तिस्तुचेत
नेत्युच्यतेबुधैरितिशब्दनिर्णये ॥३०॥ [३१]स्वपक्षपातस्त्वभ्यासाद्भोगार्थंव्यापृतस्यतु । भवेत्ततोनेकशास्त्रयथार्थ
स्मरणेशिता । नश्यत्यतःस्मृतेर्नाशाद्भगवत्पक्षपातिता । विनश्येत्तेनचैवास्यभवेज्ज्ञानविपर्ययः । नचज्ञा
नविपर्यासादन्यन्नाशकरंक्वचित् । सर्वस्यैतस्यमूलंहिदुष्टसंसर्गएवतु । दुष्टसंगोविरक्तस्याप्यन्यथाज्ञानका ॥८३९॥
रणं । दुष्टसंगाद्धिविष्णोश्चस्वातंत्र्यंमन्यतेबुधः । अभावंस्वात्मनोन्यस्यमुक्तिंचापिनिरात्मतामित्यादिस्कां

दे ॥३१-३५॥ मैंनोमात्रंहरेर्यस्मान्मनसामीयतेजगत् । व्याप्तेमनसिविष्णोश्चस्थितत्वाद्वासनामयं । वस आच्छादनेत्यस्माद्धातोर्वावासनामयं । अतोविष्णोरनीहायांलीयतेसकलंजगत् ॥३७॥ अनीहावस्थए वासौमुमुक्षुभिरवाप्यते । एवंविद्वान्बंधशक्तिंव्युदस्यहरिमाप्नुते । प्रकृतिर्भिदाचमायाचभ्रमश्चेत्यभिधीय ते । बंधशक्तिर्ययालोकोबंभ्रमीत्यनिशंभुवीतितंत्रसारे ॥३८॥ अनुवृत्तिरितिप्राज्ञैर्जीवन्मुक्तिरुदीर्यतइति शब्दनिर्णये ॥३९॥ सर्वसत्ताप्रदत्वात्तुसर्वतत्त्वंहरिःस्मृतः । सर्वत्रविततत्वाद्वासोहंत्वमितिचोच्यते । सर्वां तर्यामकत्वात्तुनजीवात्मत्वतोहरिरितितत्त्वनिर्णये । त्वमनयोःस्थावरजंगमयोर्मध्येएकोजीवःविष्वगाधिः नानादुःखःसन् । हृदिस्थितमवैहिअहंचसजीवोस्मिज्ञानान्महान्भवामियःक्षेत्रवित् ॥ सर्वस्यप्रत्यक्कास्ति सभगवानिति । व्यवधानेनान्वयोपियोग्यतापेक्षयाभवेदितिशब्दनिर्णये । अभिमानस्त्वहंकारआत्माचेत्य भिधीयतइतिच ॥ ४० ॥ यत्स्वरूपतयाभातमज्ञानांगगनादिकं । विवेकज्ञानिनांरज्जौसर्पमावद्विधूयते । तन्नित्यमुक्तभावेननिरस्तप्रकृतिंभजेदितिज्ञानविवेके । नभ्रांतिर्जगतोदृष्टिर्नभ्रांतिर्हरिदर्शनं । अन्योन्या त्मतयादृष्टिर्भ्रांतिरित्यवधार्यतामितिच । मायेतिज्ञाननामस्यान्मायेतिप्रकृतिस्तथा । ज्ञानंस्वरूपंविष्णोस्तु

प्रकृतिर्नहरेस्तनुः । एवंविवेकिनोविश्वंब्रह्मरूपेणनेष्यतइतिवाराहे । ज्ञानप्रकृत्याख्यमायाद्वयस्यविवेकज्ञा
नात्सदसतोर्विष्ण्वात्मतयाप्रतीतिःस्रज्यहिबुद्धिरिवविधूयतइत्यर्थः । पंचभूतात्मकंदेहंविष्णोःपश्यंत्ययोगि
नः । तथानयोगिराद्धांतोज्ञानंदेहोयतोहरेरितिषाड्गुण्ये ॥४१॥ द्विमतयःजगतिभगवतिचप्रतीतियुक्ताअ
पिभक्तिविशेषात्तत्त्वंनोद्ग्रथयंति । प्रतिसंसारंगुणास्तेषांविरुद्धाएवप्रतीयंतेयतः । नैजःसर्वगुणोत्कर्षःसर्वे
भ्योमहदुच्यतइतिशब्दनिर्णये॥४२॥ [४१]ॐनाद्यंतंपरंब्रह्मनदेवाऋषयोविदुः । एकस्तद्वेदभगवान्प्रभुर्नारायणः
स्वराडितिमोक्षधर्मेषु ॥४९॥ [६४]गुरुविप्रेषुभक्त्याचपरेषांहितकृत्तया । प्रश्रयेणचकीर्त्याचपृथूराममनुव्रतइति
ब्रह्मांडे । नगुरुर्नचधर्मोस्तिरामदेवस्यकुत्रचित् । तथापिधर्मरक्षार्थंगुरुभक्तिमदर्शयदितिवाराहे ॥६४-६५॥
इतिचतुर्थतात्पर्येद्वाविंशोऽध्यायः ॥२२॥ ॥ [११]ॐआविर्भावतिरोभावौज्ञानस्यज्ञानिनोपितु । अपेक्ष्याज्ञस्त
थाज्ञानमुत्पन्नमितिचोच्यतइतितंत्रसारे ॥११॥ अपरोक्षतयावृत्तिज्ञानभेदनिरीक्षणं । स्वरूपज्ञानसंस्थित्या
ज्ञानत्यागउदीर्यते । स्वरूपज्ञानतःसम्यग्प्रतिर्विष्णुकथासुचेतिब्रह्मतर्के ॥१२॥ ब्रह्मणिभूतः ॥१३॥ [१५]ॐअस्येदं
कारणमितिज्ञानमेवविलापनं । समाधिकालेविज्ञेयंदेहादेर्दर्शनात्पुनरितिच ॥१५॥ मायेतिप्रकृतिश्चेतिमा

याजीवश्चकथ्यते । शेतेनुकेशवंयस्मात्तस्मादनुशयोपिच । एतैस्तुनामभिर्वाच्याश्रीर्विष्णोरनपायिनी ।
तयैवानुशयीजीवस्तयाबद्धोयतःसदा । पुरुषःशयनात्पूर्षुतथाहानादहंस्मृतः । अप्राकृततनुत्वात्तुस्वरूपं
हरिरुच्यते । नित्यचिद्दर्शनान्नित्यंब्रह्मपूर्णत्वतःसदेतिभागवततंत्रे ॥१८॥ [२५]अनपेक्षोगुणैःपूर्णोधन्यइत्युच्य
तेबुधैरितिशब्दनिर्णये ॥२५॥ इतिचतुर्थतात्पर्येत्रयोविंशोऽध्यायः ॥२३॥ ॥ [११]राजपुत्रींशुकीमग्निरावर्त
तींप्रदक्षिणं । आदायांतरधाद्दानसमयेमन्मथातुरइतिब्राह्मे ॥११॥ [२१]मांश्रियं । ऋजवोनामयेदेवायोग्या
ब्रह्मपदस्यतु । तएवशतजन्मानिविशेषोपासकाहरेः । प्राप्यब्रह्मपदंपश्चाच्छ्रियंप्राप्यानुमोदिताः । तया
ततोहरिंयांतिवसंतिहरिसन्निधौ । अनादिकालभक्ताश्चज्ञानिनस्तेनसंशयः । विशिष्टाज्ञानभक्त्यादौसर्व
जीवनिकायतः । सर्वदापिविशेषेणशतजन्मप्रयत्नतः । स्वपदप्राप्तिरुद्दिष्टाततोमुक्तिरवाप्यते । तथैवचत्वा
रिंशद्भिःपदंशैवंचजन्मभिः । विंशद्भिरैंद्रंदशभिरन्येषामप्युदीरितमितिषाड्गुण्ये ॥२९॥ [३०]अथएवमनादिभ
क्तोहंयतःअतःप्रियायूयं ॥३०॥ [३३]सर्वांतर्यामिकत्वात्तुसर्वनामाजनार्दनः । नतुसर्वस्वरूपत्वात्सर्वेशोसौहरि
र्यतइतिब्रह्मतर्के ॥३३॥ [५५]स्वाराज्यस्यइंद्रादेः ॥५५॥ [५८]संगोभागवतैर्भूयानपुनर्भवमात्रतः । यतोविशिष्टमा

नंदंमुक्तौजनयतिस्फुटमितिच ॥५८॥ अंघ्र्योर्जातयोःकीर्तितीर्थयोः ॥५९॥ विश्वंस्मिंस्थितमपिनभात्य
ज्ञानां ॥६१॥ यस्यजीवादिभ्योभेदबुद्धिः । सदिवासम्यग्ज्ञानंसम्यग्ज्ञानिविषयासत्यैवेत्यर्थः । रात्रिरज्ञा
नमुद्दिष्टंसम्यग्ज्ञानंदिवास्मृतमितिशब्दनिर्णये । जीवेभ्योजडतश्चैवभेदज्ञानंहरेःसदा । वास्तवंज्ञानमुद्दिष्टं
तेनमुक्तिरवाप्यतइतिषाड्गुण्ये ॥६२॥ भूतेंद्रियांतःकरणैरुपलक्ष्यते ॥६३॥ सुप्तशक्तिःस्वात्मन्येवाप्तशक्तिः ।
प्रकृतेःस्वापउद्दिष्टोहर्यन्यस्यत्वदर्शनं । विशेषेणहरौचापिरतिर्ज्ञानात्मिकायतइतिसत्यसंहितायां ॥ ६४ ॥
अवधारणेघशब्दःस्यात्सारमात्रंतुसारघमितिशब्दनिर्णये ॥६५॥ अस्मादेतद्भवतीत्युपपत्त्यपेक्षांविनापिस्व
भावतएव ॥६८॥ अहरहःक्लेशमोक्षःसुप्तौ । तावद्देदेत्याक्षेपोदौर्लभ्यज्ञापनार्थः ॥६९॥ इतिचतुर्थतात्पर्ये
चतुर्विंशोऽध्यायः ॥२४॥ ॥ यथावत्कर्मकर्तुस्तुज्ञानंसाहाय्यकारकं । अन्यथाकुर्वतःकर्मनिरयायभवि
ष्यति । तथापिकर्मनिंदंतिनयतःकर्तुमंजसा । शक्यंज्ञानफलस्यापिबहुत्वान्मोहनायचेतिब्रह्मांडे ॥७॥
देवंजीवाभिमानीतुब्रह्मैवतुचतुर्मुखः । मानुषाणांतुजीवानामभिमानीपुरंजनः । सतुराजाहरेःपुत्रस्त्वसुरा
णांकलिःस्वयं । जीवसंसृतिवत्तस्मात्पुरंजनकथापितु । तस्माज्जीवसृतिज्ञस्यैपुरंजनकथांमुनिः । नारदो

श्रावयद्विद्वान्नृपंप्राचीनबर्हिषं । प्रायस्तुतत्कथाजीवेस्थिताप्रत्येकशोपितु । प्रत्येकंयत्तुयुज्येततदुन्नेयंयथा
तथा।उक्तंभागवतेप्येतत्पुराणेयावदिष्यते। प्रत्येकशस्तुजीवानांतदन्यत्तस्यकेषलमितितंत्रभागवते ॥१०॥
येपुरंजनभृत्याद्याभार्याद्याःसर्वएवच । तेपिमानुषबुध्द्यादेर्विज्ञेयाअभिमानिनः । गायत्र्याद्यास्तुदेवानाते
पिचैतेषुसंस्थिताः । अलक्ष्मीद्वापराद्यास्तुअसुरास्तेपिमानुषाइतिच ॥२१॥ दक्षिणश्रोत्रमार्गेणदेवलोकंव्र
जत्यसौ । वामश्रोत्रेणपितृणामितिवेदविदोविदुरितिप्रवृत्तितंत्रे ॥ ५२ ॥ इतिचतुर्थतात्पर्येपंचविंशोऽध्या
यः ॥२५॥ ॥ अलुब्धोलोकोपकारार्थंग्रन्नात्मार्थादधिकमपिहन्यात् । उपकारःसतांयेनतत्कृत्वानैवदु
ष्यति । अतीवनिंदितमपिबहुहिंसायुगेववा । अथवाज्ञानिनःकर्मनदुष्टमपिलिप्यतइत्यध्यात्मे ॥६॥इतिच
तुर्थतात्पर्येषड्विंशोध्यायः ॥२६॥ ॥ अलौकिकंचशास्त्रीयंकर्तव्यंलौकिकंकुतः । लोकार्थंशास्त्रहायाति
निरयंत्वितरःसुरानितिपाद्मे ॥२५॥ इतिचतुर्थतात्पर्येसप्तविंशोऽध्यायः ॥२७॥ ॥ स्वप्नेनशारीरमभिप्र
हत्यासुप्तःसुप्तानभिचाकशीतीतिश्रुतिप्रसिद्धःस्वप्नइवेतिदृष्टांतत्वेनोच्यते । स्वप्नेहिजीवस्यास्वातंत्र्यंप्रसि
द्धं । अतस्तत्रपरमेश्वराधीनत्वंसिद्धमेव । अतोजीवव्यतिरिक्तईश्वरःसिद्धः । स्वप्नोयतोनस्वतंत्रस्ततस्त

द्दर्शकःपरः । जीवादन्यस्तुविज्ञेयःसविष्णुरवधार्यतामितिवाराहे ॥४०॥ इंद्रि[५७]याणियत्रसंगृह्यंतेसगोलकइं
द्रियसंग्रहः ॥५७॥ जीव[६२]सत्ताप्रदत्वाच्चसद्दशत्वाच्चकेशवः । कथ्यतेतदभेदेननतुजीवस्वरूपतइतिच ॥६२॥
इतिचतुर्थतात्पर्येअष्टाविंशोऽध्यायः ॥२८॥ ॥ सुं[३०]खवद्दूरतोदृश्यंतत्कालेदुःखमेवयत् । मृगतृष्णेत्यतः
प्राहुर्भोगंवैषयिकंबुधाइतिशब्दनिर्णये ॥३०॥ तं[३३]प्रतिक्रियापिततदुःखं ॥३३॥ संसृ[३६]तेःस्वप्नसाम्यंतुयथार्थ
ज्ञानवर्जनमितिच । जाग्रत्यविद्यमानंतुदेहात्मत्वंतुकेवलं । अविद्यमानंस्वप्नेतुजाग्रत्त्वज्ञानमेवचेतिषाड्गुण्ये
॥३६॥ प्र[४३]जापतिपतिर्ब्रह्माविरिंचश्चेतिकथ्यतइतिशब्दनिर्णये ॥४३॥ मंत्र[४६]लिंगैर्व्यवच्छिन्नंवेदशब्दोक्तमात्र
कं । वेदोवदन्नपिहरिंनसम्यग्वक्तिकुत्रचित् । नारोहयत्यनुभवमप्रसिद्धस्वरूपतः । अथाप्यनुभवारोहःप्र
सन्नेकेशवेभवेत् । किंचिदेवसुसम्यक्चस्वयंत्वनुभवत्यमुमितिवाराहे ॥४६॥ यं[४९]दात्वनुभवीभूयाच्छब्दमात्रा
नुरोधनं । त्यक्त्वाथतंविदुःप्राज्ञास्त्यक्तवेदइतिस्मह । यदैवत्यक्तवेदःस्यादथास्मान्मुच्यतेभयात् । प्रायस्तुवै
दिकाएवरुद्राद्याअपिवैपुरा । वैदिकस्त्यक्तवेदश्चब्रह्मैवैकःप्रजापतिः । ततस्तुकेशवंभक्त्यासंपूज्यबहुजन्म ॥८४२॥
सु । त्यक्तवेदत्वमापन्नाःप्रसादात्परमेष्ठिनइतिमहासंहितायां । केवलंवेदशब्देनजानन्वैदिकउच्यते । वेदं

विनाप्यनुभवाज्ज्ञानंस्तुत्यक्तवैदिकइत्यध्यात्मे । तत्त्वंवेदानुसारेणचिंतयन्वैदिकोभवेत् । वेदऊहामनुसरेद्य
स्यसत्यक्तवैदिकइतिषाड्गुण्ये ॥४९॥ चित्ति[५७] बुद्धिरितिज्ञेयाचित्तंतुस्मृतिकारणमितिशब्दनिर्णये ॥ ५७ ॥
[७६]प्राणेंद्रियांतःकरणभेदेनत्रिविधंमतं । पंचपंचैवतेसर्वेप्राणाबुद्धींद्रियाणिच । कर्मेंद्रियाणिचतथातस्मात्पंच
विधंस्मृतं । लिंगंषोडशकंप्राहुर्मनसासहतत्पुनरितिब्राह्मे ॥७६॥ देहा[२]दिव्यतिरेकेणचिद्रूपोहमितिस्फुटं ।
सदैवानुभवोभक्तिर्विष्णौतद्दर्शनादनु । यस्यासौमुच्यतेक्षिप्रंसंसारान्नात्रसंशयइतिहरिवंशेषु ॥८२॥ संसा
रस्थमिदंसर्वमनित्यत्वाद्वृथायतः । अतःप्राहुःस्वप्नसमंप्राज्ञाजगदिदंमृषेतिविष्णुसंहितायां । सुषुप्तिस्वप्नयो
श्चैवस्वर्गव्योम्नोस्तथैवच । अन्योन्यनामताज्ञेयामनोबुद्ध्योस्तथैवचेतिशब्दनिर्णये । अतोभूतंभवद्भविष्यच्च
स्वप्नइत्यर्थः । रहोब्रह्मतथायज्ञःस्वःसत्यमितिगीयतइतिच ॥८३॥ इतिएकोनत्रिंशोऽध्यायः ॥२९॥ ॥पु[३]
रेषुत्वंजनाज्जीवःपुरंजनइतीरितः । पुराणांजननाद्विष्णुर्व्यंजकत्वंतयोरपीतितंत्रभागवते ॥३॥ दि[१७]व्यंवर्षस
हस्राणामितिसहस्रशब्दोबहुत्ववाची । मानुषाणांवत्सराणांलक्षद्वाशकंपुरा । प्रचेतोभिरियंपृथ्वीपालिता
व्याहतेंद्रियैरितिब्रह्मांडे ॥१७॥ यं[२०]ज्ञोब्रह्मविष्ण्वाख्यंब्रह्मयथानुभवंनव्यवह्रियते । सूक्ष्मेणमनसाविज्ञोवाचा

वक्तुंनशक्नुमइतिभारते ॥२०॥ [23] सुंअनिष्ठमनसि । अनवस्थितबुद्धीनांद्धितीयंदृश्यतेहरेः । सम्यक्स्वस्थित
बुद्धीनामिदंसर्वंहरेर्वशइतिच । नित्यंगृहीताःसत्वाद्याविग्रहाश्चत्रयःसदा । ज्ञानानंदात्मकास्तेतुविग्रहानि
गुणास्तथा । द्धौतत्रब्रह्मरुद्रस्थावेकोवैकुंठधामगइतिप्रवृत्तसंहितायां ॥२३॥ [24] हेरणाज्ज्ञानरूपत्वाद्धरिमेधा
विभुःस्मृतइतिच।हरिःसर्वगुणात्मत्वात्सत्वइत्यभिधीयतइतिषाड्गुण्ये॥२४॥ इतिचतुर्थतात्पर्येत्रिंशोऽध्यायः
॥३०॥ ॥ [2] पारिव्राज्यंब्रह्मसत्रंन्यासइत्यभिधीयतइत्यभिधानं। सर्वभूतात्मनिहरौमेधायत्रतद्ब्रह्मसत्रंसर्वभू
तात्ममेधः । हरिमेधास्तुसंन्यासोहरौमेधात्रयद्भवेदितिषाड्गुण्ये ॥२॥ [13] तावत्पर्यंतमेवफलमित्यवधिः ॥ १३ ॥
[16] आत्मभावःशरीरेतुद्रव्यभ्रमउदाहृतः । क्रियाभ्रमस्त्वहंकर्तामदीयानींद्रियाणितु । कारकभ्रमइत्युक्तस्तएते
विभ्रमायदा । श्वासादिवृत्तिलोपेनप्राणाउद्योगिनस्तदा । विलीयंतेप्राणभक्त्यानित्यंस्वापवतांस्फुटं । उद्यो
गएवजाग्रत्स्याद्योगिनांमुक्तिसिद्धयइत्यध्यात्मे ॥१६॥ [18] पूर्णोविष्णुःसएवैकइतिभावोयईरितः। आत्मैकभा
वइतितंविदुर्ब्रह्मात्मदर्शिनइतिसत्यसंहितायां ॥१८॥ संकल्पश्चविकल्पश्चऋतेविष्णुप्रसादतः । नैवसंभव
तोविष्णोःसमाभावात्तुसोद्धयइतितंत्रभागवते ॥१९॥ [22] अधनाश्चतएवात्मधनाश्चाधनात्मधनाः ॥२२॥ श्रि

यंदेवांश्चभृत्यत्वान्मनुतेबहुकेशवः । नात्मार्थांययतस्तेतुभक्त्यासर्वोत्तमोत्तमाइतिच ॥ २३ ॥ [२६]सर्वोत्तमत्वा
द्विष्णुर्हिमायइत्येवशब्द्यतइतिव्योमसंहितायां । देवानप्युत्तममुनीन्विनाकेशैंशुमारकं । हरेर्गृहंप्रविष्टास्तु
ध्रुवोदेवाश्चतद्गताइतिमात्स्ये ॥ २६ ॥ ॥ इतिश्रीमद्भागवतचतुर्थस्कंधतात्पर्येश्रीमदानंदतीर्थभगवत्पा
दाचार्यविरचितेएकत्रिंशोऽध्यायः ॥३१॥ ॥ संपूर्णश्चतुर्थस्कंधः ॥४॥ ॥ ॥
हरिःॐ ॥ [१९]विहितोयस्ययोधर्मोविष्णुनाप्रभविष्णुना । तेनमुक्तिर्भवेत्तस्यतंगुरुर्वेदसर्वविदितिप्रवृत्तसंहि
तायां ॥ [३१]पूर्वंसृष्टान्रथावृत्त्यास्थूलांश्चक्रेप्रियव्रतः । समुद्रांस्तेनतत्कर्तेत्याहुरेनंप्रियव्रतमितिगारुडे ॥३१॥
इतिपंचमस्कंधतात्पर्येप्रथमोऽध्यायः ॥१॥ ॥ [१७]परिहासप्रलापादिष्वनर्थावाग्भवेत्क्वचिदितिशब्दनिर्णये
॥१७॥ इतिपंचमस्कंधतात्पर्येद्वितीयोऽध्यायः ॥ २ ॥ ॥ [१८]नास्तिविष्णोःसमइतिजानंतोप्यृषयःसदा ॥
तज्ज्ञापनायलोकानामन्येषांप्रार्थयन्सममितिब्रह्मांडे ॥१८॥ इतिपंचमतात्पर्येतृतीयोऽध्यायः ॥ ३ ॥ ॥
[१]दुष्टानांमोहनार्थाययज्ञइंद्रपदेस्थितः । पस्पर्धंऋषभेणैवस्वरूपेणहरिःस्वयमितिवाराहे ॥ २ ॥ इतिपंचमता
त्पर्येचतुर्थोऽध्यायः ॥४॥ ॥ [५]क्रियाफलंतावदेव । कर्मात्मकंकर्मवशं ॥५॥ [६]अविद्ययाप्रयुङ्क्ते ॥६॥ [८]ब्रह्माद्या

याज्ञवल्क्याद्यामुच्यंतेस्त्रीसहायिनः । बध्यंतेकेचनैतेषांविशेषंचविदोविदुरितिसत्यसंहितायां ॥८॥ आत्म
नोविहितंकर्मवर्जयित्वान्यकर्मणः । कामस्यचपरित्यागोनिरीहेत्याहुरुत्तमाइतिच ॥१०॥ [१२] सर्वस्मादुत्तमो
विष्णुरितिज्ञानमुदाहृतं । प्रतिजीवंयेनमुक्तिस्तद्विज्ञानंविदांमतमितिच । ज्ञानंविष्णोरुत्तमत्वेतदेवप्रतिपू
रुषं । विशेषेणतुविज्ञानंतच्चजानातिसर्ववित् । द्वात्रिंशल्लक्षणैर्युक्तस्तीक्ष्णदंष्ट्रश्चसौम्यदृक् । घोररुक्केतिपु
रुषःससर्वज्ञउदाहृतइत्यध्यात्मे । षण्णवत्यंगुलोयस्तुन्यग्रोधपरिमंडलः । सप्तपादश्चतुर्हस्तःसदेवैरपिपूज्यतइ
तिवायुप्रोक्ते । न्यग्रोधमंडलोव्यामोबाहून्यग्रोधउच्यतइतिच ॥१२॥ [२०] नाभिरित्यथनामस्याद्धरेःसर्वाश्रयो
यतइतिकौर्मे । तत्तस्यममशुश्रूषणं ॥२०॥ [२२] द्विजदेवानांदेवः ॥२२॥ [२६] विविक्तदृष्टिर्जीवानांधिष्ण्यतयापरमे
श्वरस्यभेददृष्टिः । उपपादयेत्परात्मानंजीवेभ्योयःपदेपदे । भेदेनैवनचैतस्मात्प्रियोविष्णोस्तुकश्चनेतिपाद्मे ।
योहरेश्चैवजीवानांभेदवक्ताहरेःप्रियइतिच ॥२६॥ इतिपंचमस्कंधतात्पर्येपंचमोऽध्यायः ॥५॥ ॥ [२] महैश्वर्य
स्वरूपोहिभगवानृषभोविराट् । नैश्वर्याणिस्वकीयानिख्यापयामाससर्ववित् । उत्तमानांज्ञापनार्थंधर्मतत्त्व ॥८४॥
स्यकेशवः । तेषामैश्वर्यभोगेहिमनःसक्तिंव्रजेद्यदि । आनंदोमुक्तिगोह्रासंविकर्मकरणाद्व्रजेत् । धर्माधर्म

विहीनोपिभगवानृषभस्ततः । तेषांधर्मस्थापनार्थंनाविश्वक्रेपरांस्थितिं । देवानांनाशुभाद्रासःशुभात्काचि
त्सुखोन्नतिः । आधिकारिकजीवानामेवमन्येपुतद्वयं । अल्पाधिकारिणांतत्रह्रासोपिभवतिध्रुवं । अशुभा
भावजोन्नाहोमहाधीकारिणामपि । अशुभेकृतेनभवतितारतम्याच्चसस्मृतः । प्रजापाश्चतथादेवामहाधी
कारिणःस्मृताः । ऋष्यशीतिस्तथासप्तपितरोप्सरसांशतं । गंधर्वाणांतथाराज्ञांविंशदन्यासुजातिषु । अ
ल्पाधिकारिणःप्रोक्ताअनधीकारिणःपरइतिब्रह्मांडे ॥२॥ विष्णोःकलेवरत्यागोभूत्यागोन्योनविद्यते । कले
वरत्यागोऽन्येषांपंचत्वंसमुदीरितमितिकौर्मे । अनर्थांतरभावेनअर्थांतरंनास्तीतिमनसा ॥६॥ अभिमाना
भासेन । अभितोज्ञानप्रकाशेन ॥७॥ ज्ञानानंदात्मकोदेहोऋषभस्यमहात्मनः । तादृशेनैवमनसाक्रमंस्तु
कुटचाचले । दावाग्निमनुविश्याथतत्रस्थःप्रादहज्जगत् । एवमग्नेरभिव्यक्तस्तस्थौविष्णुःसनातनः । ऋषभत्वे
नसंगोप्यधर्मानद्यापितत्रगः । आस्तेसवासुदेवात्मावासुदेवोहमित्यजः ॥९॥ सदास्थितःस्थितिंतांतुसुश्रा
वार्हीदुरात्मवान् । पूर्वंतुपौंड्रकोनामवासुदेवःसुदुर्मतिः । जातिस्मरोद्विधाशास्त्रंपाषंडंनिर्ममेनृपः । एकं
तुवासुदेवाख्यंवासुदेवोहमित्यपि । कुत्सितंवासुदेवत्वप्रतिपादकमात्मनः । लोकार्थंचापरमपिचकारार्हं

१४२

तनामकं ॥१०॥ तत्प्रशिष्यःकमुर्नामनजानंस्तन्मतंपरं । वासुदेवात्मतांसर्वजीवानामवदत्कुधीः । कम्वा
ख्यंशास्त्रमकरोदभेदप्रतिपादकं । कुशास्त्रंसर्ववेदानांविरुद्धंतामसालयं । तद्दृष्ट्वाद्यापिवर्तंतेवर्तिष्यंतिकलौ
तथा । अशौचाअव्रताचारावासुदेवोहमित्यपीतिब्राह्मे ॥११॥ विशेषौद्धारतेपुण्यंचरेयुःपापमप्यथ । तथै
वभगवद्भक्तिपृथिव्यांनान्यवर्षगाइतिब्रह्मांडे ॥१४॥ योगंमायांयोगमायाफलंबाह्यं । नित्योदस्तायोगशक्ति
रनपेक्ष्यंफलंयंतः । नित्यस्वरूपभूतापिबहिःफलविवर्जनात् । अकर्मेत्युच्यतेयद्वन्मोक्षःफलविवर्जनादिति
पाद्मे ॥१६॥ नाद्रियंतेतुयेमोक्षंपूर्वंतेषांपरंसुखं । स्वयोग्यंव्यज्यतेमुक्तौतच्चोक्तंतारतम्ययुगितिव्योमसंहि
तायां ॥ ब्रह्मणोन्यस्यनोपूर्णाद्द्याद्भक्तिंजनार्दनः । मुक्तिंददातिसर्वेषांमुक्तानांकोह्यधीशितेतिब्रह्मतर्के
॥१८-१९॥ इतिपंचमतात्पर्येषष्ठोध्यायः ॥६॥ ॥ परोरजाऽरजस्कत्वात्त्रयीज्यत्वात्त्रयीस्तुतः । गुणात्यया
त्तुरीयश्चजातवेदाश्चसर्ववित् । हंसोदुःखादिहानेनजीवेशत्वाच्चगृध्रराट् । कालःसर्वनियंतृत्वात्परमात्माप्र
कीर्तितइतितंत्रनिरुक्ते ॥१३॥ इतिपंचमतात्पर्येसप्तमोऽध्यायः ॥ ७ ॥ ॥ अशेषभगवत्प्रियाणांनिकेतः
सएवभरतोमानुषापेक्षया । तत्कालस्थितभक्तेषुमानुषेष्वृषभात्मजः । वरोपिधिक्कृतोराज्ञासुहृदावैष्णवेष्व

पीतिगारुडे ॥९॥ भरणादिकृद्धरिरितिचिंतयन्नृपमब्रवीदितिच ॥१०॥ देहेनजातस्यदेहाभिमानिनः । देहमानीदेहजातोविदेहोमानवर्जितइतिच ॥११॥ प्राणयुक्तेररत्याचजडंजीवन्मृतंस्मृतमितिच । स्वामित्वंतुहरेरेवमुख्यमन्यत्रभृत्यता ॥१२॥ देवेषुतन्नियत्याचत्वदादेर्व्यावहारिकं । मनुष्येषुविशेषःकोव्यवहारमृतेवद । व्यत्यासान्नहिदेवेषुव्यत्यासःस्वामितांगतइतिच ॥१३॥ ([26]ब्रह्महत्यासहस्रस्यपापंशाम्येत्कथंचन । न पुनःसदवज्ञानेकल्पकोटिशतैरपि) । स्वतोमहदवज्ञानाद्रुद्रोप्यात्मानमादहेदितिच ॥ २६॥ इतिपंचमतात्पर्येदशमोऽध्यायः ॥१०॥ ॥ [2]नैवेदेष्वल्पबुद्धीनांब्रह्मतत्त्वंसमीक्ष्यते । महाबुद्धिस्तुवेदेषुपश्येद्ब्रह्मैवकेवलमितिच ॥२॥ समायारचितअंतरात्मामनः ॥५॥ क्षेत्रवित्तुहरिःप्राणःसाक्षीताभ्यांपुमान्सरेदितिच ॥७॥ पंदंविषयं । एकादशेंद्रियद्वारास्युरेकादशवृत्तयः । शब्दाद्यास्तदभीमानास्तदिच्छाश्चैवपंचशः । स्पर्शांतर्भावतःकर्मखानांनैवपृथग्गतिः ॥९॥ एकादशैवचेष्टाःस्युरिंद्रियाणांपृथक्पृथक् । गोलकास्तदधिष्ठानंचैकादशनिगद्यते ॥१०॥ एषसंसृतिसंभारोद्वादशैवाथवाभवेत् । दशकंविषयाणांचममाहमितिचद्वयं । द्वयमेवममाहंवासंसृतिस्त्वहमेववेतिच। अर्तिरुपस्थविषयः ॥११॥ द्रव्यंदेहादि । स्वभावोयोग्यता । जीवस्यक्षेत्र

ज्ञतःस्युःमिथःस्वतश्चनस्युः ॥१२॥ स्वैमाययात्मन्व्यवधीयमानःस्वेच्छयास्वस्मिन्नेवतिरोहितत्वेनस्थितः । स्वात्माधारःस्वेच्छयैवजीवदृष्टेस्तिरोहितः।क्षेत्रज्ञेत्युच्यतेविष्णुर्जीवस्थःपुरुषोत्तमइतिच ॥१४॥ अभिमानादेवसंसारोन्यथानेतिपरिहारः॥१८॥ इतिपंचमतात्पर्येएकादशोऽध्यायः॥११॥ ॥यस्मान्मूलकारणभूतोविष्णुरेव । अतोमुख्यंसर्वकारणत्वंतस्यैव । मूलाश्रयविवक्षायदिनस्यात्कुतःपृथिव्यांचलतीतिव्यवहारःयतोवांतराश्रयाबहवःसंत्यंघ्याद्याः ॥५॥ एवंमूलगोप्तृत्वंचविष्णोरेव ॥७॥ आश्रयत्वात्क्षितिरितिनिर्वचनेक्षितिशब्दोपितस्मिन्नेव । परमाणुमात्रायाःपृथिव्याअयुक्तत्वात्परमाणवोप्यस्याविद्ययैवाधारत्वेनकल्पिताः॥९॥ एवंसर्वंतथाप्रकृत्यैवकल्पितंविष्णोरन्यत् । एवंप्रकृत्याधारःस्वयमनन्याधारोविष्णुरेव । अतःसर्वशब्दाश्चतस्मिन्नेव । राजागोप्ताश्रयोभूमिःशरणंचेतिलौकिकः । व्यवहारोनतत्सत्यंतयोर्ब्रह्माश्रयोविभुः । गोप्ताचतस्यप्रकृतिस्तस्याविष्णुःस्वयंप्रभुः । तवगोप्त्रीतुपृथिवीनत्वंगोप्ताक्षितेःस्मृतः । अतःसर्वाश्रयश्चैवगोप्ताचहरिरीश्वरः । सर्वशब्दाभिधेयश्चशब्दवृत्तेर्हिकारणं । सर्वांतरःसर्वबहिरेकएवजनार्दनः । शिरआधारतायद्वद्ग्रीवायास्तद्ददेवतु । आश्रयत्वंचगोप्तृत्वमन्येषामुपचारतइतिच ॥१०॥ इतिपंचमतात्पर्येद्वादशोऽध्यायः

॥१२॥ ॥ [२८]तेहैहयवैन्यादीनार्षभस्येहकः समः । यस्योपदेशात्सिध्वीशोददर्शकपिलंप्रभुमितिच ॥ २८ ॥
[२९]युज्यतेअनेनेतियोगोहरिः ॥ सांख्यशिरसेउत्तमज्ञानस्वरूपाय ॥२९॥ इतिपंचमतात्पर्येत्रयोदशोऽध्यायः
॥१३॥ ॥ प्रियँव्रतोगयश्चैवकर्मदेवसमौगुणैरितिषाड्गुण्ये ॥७॥ इतिपंचमतात्पर्येपंचदशोऽध्यायः ॥१५॥
यँथाभागवतेतूक्तंभौवनंकोशलक्षणं । तस्याविरोधतोयोज्यंसर्वग्रंथांतरस्थितं । मंडोदेपूरणंचैवव्यत्यासंक्षी
रसागरे । राहुसोमरवीणांचमंडलाद्विगुणोक्तितां । विनैवसर्वमुन्नेयंयोजनाभेदतोत्रत्विति ब्रह्मांडे ॥७॥
इतिपंचमतात्पर्येषोडशोऽध्यायः ॥१६॥ ॥ वाराहेवामपादंतुतदन्येषुतुदक्षिणं । पादंकल्पेषुभगवानुज्ज
हारत्रिविक्रमइतिच ॥१॥ [१६]अनंतांतस्थितोविष्णुरनंतश्चसहामुना । पूज्यतेगिरिशेनेशइलावृतगतेनत्विति
च । जीवव्यपेक्षयाचैवतथांतर्याम्यपेक्षया । मिश्रास्तुस्तुतयोज्ञेयाविष्णोरन्यत्रकेवलमितिच ॥१६॥ इतिपं
चमतात्पर्येसप्तदशोऽध्यायः ॥१७॥ ॥ अंप्रयासेनकर्तृत्वमकर्तृत्वमिहोच्यते । महाशक्तित्वतस्तच्चयुज्य
तेपरमस्यत्विति तंत्रसारे ॥५॥ काँमदेवस्थितंविष्णुमुपास्तेश्रीरतिस्थिता । कामदेवंरतिश्चापिविष्णोस्तुप्रा
कृतांतनुमिति ब्रह्मांडे ॥१७॥ [२४]स्पँर्धंतइवदेवास्तुहरिणायत्रकुत्रचित् । हरेरेवाज्ञयाक्वापिदैत्यावेशादथापिवे

तिच ॥२७॥ [३१]उपलंभनादयथा । यथादृष्टंतथानतिष्ठत्यन्यथाभवतीत्यर्थः ॥ ३१ ॥ सर्वांतर्यामिकत्वात्तुसर्व
नामाहरिःस्वयं । नतुसर्वस्वरूपत्वाद्रूपत्वमुपचारतइतिच ॥३२॥ दशावतारइत्यादिसंख्याविनीयतेविशेषे
णनीयतेतज्ज्ञानंतद्रूपमेवहि ॥३३॥ [३६]क्रियार्थैर्यज्ञाद्यर्थैरिंद्रादिनामभिरीरितात्मने ॥ ३६ ॥ मायागुणैस्तदि
च्छानुसारिभिः । द्रव्येशःशंकरःप्रोक्तःक्रियेशोगरुडःस्मृतः । करणेशस्तथाब्रह्मावायुराधारपःस्मृतइतिब्र
ह्मतर्के ॥३७॥ इतिपंचमतात्पर्येअष्टादशोऽध्यायः ॥ १८ ॥ ॥ यस्यसम्यक्कभवतिज्ञानंभक्तिस्तथैवच ।
निश्चितस्तस्यमोक्षःस्यात्सर्वपापकृतोपितु । योममत्वादिनादोषःसत्वन्यविषयःस्मृतइतिच ॥७॥ [३]नधी
कारिणोदेवाःस्वर्गस्थाभारतोद्भवं । वाञ्छंत्यात्मविमोक्षार्थमुद्रेकार्थेधिकारिणइतिकौर्मे ॥ २८ ॥ इतिपंचम
तात्पर्येएकोनविंशोऽध्यायः ॥१९॥ ॥ सूर्यसोमाग्निवारीरविधातृषुयथाक्रमं । प्लक्षादिद्वीपसंस्थास्तुस्थि
तंहरिमुपासतइतिच ॥५॥ [३४]नाम्लंतुदधिक्षीरंक्षीरंसांद्रंतथादधीतिशब्दनिर्णये ॥२४॥ इतिपंचमतात्पर्ये
विंशोऽध्यायः ॥ २० ॥ ॥ [३२]ज्ञानानंदात्मकेविष्णौशिशुमारवपुष्यथ । ऊर्ध्वलोकेषुसंव्याप्तआदित्याद्यास्त
दाश्रिताइतिब्रह्मांडे ॥३२॥ इतिपंचमतात्पर्येद्वाविंशोऽध्यायः ॥ २२ ॥ ॥ [३८]ईलावृतस्थस्तुतिवत्पातालम्

लस्थस्तुतिर्योजनीयानंतविषया ॥ ३८ ॥ इतिपंचमस्कंधतात्पर्येश्रीमदानंदतीर्थभगवत्पादाचार्यविरचिते
त्रयोविंशोऽध्यायः ॥२३॥ ॥ पंचमस्कंधःसंपूर्णः ॥ ॥ ॥ ॥
हरिःॐ ॥ वे[४०]दानांप्रथमोवक्ताहरिरेवयतोविभुः । अतोविष्ण्वात्मकावेदाइत्याहुर्वेदवादिनइतिशब्दनिर्णये
॥४०॥ इतिषष्ठतात्पर्येप्रथमोऽध्यायः ॥१॥ ॥ ना[१४]रायणोयमित्यन्यहेलनविषयत्वेनोक्तमघहरं । सर्वथाऽघ
हरंविष्णोर्नामतद्भक्तिपूर्वकं । अभक्तयोदाहृतंनैवफलदातृभविष्यति । नामस्वामितयातस्यस्मरणंजायते
यतः । भक्तस्यातोनामकीर्तिःसंकेतादावपीरिता । अजामिलोपिस्मरणाद्भक्त्यामृत्योरमुच्यतेतिनारदी
ये ॥१४॥ इतिषष्ठतात्पर्येद्वितीयोऽध्यायः ॥२॥ ॥ [१२]ओतंप्रोतंपटवत् । यथाकंथापटाःसूत्रओताःप्रोता
श्वसंस्थिताः । एवंविष्णाविदंविश्वमोतंप्रोतंचसंस्थितमितिस्कांदे ॥१२॥ इतिषष्ठतात्पर्येतृतीयोऽध्यायः ॥
॥३॥ ॥ गु[२४]णोयथागुणिनः । कश्चित्पुरस्थितोगुणभूतःप्रधानभूतस्यराज्ञःममासौसखेतिराज्ञाचिंतितम
पिनजानाति । यथाराज्ञःप्रियत्वंतुभृत्योवेदनचात्मनः । तथाजीवोनयत्सख्यंवेत्तितस्मैनमोस्तुतइतिस्कां
दे ॥२४॥ देहाभिमानीवैश्रवणोमरुतःप्राणमानिनः । इंद्राद्याइंद्रियात्मानोरुद्रोंतःकरणात्मकः । नैतेविदं

तिस्वात्मानंपरंवापिविमोहिताः । जीवाभिमानीब्रह्मातुसर्ववेदप्रजापतिः । सोपिवेदहरिंनैवसम्यक्सैवहि
सर्वविदितिच ॥२५॥ केवलयास्वसंस्थया । स्वप्नसुषुप्त्यादौमनसउपरमाज्जीवस्यास्वातंत्र्यदर्शनेपिस्वप्नप्रबो
धादिदर्शनादन्यईश्वरस्तन्नियामकोस्तीतिज्ञायते । जीवेच्छाभावात्केवलत्वं । यदोपरामोमनसःस्वप्नसुप्ति
लयादिषु । तदावस्थाप्रबोधादिकारणत्वेनकेशवः । अस्वातंत्र्यात्तुजीवस्यविद्यतेन्योनियामकः । जीवप्र
वृत्त्यानुकूल्याज्ज्ञायतेसौतदाविभुरितिहरिवंशेषु ॥२६॥ इच्छादिरूपेणत्रिवृद्भिः । इच्छादित्वेनत्रिविधावि
मलाद्यास्तुशक्तयः । विष्णोःस्वरूपभूतायास्ताभ्यस्तन्नामिकाःपराः । जायंतेतत्प्रसादेनताश्चपीठेप्रपूजये
त् । तद्भिन्नजीवास्तस्यैवप्रसादात्तत्समीपगाइतितंत्रनिर्णये । दशेंद्रियाणिचमनोबुद्धिप्राणप्रधानकाः । च
तुर्दशैषांपरमःपांचदश्योहरिःस्मृतः । बुद्धेर्भेदेनचैतेषुपांचदश्योथसंस्थितेरितिच ॥ २७ ॥ इयत्तातुविशेषः
स्यादानंदादौतदुज्झितेः । सर्वैर्विशेषैरहितउच्यतेहरिरव्ययः । अप्राकृतस्वरूपत्वान्निर्मायश्चेतिकथ्यतइति
च । तद्रूपसदृशंरूपंयतःसर्वस्यसर्वदा । सर्वरूपोयतःशब्दमुख्यार्थःसर्वनामकइतिच ॥२८॥ अलौकिकत्वा
न्नोविष्णुर्निरुक्तोतोनिरूपितः । तथापिवेदेषूक्तत्वादुक्तोरूपीसएवचेतिव्योमसंहितायां ॥ २९ ॥ सप्तविभ

त्त्यर्थस्यकालस्यप्रकारस्यचहेतुर्ब्रह्मैव । विभक्त्यर्थस्यकालस्यप्रकाराणांचकारणं । एकएवपरोविष्णुःसर्व
सत्ताप्रदत्वतइतिभविष्यत्पर्वणि । अनन्यःसदृशाभावादेकोरूपाद्यभेदतइतिच ॥३०॥ [३२] मदन्योनास्तिसर्वेश
इतिविद्यासुरंमतं । अस्तीतिदैवमुभयोर्हरिरेवह्यपेक्षितः । निषेधविध्योर्विषयःफलदाताचकेशवः । तादृ
ग्बुद्धेःकारणंचस्थानयोश्चोच्चनीचयोरितिच ॥३२॥ तत्कर्मणामदृष्टत्वादनामाचाप्यदर्शनात् । अरूपस्त्वव
तारेणरूपकर्माणिदर्शयेत् । नित्यरूपोनित्यकर्माप्यव्यक्तत्वमपेक्ष्यतु । अरूपकर्मेत्युदितोरूपकर्मोज्झितेर्न
त्वितिप्रकाशसंहितायां । अनामासोधिकार्थत्वादव्यक्तत्वादरूपकः । कंसारित्वादिसामर्थ्योव्यक्तरूपोवता
रगइतिच । लोकदृष्ट्याधिकार्थानिमूलनामानिकेशवे । अथदामोदरादीनिलोकदृष्ट्यासमानितु । आनं
दोव्यक्तरूपस्तुमूलरूपमुदाहृतं । सएवव्यक्तिमापन्नःप्रादुर्भावउदीरितइतिच ॥३३॥ स्वदेहस्थंहरिंप्राहुरध
माजीवमेवतु । मध्यमाश्चाप्यनिर्णीतंजीवाद्भिन्नंजनार्दनं । पूर्णानंदादिगुणकंसर्वजीवविलक्षणं । उत्तमा
स्तुहरिंप्राहुस्तारतम्येनतेषुच । बुद्धिशुद्ध्यनुसारेणयथाप्राणंशरीरगं । श्वासमात्रंजनाःप्राहुरनिर्णीतंचमध्य
माः । देवदेवेश्वरंसूत्रमानंदंप्राणवेदिनइतिच ॥३४॥ विशेषैर्व्यक्तिपात्रत्वाद्ब्रह्माद्यास्तुविभूतयः । तदंतर्या

मिणश्चैवमत्स्याद्याविभवाइतीतितंत्रनिर्णये ॥४५॥ तपोभिमानीरुद्रस्तुविष्णोर्हृदयमाश्रितः । विद्यारू
पातथैवोमाविष्णोस्तनुमुपाश्रिता । शृंगाराद्याकृतिगतःक्रियात्मापाकशासनः । अंगेषुक्रतवःसर्वेमध्यदे
हेचधर्मराट् । प्राणोवायुश्चित्तगतोब्रह्माद्याःखेषुदेवताइतिच । यदाश्रितंयद्भवतितत्तन्नामकमीरितमिति
शब्दनिर्णये ॥४६॥ संज्ञानमात्रंयदिदंत्वयातपसाहृष्टंममरूपंतदेवाग्रआसीत्। नानावर्णोहरिस्त्वेकोबहुशी
र्षभुजोरुपात् । आसील्लयेतदन्यत्तुसूक्ष्मरूपंश्रियंविना । असुप्तःसुप्तइवचमीलिताक्षोभवद्धरिः । अन्यत्रा
नादराद्विष्णौश्रीश्चलीनेवकथ्यते । सूक्ष्मत्वेनहरौस्थानाल्लीनमन्यदपीष्यतइतिमाहात्म्ये ॥ ४७॥ गुणतः
अनंते । प्रत्येकशोगुणानांतुनिःसीमत्वमुदीर्यते । तदानंत्यंतुगुणतस्तेचानंताहिसंख्यया । अतोनंतगुणो
विष्णुर्गुणतोनंतएवचेतितंत्रभागवते॥४८॥इतिषष्ठतात्पर्येचतुर्थोऽध्यायः॥४॥–॥७॥ ॥[२७]सनत्कुमारोव
तुकामदेवात् । सनत्कुमारनामातुब्रह्मचर्यवपुर्हरिः । सनत्कुमारमपरंब्रह्मपुत्रंविवेशयः । समांयोग्येतरा
त्कामात्पातुविश्वेश्वरःप्रभुरितिच । देवर्षिवर्यःपुरुषांतरार्चनात् । विष्णोरपरिवारत्वदृष्ट्यादेवांतरार्चनात् । ॥८४९॥
महिदासोदेवऋषिःपातुमांविष्णुरव्ययः । तदनर्पितकर्मभ्यस्तदस्मरणतस्तथेतिच॥१७॥[३१]यथाहिभगवानेव ।

सदसन्नियामकतयासदसद्रूपउच्यते । सत्येनानेनमांदेवःपातुविष्णुश्चतुर्भुजइतिच ॥३१॥ [३३] एकएवपरोवि
ष्णुर्भूषाहेतिध्वजेष्वजः । तत्तच्छक्तिस्वरूपेणस्वयमेवव्यवस्थितः । सत्येनानेनमांदेवःपातुसर्वेश्वरोहरिरिति
च ॥३३॥ [४३] गुरुशिष्ययोरयोग्यत्वाद्गुरुवृत्तेरपूर्तितः । अप्रसादाद्गुरोर्विद्यानयथोक्तफलप्रदेतिच । विद्याःक
र्माणिचसदागुरोःप्राप्ताःफलप्रदाः । अन्यथानैवफलदाःप्रसन्नोक्ताःफलप्रदाइतिच ॥ ४३ ॥ इतिषष्ठतात्पर्ये
अष्टमोऽध्यायः ॥८॥ ॥ [२०] कालोंतकःप्रधानंचमृत्युरव्यक्तमित्यपि । उच्यतेप्रकृतिःसूक्ष्माश्रीर्भूर्दुर्गेतिनाम
भिः । सैवब्रह्मादिभयदाविष्णोश्चवशवर्तिनी । अभयापिबिभेतीवतद्वशत्वादुदीर्यतइतिमात्स्ये ॥ २० ॥
[२३] यत्रवायूदपद्मादिरूपेणप्रकृतिःस्थिता । एकस्तत्राबिभेद्ब्रह्माविचार्यभयमत्यगात् । अंतर्गतोहरिस्तस्यध्या
तोभयमपानुददितिच । जनिष्यतांजनानांतुस्वभावानांप्रसिद्धये । ज्ञानादिगुणपूर्णस्यब्रह्मणोपिक्षणार्ध
गाः । भयादिकाभवंतीवकथंतस्मिन्स्थिरालयाइतिच । भगवत्प्रीतयेनित्यंब्रह्मणोयेभयादयः । नवृथातस्य
भावःस्यात्कश्चित्तेपिक्षणार्धगाः । अज्ञानंचचतुर्वारंद्विवारंभयमेवच । शोकोपितावान्नान्यत्रकदाचिद्ब्रह्मणो
भवेत् । तत्रापिभगवत्प्रीत्याउन्नत्यैवास्यतद्भवेदितिब्रह्मतर्के ॥ २३ ॥ लिंगमेवपश्यामः । कदाचिदभिमान

स्तुदेवानामपिसन्निव । प्रायःकालेषुनास्त्येवतारतम्येनसोपिप्विति च ॥२४॥ श्रीवत्सःप्रकृतिर्ज्ञेयाब्रह्माख्यः
कौस्तुभःपुमान् । तदतीतैःषोडशभिःस्वरूपैरप्युपास्यतइतिच । श्रीवत्सकौस्तुभौविनाऽऽत्मतुल्यैःप्रकृतिपु
रुषातीतत्वात्सप्तदशरूपाण्यपितुल्यानीत्यर्थः । आत्मभूतैश्चतुल्यैश्चआत्मतुल्यैः । अपुंप्रकृत्यधीनत्वाद्वासु
देवादिकाहरेः । तुल्याश्चकेशवाद्याश्चनचभिन्नाःकथंचनेतितंत्रसारे । श्रीवत्सकौस्तुभाभ्यांतुविनाभावंप्रद
र्शयन् । पुंप्रकृत्यात्मकाभ्यांसधत्तेनित्यंजनार्दनः । यदस्याभ्यामतीतत्वंयद्वशोनानयोर्हरिः । श्रीवत्सकौ
स्तुभाभ्यांतुविनाभावःसएवत्विति च । आत्मैवसप्तदशधास्वयंभूत्वाजनार्दनः । मध्यस्थावृतिरूपेणक्रीडते
पुरुषोत्तमइतिच ॥२८॥ वयःसर्वस्यवयनाद्भगवान्पुरुषोत्तमइतिच । मातंतुश्छेदिवयतोधियंमइतिश्रुतिः
॥३०॥ देवलोकात्पितृलोकान्निरयाच्चापियत्परं । तिसृभ्यःपरमंस्थानंवैष्णवंविदुषांगतिरितिमाहात्म्ये ॥३१॥
अथतत्रभगवान्किंदेवदत्तवदित्याक्षेपः । अचिंत्यशक्तेरनंतगुणस्यकुतःपारतंत्र्यादिकमित्यभिप्रायः । उप
रतसमस्तमायामये । प्राकृतस्वभाववर्जिते । केवलंस्वात्ममायांनिजसामर्थ्यं । स्वरूपद्वयाभावादित्यादि
समाधानं । स्वतंत्रःपरतंत्रोवाज्ञोऽज्ञोदुःखीसुखीनुकिं । इत्यादिसंशयःकस्याज्ज्ञानिनांपुरुषोत्तमे । तस्या

नंतगुणत्वाच्चपूर्णशक्तित्वतोहरेः । स्वातंत्र्यादिकमेवास्यविदोजानंतिनिश्चयात् । घटकत्वाद्दुर्घटस्यदुर्ज्ञेय
त्वाच्चसर्वशः । तच्छक्तेरविदोजीवंपरतंत्रंवदंत्यमुं । एवंदुर्घटयाशक्त्याज्ञोज्ञानांपरमेश्वरः । यथारज्जुःसर्प
धियारज्जुबुद्ध्यावगम्यते । तथायथार्थबुद्ध्याचमिथ्याबुद्ध्यावगम्यते । स्वेच्छयैवमहाविष्णुःफलदश्चानुसार
तइतितंत्रभागवते । त्रिनयनोनृसिंहरूपी । विष्णोर्नृसिंहनामानित्रिनेत्रोग्रादिकानित्वितिशब्दनिर्णये ।
विविधंभावपात्रत्वात्सर्वेविष्णोर्विभूतयइतिच ॥३३॥ नि[३५]रुपक्रमोहरिर्नित्यमप्रयत्नोह्युपक्रमेदितिच ॥३५॥
[३९]यदिसोपितथाविधः । अत्युत्तमोनभवतिचेत् ॥३९॥ युष्मत्कामोमत्प्रियएव । अन्यथानदद्यामितिभावः ।
विष्णोःप्रियंकामयंतिदेवानैवाप्रियंक्कचित् । यद्यप्रियंकामयंतिनरातीशोहितोहिसइतितंत्रभागवते ॥४०॥
[४५]समर्थाअपियाचंतेदेवामुन्यादिकान्क्वचित् । आज्ञयैवहरेस्तेषांयशोर्थमपिनान्यथेतिच ॥ ४५ ॥ इतिषष्ठता
त्पर्येनवमोऽध्यायः ॥९॥ ॥ [६]आज्ञयैवमहाविष्णोःकार्यार्थमपिचक्कचित् । नीचानपिचयाचंतेस्वात्मनोगु
णवत्तराः । नीचवाक्यंवदेयुश्चसुरानैतावताक्कचित् । तेजःक्षितिर्भवेदेषांजनकस्ययथार्भकादितितंत्रमाला
यां ॥६॥ इतिषष्ठतात्पर्येदशमोऽध्यायः ॥१०॥ ॥ मन्यतेनीशमीश्वरं । अनीशंजीवरूपेणपरमात्मानमी

श्वरं । येमन्यंतेतान्समीक्ष्यस्नेहान्निरयभाग्भवेदितिच । हिरण्यगर्भःपुरुषआत्मावायुरुदाहृतः । शेषोव्य
क्तस्तथैवेंद्रआशयःसमुदाहृतइतिच॥११॥संधितैःसमयेनेंद्रोवृत्रेणाथोकरग्रहः। समुद्रतीरेविचरन्फेनेनवधम
स्यतु । नर्मणाजहिफेनेनवाचयित्वासुरेश्वरः । पादस्पर्शविवादंचकृत्वायुद्धायदंशितः । फेनेवज्रंसमावेश्य
विष्णुर्युक्तंव्यसर्जयत् । अपानुदच्छिरस्तस्यध्यायतोवत्सरेणसइत्याग्नेये ॥ ३२ ॥ इतिषष्ठतात्पर्येद्वादशोऽ
ध्यायः॥१२॥ ॥प्रारब्धकर्मणैवैषांकृष्णदुःखस्यसूचकं। तदानींतनकर्मस्याद्रणहेतुर्यथारणः। देवादीनांस्थि
तप्रज्ञभावान्नैवान्यथाभवेत्। प्रारब्धमपितुक्वापिकिंचिद्विघटितंभवेदितिच ॥११॥ इतिषष्ठतात्पर्येत्रयोदशोऽ
ध्यायः॥१३॥ ॥नवकोट्यस्तुदेवानामृषयःशतकोटयः। नारायणायनाःसर्वेयेकेचित्तत्परायणाइतिच। ना
रायणायनादेवाऋष्याद्यास्तत्परायणाः । ब्रह्माद्याःकेचनैवस्युःसिद्धोयोग्यसुखंलभन्निति तंत्रभागवते ॥५॥
संतापक्रोधरागादिष्वनर्थकवचःक्वचिदितिशब्दनिर्णये ॥५४॥ इतिषष्ठतात्पर्येचतुर्दशोऽध्यायः ॥१४॥ ॥
मनसोद्वेषरागाभ्यांपुण्यपापसमुद्भवः। पुत्रादिपुण्यपापाभ्यांतस्मात्सर्वंमनोभवमितिनारदीये ॥१२॥ द्रव्या
त्मकःस्थूलदेहःक्रियाकर्मेंद्रियाणिच । ज्ञानेंद्रियाणिचमनोज्ञानात्मकमुदाहृतमितिब्रह्मवैवर्ते । कार्यकारण

योरेकशब्दव्यवहृतिर्भवेदितिशब्दनिर्णये ॥२९॥ अनन्यापेक्षतस्त्वेकोहरिरन्यद्द्वयंस्मृतं । अन्यापेक्षत्वतस्त
नप्राप्तत्वाद्द्वैतमुच्यतइतिच ॥३०॥ रुद्राद्याःशेषदेहस्थंविष्णुंसंकर्षणाभिधं । शेषांतर्यामिणंज्ञात्वास्वपदंप्रा
पुरंजसेतितंत्रभागवते ॥३५॥ द्वैतेनबंधसंत्यागाद्द्वैतत्यागीभवत्युतेतिशब्दनिर्णये । देहाद्येहंममाभिमानो
भ्रमः । तेषांतेषांपदान्येववैष्णवानिपदानितु । तेषांमहित्वंचतथाहरेस्तद्वशगंयतः । अतुल्यानधिकंचैवत
स्यतस्यैवमुक्तिगं । स्वस्यैवपूर्वमाहात्म्यमपेक्ष्यनहरेःक्वचित् । माहात्म्यमन्यप्राप्यंस्यान्नतेविष्णावितिश्रुते
रितितंत्रभागवते । ब्रह्मेशानादिभिर्देवैर्यत्प्राप्तुंनैवशक्यते । तद्यत्स्वभावःकैवल्यंसभवान्केवलोहरइतिस्कां
दे । तत्प्रसादलभ्यत्वात्तदीयमपितेनातुलमनधिकंचान्यमाहात्म्यं ॥३६॥ इतिषष्ठतात्पर्येपंचदशोऽध्यायः
॥१५॥ ॥ ऐषनित्योव्ययः । अनित्यसंबंधयुताःपित्राद्यानित्ययुग्घरिरितिच । आत्मानंचावताररूपेण
सृजते ॥९॥ भोक्तासद्गुणभोक्तृत्वान्नभोक्तातदवृद्धितः । अचिंत्यशक्तितस्तच्चयुज्यतेपरमेशितुरितिच॥११॥
बाह्यमनस्युपरतेचिन्मात्रमनसासहप्राप्यः ॥२१॥ मृन्मयेष्विवमृज्जातिः । पृथिवीपर्वताश्चैवमृन्मयाःसमु
दीरिताः । तेषुमृज्जातयःसर्वेजायंतेस्थावरादयइतिच ॥२२॥ अन्यांतर्यामिणंविष्णुमुपास्यान्यसमीपगः ।

भवेद्योग्यतयातस्यपदंवाप्राप्नुयान्नरइतिनारदीये । अनेनप्रकारेणमुहुस्तत्सकाशमभ्ययात् । शेषांतर्या
मिणंविष्णुंचित्रकेतुरुपास्यतु । शेषाविष्टहरेश्चापिवरान्प्राप्यापसद्गतिमितितंत्रमालायां ॥२९॥ [५३]हरिस्तुस
र्वभूतानितदंतर्याम्यपेक्षया । तिङ्पदान्यपिसर्वाणिसुप्पदानितथैवच । तस्मिन्नेवप्रवर्ततेमुख्यवृत्त्याविशेष
तइतिच ॥५१॥ लोकंचात्मनिसंततंवासनारूपेण ॥५२॥ [५४]मायामात्राणिप्रकृतिनिर्मितानि ॥ ५४ ॥ [५६]प्रति
बोधेऽन्वेतिस्वयमपिप्रतिबुद्धः । सुप्तावस्वपन्व्यतिरिच्येत ॥५६॥ सर्वभिन्नंपरात्मानंविस्मरन्संसरेदिह । अ
भिन्नंसंस्मरन्यातितमोनास्त्यत्रसंशयइतिच ॥५७॥ इतिषष्ठतात्पर्येषोडशोऽध्यायः ॥१६॥ ॥ [१३]एषांपक्षेत
द्वताराणामनुध्येयपदाब्जयुग्मं । विष्णुब्रह्मप्राणवीद्रांस्तद्दारानप्यृतेहरः । ध्येयोहरेःपार्षदाद्यैर्ध्यायन्हरिच
तुर्मुखौ । प्राणमेषांतथादारान्नस्वतंत्रतयाक्वचिदितितंत्रमालायां ॥१३॥ [२२]सेवायोग्यातिरेकेणस्वानामपिन
दास्यति । अपराधातिरेकेणनान्यस्यातःसमोहरिरितिमाहात्म्ये ॥२२॥ [१९]यत्तद्भगवताक्लृप्तंतदेवनियतंभवेत्
॥१९॥ अतोन्येषांवरःशापोगुणदोषप्रकर्तृता । स्वतःप्राप्ताभेदकृतिर्वासनारूपिणोयथा । विद्यमानस्यमन
सिपुनःस्वप्नेषुदर्शनं । भगवद्दशतायस्मात्सर्वेषांज्ञेयमेवतदितिप्रकाशसंहितायां ॥२०॥ [३७]प्रतिशप्तुमलंतमः ।

देवाएवतदन्येभ्यःशक्तानास्त्यत्रसंशयः । अशक्ताअपिशक्तानांशक्ताःशापादिषुस्फुटं । तथाप्यशक्तैर्विहि
ताःशापाद्याःशक्तिमत्सुवै । अत्यल्पाश्चाल्पकालाश्चनसम्यक्प्रभवंतिच । यत्नेनापोहितुंशक्याउत्तमैस्तुनसं
शयः । उत्तमेषुकृताःशापाःकर्तॄणांज्ञानपुण्ययोः । निःशेषेणनिहंतारस्तदनुग्रहमंतरा । सदारयोर्ब्रह्मविष्ण्वो
र्वरशापादयोखिलाः। तदन्येनकृताःसर्वेनिष्फलाएवनिश्चयात् । नचाप्यवांतराःशापाभवंत्येषांतुकुत्रचित् ।
वराविष्णोःश्रियश्चस्युर्ब्रह्मणश्चयथाक्रमं । उत्तमैरधमानांतुवराःशापायथोदितं । संपूर्णफलदाएवनात्रका
र्याविचारणेतिस्कांदे ॥३७॥ इतिषष्ठतात्पर्येसप्तदशोऽध्यायः ॥१७॥१८॥ ॥ ईज्याक्रिया । अंतर्यामीतु
यज्ञादेर्विष्णुरिज्यादिनांरमा । तत्तच्छब्दैस्ततोवाच्यौनतुसर्वस्वरूपतः । अंतर्यामीश्रियश्चापिविष्णुरेवन
संशयः । नांतर्यामीकश्चिदस्तिविष्णोःक्वापिकुतश्चनेतिब्रह्मतर्के ॥११॥ इतिश्रीमद्भागवतषष्ठस्कंधतात्पर्ये
श्रीमदानंदतीर्थभगवत्पादाचार्यविरचितेएकोनविंशोऽध्यायः ॥१९॥ ॥ षष्ठस्कंधःसंपूर्णः ॥६॥ ॥
श्रीगुरुभ्योनमः ॥ बाध्यादिस्थोहरिर्नित्यंबाध्यताविगतेत्यपि । गीयतेनतुबाध्यत्वाद्यदोषयुतत्वतइति
भविष्यत्पर्वणि ॥६॥ दधिस्थंघृतवत्काष्ठेवह्निवच्चजनार्दनः । देहेंद्रियासुजीवेभ्योविविच्यज्ञायतेनत्वितिच

॥९॥ प्रधानपुंभ्यांसह ॥११॥ कालेकालविषयेपीशिता । देहादिकारणत्वात्सुरानीकमिवस्थितंसत्वं । स्व
भावतःप्रियत्वात्तुसदादेवप्रियोहरिः । अप्रियश्चासुराणांसस्वभावात्तूभयंनृणां । देशकालौगुणाश्चैवभक्त्या
दीनप्यपेक्ष्यतु । योग्यतांचतथाकर्मसमइत्यभिधीयते । स्वतःप्रियोपिदेवानामुत्पाद्यैवगुणानिमान् । इत
रेषांतथादोषान्सुखदुःखेददात्यजः । उभयंतुमनुष्याणामतःसमइतीरितः । अनादिनियताश्चैवगुणदोषाः
सुरादिषु । यथाक्रमंपुनश्चैवनियमाद्वर्धितास्तथा । विष्णुनैवततोनित्यंविषमश्चजनार्दनइतिब्रह्मतर्के । न
विष्णोर्विषमत्वंतुयोग्यतापेक्षयाक्वचित् । योग्यतायास्तन्नियत्याविषमत्वंभवेदितीतिस्कांदे । विषमत्वंतुदो
षायशुभाशुभविपर्यये । अतस्तादृशवैषम्यंब्रह्मसूत्रेनिराकृतं । शुभाशुभनियंतृत्वंनदोषोगुणएवसः । अत
स्तदिष्टंकृष्णस्यब्रह्मसूत्रकृतोविभोरितितंत्रनिर्णये ॥१२॥ नियमाद्भुज्यतेपुंभिर्धर्माधर्मफलंमृतौ । कैश्चिदत्रा
पिभुज्येततस्मान्नाधर्ममाचरेदितिभारते ॥२१॥ कैवल्याद्देहाद्यभावादेव ॥२६॥ अकर्तुस्तस्यान्यःकर्तानवि
द्यते । इदंएषा । व्यत्ययोतिशयकृत्सनभेदेष्वितिसूत्रात् । कथंचिन्नेक्षतेपृथक् । तत्रैवमनसोभिनिवेशेन
तदन्यंनेक्षते । वैरादीनामेकतमेनापियोयुंज्यात् । सनेक्षतइतिस्वभावकथनंनविधिः । कर्मणामनसावा

चायोद्विष्याद्विष्णुमव्ययं।मज्जंतिपितरस्तस्यनरकेशाश्वतीःसमाः। तानहंद्विषतःक्रूरान्संसारेषुनराधमान्।
क्षिपाम्यजस्रमशुभानासुरीष्वेवयोनिषु। आसुरींयोनिमापन्नामूढाजन्मनिजन्मनि। मामप्राप्यैवकौंतेय
ततोयांत्यधमांगतिं। अवजानंतिमांमूढामानुषींतनुमाश्रितं। परंभावमजानंतोममभूतमहेश्वरं। मोघा
शामोघकर्माणोमोघज्ञानाविचेतसः। राक्षसीमासुरींचैवप्रकृतिंमोहिनींश्रिताः। यदनिंदत्पितामेत्वामवि
द्वांस्तेजऐश्वरं। तस्मात्पितामेपूयेतदुरंताद्दुस्तरादघात्। हिरण्यकशिपुश्चापिभगवन्निंदयातमः। विविक्षु
रत्यगात्सूनोःप्रह्लादस्यानुभावतः। वरतोपिनमुच्यंतेद्वेषिणःशापतोपितु। भक्तानेवनिपात्यंतेधर्माधर्मैस्त
थेतरैः। अन्यावेशकृतंयत्तुतद्वराद्यैरपोह्यते। तद्विरुद्धस्वभावानामन्यथानकथंचनेत्यादेः। यस्मादेवको
प्युपद्रवोनास्तिभगवतस्तस्मादेवद्वेषादिनापिमनोयोक्तुंशक्यतेतत्प्रेरणया। तादृशानांतदेवचिंतयंतिच।
अन्यथाआत्मनोदुःखकारणंद्वेषादिकंकथंसर्वनियामकोहरिरुत्पादयेत् ॥२७॥ तत्रैवहेतुःयथावैरानुबंधेने
ति।यथावैराभिनिवेशिनःतथाभक्त्यभिनिवेशिनोनसंति।तत्कथमन्यथाभक्तानेवबहून्हरिःकुर्यादितिभावः
॥२८॥ कीटःपेशस्कृतेत्यादिचैद्यादीनांभक्तियुतत्वप्रतिपादनं ॥२९॥ स्नेहाँद्व्यायतननाशादिनाप्युपद्रवोस्य

नास्तीतिनिर्वैरेणेत्याद्युक्तं ॥२७॥ तैतः कनीयसाएवदेवाज्यायसाअसुराइतिश्रुतिः । तन्मयतांमनसस्तत्रा
भिनिवेशनं । मागधाद्यायथानित्यंद्वेषादाग्रहिणोहरौ । नतथाऽऽग्रहिणोभक्ताऋतेब्रह्माणमव्ययमितिहरि
वंशेषु ॥२८॥ योगैः स्नेहः । संरंभभययुक्तस्नेहेन । प्रीतिःस्नेहस्तथायोगःप्रेमबंधइतीर्यतइतिशब्दनिर्णये
॥२९॥ वैरयुक्तयाप्यनुचिंतयातमापुः । अनुचिंतेतितामाहुर्भक्तिपूर्वातुयास्मृतिरितिच । स्नेहादन्नंददा
तीतिस्वाकर्षणभयेपिच । विद्यमानेप्यल्पकोपेसंगतिस्नेहतस्तथा । पेशस्कृद्रूपतांकीटोयथायातितथैवतु ।
चैद्यादयोसुरावेशाद्धरौद्वेषयुताअपि । निजस्वभावयाभक्त्यानीताहरिसरूपतां । तथाहिकरुणोविष्णुर
न्यावेशाद्यदिद्विषन् । हीयतेकिंममानेननित्यानंदस्वरूपिणः । देहबंधयुतानांहिद्वेषिणापकृतंभवेत् । म
मकोह्यपराध्येतनिर्दोषसुखरूपिणः । अतोमय्यपराधस्तुस्वस्मिन्नेवनमेभवेत् । अतोयच्चासुरावेशात्कृतमे
तेनदुष्कृतं । अनादिभक्तोयस्मान्मेमोचयिष्येततस्त्वहं । इतिमत्वामोचयतिचैद्यादीनपिकेशवइतिब्रह्मांडे
॥ ३० ॥ कामादिभिरपियथावद्भक्त्यासहैवमनआवेश्यतदघंयत्तुद्वेषादिकृतमघंयथाभूतयाभक्त्याहित्वा
॥३१॥ गोप्यःकामयुताभक्ताःकंसाविष्टःस्वयंभृगुः । ज्ञेयोभययुतोभक्तश्चैद्यादिस्थाजयादयः । विद्वेषसंयु

ताभक्तावृष्णयोबंधुसंयुताः । बहुमानस्नेहसाम्यादेवाभक्ताःप्रकीर्तिताः । स्नेहोपसर्जनादेवबहुमानान्मुनी
श्वराः । बहुमानोपिदेवानामृषिभ्योभ्यधिकोमतः । ब्रह्मवींद्रेंद्रकामादेरितरेषांयथाक्रममितिब्रह्मतर्के ॥३२॥
कतमोपिभक्तियोगोनवेनस्य । तस्मात्केनापिप्रकारेणउपायेनैवमनोनिवेशयेत् । नानुपायेन । उपायोभ
क्तिरुद्दिष्टोद्वेषाद्याअनुपायकाइतिशब्दनिर्णये ॥३३॥ स्वतोभक्ताश्चैद्यादयोपिपरावेशाद्वेषिणइत्यत्रहेतुर्मा
तृष्वस्रेयइत्यादि ॥३४॥ द्वास्थावित्यनेनाधिकारस्थत्वमुक्तं । अधिकारस्थिताश्चैवविमुक्ताश्चद्विधाजनाः ।
विष्णुलोकस्थितास्तेषांवरशापादियोगिनः । अधिकारस्थितामुक्तिंनियतंप्राप्नुवंतिच । विमुक्त्यनंतरंतेषां
वरशापादयोनतु । देहेंद्रियासुयुक्ताश्चपूर्वंपश्चान्नतैर्युताः । अप्यभीमानिभिस्तेषांदेवैःस्वात्मोत्तमैर्युताइति
तंत्रसारे ॥३८॥ सर्वभूतात्मनिभूतं ॥४४॥ हिरण्यकशिपुर्भूतममन्यतमृतौहरिं । अतोभयानकोजातस्तत्ररा
जानमेवच । मत्वाराजैवसंजातःकृष्णंचक्रादिलक्षणैः । मृतिकालेहरिंचैवमत्वाभक्त्यैवकेवलं । द्वास्थत्वंह
रिमाविश्यप्रापैवमनुजोपित्विितिगारुडे । विष्णुभक्तेश्चतज्ज्ञानादन्यतोमुक्तिवाचकाः । विष्णोर्गुणह्रासवा
चःश्रीब्रह्मादेस्तथाक्रमात् । विष्ण्वादिद्वेषतश्चैवसुखवाचस्तथाखिलाः । मोहनार्थाःसमुद्दिष्टायथार्थद्योतका

स्तथेतिप्रकाशंहितायां ॥४५॥ वैरानुबंधःवैरयुक्ताभक्तिः । अनुबंधस्तुभक्तिःस्याद्बंधःस्नेहउदाहृतइतिच ॥४८॥ इतिसप्तमतात्पर्येप्रथमोध्यायः ॥१॥ ॥ विप्रैर्यज्ञादिमूलंतुहरिरित्यासुरंमतं । हरिरेवहिसर्वस्यमूलंसम्यङ्मतोनृपेतिब्राह्मे ॥ १० ॥ धत्तेसौवात्मनोलिंगंजीवमनआदीनामाधारंब्रह्म ॥२२॥ लिंगवानिव । जीवइव । असमंसमतामेतिभ्रांतिदृष्ट्यैवकेवलं । जीवेनब्रह्मनसमंतत्त्वदृष्ट्याकथंचनेतिषाड्गुण्ये । यथोदचलनाद्वृक्षप्रतिबिंबप्रचालनात् । तटस्थवृक्षचलनंकल्पयेदबुधोनरः । तथामनसिजैर्दोषैराभासेदूषितेनरे । आभासिनोब्रह्मणश्चदोषमज्ञःप्रकल्पयेत् । आत्मनश्चक्षुषोभ्रांत्यायथापश्येद्भ्रमंभुवः । तथैवस्वात्मनोदोषाद्दोषवद्ब्रह्मपश्यतीतिब्रह्मतर्के ॥२४॥ विवेकस्मृतिःअविवेकिनएवविवेकित्वभ्रांतिः । अंतर्हिरण्यकादीनांभक्तिरस्त्येवकेशवे । असुरावेशतस्त्वन्यान्हरिस्तोतॄन्द्विषंतिचेतिपाद्मे ॥२६॥ यत्रोद्भवस्तत्रगतंअदर्शनंगतं । अदर्शनादिहायातःपुनश्चादर्शनंगतइतिभारते ॥३७॥ अन्यतमआत्मापरमात्मा । सुविरुद्धस्वरूपत्वाज्जीवादन्यतमोहरिरितिवामने ॥४१॥ भगवन्माहात्म्यकथनेनसर्वस्यतद्वशत्वात्सएवभजनीयोनशोकेनप्रयोजनमितिफलितार्थः । देहदारुगतौप्राणवह्नीसर्वगतंनभः । देहादिभ्योयथाभिन्नानलिप्यंतेचतद्गुणैः । तथा

जीवगतोविष्णुर्जीवाद्भिन्नोनतद्गुणैरितिच ॥४३॥ इंद्रियवान्जीवः । भजत्युत्सृजतिह्यन्यःपरमात्मा । सए वश्रोतानुवक्ताच । नान्योतोस्तिद्रष्टानान्योतोस्तिश्रोतासयोतोश्रुतइत्यादेः । मुख्यप्राणोपिस्वतोनश्रोता किमुजीवइति । अयंननुसुयज्ञइत्याक्षेपः । यश्चसुयज्ञःसोपिस्वतःश्रोतुंवक्तुंनशक्तः । अतस्तस्यानुशोके नकिमित्यर्थः । अन्योजीवोचितोदेहात्तद्दशोदेहउच्यते । पश्यामीत्यभिमानोस्यचक्षुराद्यभिमानवान् । नतद्दशाश्चक्षुराद्यानदृष्ट्यादौसईश्वरः । चक्षुराद्यामनोजीवोदृष्ट्यादिश्चापियद्दशे । सप्राणइतिविज्ञेयोज्ञा तामंताचसप्रभुः । तस्यापिज्ञातृमंतृत्वंनस्वतःशक्यतेक्वचित् । यज्ञस्यज्ञातृमंतृत्वदातासभगवान्हरिः । स्व तोज्ञाताचमंताचद्रष्टाश्रोताचकेशवः । ज्ञानादिदोनतस्यान्यःसर्वस्यज्ञानदोहरिः सदेहान्भजतेविष्णुःस्वे च्छयैवोत्सृजत्यपि । यावद्देहस्थितोविष्णुस्तावज्जीवोविपर्ययः । तावत्क्लेशादयश्चास्यवृथाचेंद्रियवृत्तयः । यदोत्सृजतिदेहंसहरिःसर्वात्मनाविभुः । तदातदभिमानीतुजीवोमुच्येतसंसृतेः । अतिभिन्नस्वरूपौतौजी वेशावेकदेहगौ । देहाभिमानीत्वेकोत्रनमानीमानदःपरइतिगारुडे । इंद्रियाद्यभिमानेनतद्वान्जीवउदीर्य ते । अतन्मानाद्धरिःप्रोक्तस्त्वदेहोनिंद्रियस्तथा । जीवानभिमतेदेहेनविष्णुर्जीवतिस्थितः । अतश्चादेहउ

द्दिष्टःपरमात्मासनातनइतिप्रकाशसंहितायां । सचान्यःश्रोतुर्वक्तुश्चेतिचशब्दः ॥४४।४५॥ भूतेंद्रियमनो
रूपान् । लिंगंस्वरूपमुद्दिष्टंलिंगंज्ञापकमेवचेतिशब्दनिर्णये ॥४६॥ आत्मापरमात्मा । कर्मबंधनोजीवः ।
ततःपरमात्मनोविपरीतः ॥४७॥ मृषावृथा । स्वप्नदृष्टवित्तादिवत् । लेपाभिमानीजीवस्तुस्वरूपानुभवीन
च । मुक्तेःप्राक्तेनमान्युक्तोनमानीविष्णुरुच्यते।सर्वंममेतिपश्यन्नप्यलेपाभिमतिर्यतः।सम्यक्स्वरूपानुभवा
त्स्वतंत्रत्वाददोषतइतिब्रह्मतर्के ॥४८॥ अहंममाभिमानादित्वयथोत्थमनित्यकं । महदादियथोत्थंचनित्या
चापियथोत्थिता । अस्वतंत्रैवप्रकृतिःस्वतंत्रोनित्यएवच । यथार्थभूतश्चपरएकएवजनार्दनइतिच ॥५८॥
६० कंआत्माकःपरइतिदेहाद्यपेक्षया । नहिदेहादिरात्मास्यान्नचशत्रुरुदीरितः । अतोदैहिकवृद्धौवाक्षयेवाकिं
प्रयोजनं । यस्तुदेहगतोजीवःसहिनाशंनगच्छति । ततःशत्रुविवृद्धौवास्वनाशेशोचनंकुतः । देहादिव्य
तिरिक्तौतुजीवेशौप्रतिजानतां । अतआत्मविवृद्धिस्तुवासुदेवेरतिःस्थिरा । शत्रुनाशस्तथाज्ञाननाशोना
न्यःकथंचनेतिब्रह्मवैवर्ते ॥६०॥ इतिसप्तमतात्पर्येद्वितीयोऽध्यायः ॥२॥ ॥ ११ जानतामपिकर्तव्यंकर्मात्मस ॥८५६॥
दृशंसदा । तत्रात्मसदृशाज्ञानाद्रागाद्यैर्वाविमोहिताः । जानंतोपिह्यसदृशंकर्मकुर्युर्ऋतेविभुं । चतुरास्यं

सनायोग्यंकर्मकुर्यात्कथंचनेतिनारदीये।तपसाविद्ययावापिज्ञानध्यानादिनाथवा।व्यस्तैःसमस्तैरपिवाकुर्व
तांयत्नमुत्तमं। संहारविक्षेपशतैर्बहुकोटिभिरेववा। नशक्यंतेसमारोढुंस्वात्मायोग्यापदानितु। तथाप्याच
रतांकुर्युर्दैत्यानांसुरनायकाः। विघ्नंतुतपआदीनांवैयर्थ्यस्यापनुत्तयइतिप्रकाशसंहितायां॥११॥वैष्णवादि
भिर्ब्रह्मनिर्मितैः। ब्रह्मास्वयंभूर्द्रुहिणोवैष्णवःशतधृक्कथेतिशब्दनिर्णये ॥१२॥ [१४]भवायश्रेयसेचैवनकश्चित्तद
पेक्षते। मधुकैटभयोश्चैवहिरण्यादेस्तथैवच। नान्योब्रह्मपदंवांछत्यृजून्योग्यान्विनाक्वचित्। ततःश्रेयांसि
वांछंतिनतुतत्पदमाप्तयइतिब्रह्मांडे। भवोवृद्धिःसमुद्दिष्टाश्रेयोमोक्षउदाहृतः। वृद्धस्यनपुनर्ह्रासोभूतिरित्ये
वकथ्यतइतिशब्दनिर्णये। सकामंतुतपःक्रूरंलोकानांभयकृद्भवेत्।इतरच्छांतयेसर्वलोकानांभवतिध्रुवमिति
प्रकाशिकायाम्। ब्रह्माणमभजद्ब्रह्मपदार्थंसहिरण्यकइतिस्कांदे ॥१४॥ [२१]जितैःवशीकृतः। पराभूतंवशस्थं
चजितमित्युच्यतेबुधैरितिशब्दनिर्णये ॥२१।२२॥ [२०]प्रायस्तुस्तुतिशब्देषुमिश्रावाचोहरिंविना। केचिज्जीवगु
णास्तत्रतन्नियंतुर्हरेःपरे। एकस्थानैककार्यत्वाद्विष्णोःप्राधान्यतस्तथा। जीवस्यतदधीनत्वान्नभिन्नाधिक्
तंवचइतिब्रह्मतर्के ॥२७॥ त्रिवृताप्रकृत्या ॥२८॥ [३०]प्राणेनसह ॥३०॥ सप्ततंतून्सप्तक्रतून् ॥३१॥ जीवानां

प्राणधारकः॥३२॥परावरेषुयस्मात्त्वंव्याप्तोविष्णुःसनातनः।तस्मान्नव्यतिरिक्तंत्वदित्याहुर्वेदवेदिनइतिपाद्मे। विद्याश्चकलाश्चविद्याकलाः । महाविद्याःकलाश्चैवत्वत्तनावाश्रितायतः । विद्यातनुरितिप्राहुरतस्त्वांतत्त्व वेदिनइतिच । त्रिपृष्ठःतुरीयः । ब्रह्मणोप्यधिकंविष्णुंजानन्नपिहिरण्यकः । ब्रह्माणंतद्गुणैःस्तौतितद्गविष्णु विवक्षयेतिच ॥३३॥ इतिसप्तमतात्पर्येतृतीयोऽध्यायः ॥३॥ ॥ स्वैतोभक्ताहिरण्याद्याःपरावेशाद्धरौद्वि षइतिच ॥४॥ [१३]आँदित्यावसवोरुद्रास्त्रिविधाहिसुरायतः। मरुतश्चैवविश्वेचसाध्याश्चैवचतद्गताः। अतस्त्रय इतिप्रोक्ताश्चत्वारोमानुषाःस्मृताइतिस्कांदे । उपायनंददुःसर्वेविनादेवान्हिरण्यकइतिच । अयज्ञभागेष्व पितुसुरशब्दःप्रदृश्यते । यज्ञभागभुजस्त्वेवत्रयइत्यभिशब्दिताइतिच । यत्रक्कचयशस्थानमन्येषामितिकेश वः । सर्वत्रापितुदेवानामित्यन्यान्पूजयेत्क्वचिदितिच ॥१३॥ [३५]अँन्येषांहरिसाम्यंतुकिंचित्साम्यमुदीरितं । सम्यक्साम्यंतुमत्स्यादेरितिशास्त्रस्यनिर्णयइतिच ॥३५॥ इतिसप्तमतात्पर्येचतुर्थोऽध्यायः॥४॥ ॥ [१२]स्वाँतं त्र्येणान्यसद्भावनिषेधायश्रुतिस्त्वियं । अन्योसावन्योहमितिपश्यन्नज्ञइतिस्मह । आत्मानमंतर्यमयेदितिभे दंस्वरूपतः । आहतद्ब्रह्मणोऽधीनाभिन्नाजीवाःसदैवतु । स्वरूपसत्ताकर्तृत्वंभोगोमोक्षस्तथैवच । मुक्तस्या

वस्थितिश्चैवसर्वंविष्णोर्वशेसदेतिब्रह्मतर्के ॥१२॥ [२३]आत्मस्थत्वेनवेदनमात्मनिवेदनं । मुक्तस्यापिममांतस्थो
नियंतैवहरिःसदा । इतिज्ञानंसमुद्दिष्टंसम्यगात्मनिवेदनमितिच ॥२३॥ [२८]तदात्ममानोमम ॥२८॥ इति
सप्तमतात्पर्येपंचमोऽध्यायः॥५॥ ॥ [२८]अंतर्यामीप्रत्यगात्माव्याप्तःकालोहरिःस्मृतइतिच ॥२८॥ प्रकृत्यातम
सावृतत्वाद्धरेरैश्वर्यंनज्ञायते ॥२९॥ विष्णोर्गृहत्वाद्भूतेषुदयाकार्याविजानतेतिच ॥३०॥ [४१]कांक्षतोमोक्षगम
पिसुखंनाकांक्षतोयथेतिच ॥४१॥ इतिसप्तमतात्पर्येषष्ठोऽध्यायः ॥६॥ ॥ [१८]षड्विकाराःशरीरस्यनविष्णो
स्तद्गतस्यतु । तदधीनंशरीरंचज्ञात्वातन्ममतांत्यजेदितिच ॥ हेतुत्वाद्विष्णवधीनत्वंशरीरस्य ॥१८॥ [२२]अभि
मान्यपेक्षयाविष्णुःपंचविंशइतिस्मृतः । जडव्यपेक्षयाजीवःसम्यग्ज्ञेयोहरिःस्मृतइतिच ॥ २२ ॥ [२५]बुद्धेर्जीव
स्य । सत्वबुद्ध्यादिशब्दैस्तुजीवोपिक्वचिदीर्यते । जाग्रदाद्याःकर्मचैवसुखदुःखेचतस्यहि । जाग्रदादेःपरोद्र
ष्टासुखनित्योहरिःस्मृतः ॥२५॥ सजीवेनसहस्थानात्तत्स्वरूपःप्रदृश्यते । अज्ञदृष्ट्यानज्ञदृष्ट्यायथागंधयुतो
निलः ॥२६॥ अदृष्टेर्जीवपरयोर्भेदस्याप्नोतिसंसृतिं । अभेदनिश्चयाद्यातितमोनास्त्यत्रसंशयइतिच ॥२७॥
[२६]बुद्धिभेदैर्जीवानांतारतम्यज्ञापकैः ॥२६॥ दुःखरूपोपिसंसारोबुद्धिपूर्वमवाप्यते । यथास्वप्नेशिरश्छेदंस्व

यंकृत्वात्मनोवशः।ततोदुःखमवाप्येततथाजागरितेपितु।जानन्नप्यात्मनोदुःखमवशस्तुप्रवर्ततइतिच॥२७॥ [३०]धियैःप्रवाहस्योपरमःपरमेश्वरेरमणं ॥३०॥ [३८]तद्भावभावः । तद्यथास्वरूपंभक्तिः ॥३८॥ [३६]केचिद्भक्ताविनृत्यंतिगायंतिचयथेप्सितं । केचित्तूष्णींभजंत्येवकेचिच्चोभयकारिणइतिच ॥३६॥ [३९]ब्रह्मनिर्वाणसुखंब्रह्मनिमित्तनिर्वाणसुखं ॥३९॥ अशेषदेहिनांसामान्यतोहृदिस्थत्वेन ॥ ४०॥ [४४]अप्रयत्नेनकरणमनीहाप्रोच्यतेबुधैरितिच ॥४४॥ [५१]व्यंजनाज्जगतोविष्णुर्बीजंनपरिणामतइतिच ॥५१॥ [५६]अच्युततांच्युतिवर्जनं ॥५६॥ इति सप्तमतात्पर्येसप्तमोध्यायः ॥७॥ ॥ [४४]तद्धिप्रलुप्तमितिसादृश्याभेदवचनं । आलोचनमेवतपः। यस्यज्ञानमयंतपइतिश्रुतेः ॥४४॥ [५१]नैटनंतुकथाबंधोनाट्यकंभावदर्शनमितिगांधर्वे ॥ ५१ ॥ इतिसप्तमतात्पर्येअष्टमोऽध्यायः ॥८॥ ॥ [३]अदृष्टाश्रुतपूर्वत्वादन्यैःसाधारणैर्जनैः। नृसिंहंशंकितेवश्रीर्लोकमोहायनोययौ ॥२॥ प्रह्लादेचैववात्सल्यदर्शनायहरेरपि । ज्ञात्वामनस्तथाब्रह्माप्रह्लादंप्रैषयत्तदा । एकत्रैकस्यवात्सल्यंविशेषाद्दर्शयेद्धरिः । अवरस्यापिमोहायक्रमेणैवापिवत्सलइतिब्रह्मांडे ॥ ३ ॥ द्विषड्गुणयुतात् । ज्ञानंचसत्यंचदमः शमश्चह्यमात्सर्यंह्रीस्तितिक्षानसूया । दानंचयज्ञश्चतपःश्रुतंचमहाव्रताद्वादशब्राह्मणस्येतिभारते ॥ १० ॥

[२०]कर्तृकर्मक्रियादीनांसत्तावृत्तिस्तथैवच । विष्णवधीनंयतःसर्वंसर्वरूपस्तदुच्यतइतिब्रह्मतर्के ॥२०॥दर्शेंद्रियप्रा
णमनोरं । मूलंमनएवसंसारचक्रस्य ॥२१॥ [२६]रमादीनामिदानींनार्पितः ॥२६॥ रमादीनामधिकोदयोपि
सेवाधिकत्वादेव ॥२७॥ [२८]श्रीब्रह्मब्राह्मीवींद्रादित्रिकतत्स्त्रीपुरुष्टुताः । तदन्येचक्रमादेवसदामुक्तौसृतावपि ।
हरिभक्तौचतज्ज्ञानेसुखेचनियमेनतु । परतःस्वतःकर्मतोवानकथंचित्तदन्यथेतिब्रह्मतर्के ॥२८।२७॥ [३१]यथा
वृक्षश्चवृक्षदाहश्चदैवकालाधीनत्वाद्दैवंकालश्चेत्युच्यते । एवंत्वदधीनत्वात्सर्वस्यसर्वंत्वमित्युच्यसे । स्वतस्त
द्भिन्नोपि । अहंचान्यश्चपरमेश्वरएवेत्यपार्थाभ्रांतिः । तदधीनत्वादेवसइत्युच्यते । नस्वरूपत्वादित्यर्थः
॥३१॥ तुर्यस्थितः ॥३२॥ जगदात्मकमज्ञमपिभगवद्वशत्वात्तद्वपुः । स्थावराणांतुसर्वेषांदेवतायाभिमानि
नी । विशेषाद्वटबीजेचसाश्वत्थेचव्यवस्थिता । अदृश्याकणिकानामसावृक्षान्व्यंजयत्यपि । अतोबीजमि
तिप्रोक्तासाजातेप्यंकुरेस्थिता । एवंहरिःकारणेषुस्थितःकार्यजनेरनु । कार्याण्यनुप्रविष्टःसन्प्रथमंतत्रदृ
श्यतइतिच ॥३३॥ [३४]मायामयंज्ञानस्वरूपं । सदुपलक्षणसन्निवेशं । आनंदादिलक्षणसमुदायरूपं ॥३४॥
[३५]गंधाख्यादेवतायद्वत्पृथिवींव्याप्यतिष्ठति । एवंव्याप्तंजगद्विष्णुंब्रह्मात्मस्थंददर्शहेतिच ॥३५॥ [३६]प्रायेणदेवमु

नयः । आश्रितेषुकृपाकार्याविशेषात्तात्विकैःसुरैः । मुनिभिश्चतथाकैश्चित्कैश्चित्कार्याखिलेष्वपि । तथा
पितात्विकसुरकृपाविषयतांगताः । एतएवविमुच्यंतेतदन्येनकथंचनेतिच ॥४४॥ [४४]कार्यकारणरूपेतद्वश
त्वापेक्षयासाक्षात्स्वरूपापेक्षयास्वरूपादन्यद्रूपंन ॥४७॥ इतिसप्तमतात्पर्येनवमोऽध्यायः ॥९॥ ॥ [११]जन्मां
तरपितृभिस्त्रिसप्तभिः ॥१९॥ [२२]अतेतुतात्विकान्देवान्नारदादींस्तथैवच । प्रह्लादादुत्तमःकोनुविष्णुभक्तोजग
त्त्रयइतिस्कांदे ॥२२॥ [३०]मधुकैटभौभक्त्यभावाद(त्थ)रौभगवतोमृतौ । तमएवक्रमादाप्तौभक्त्याचैद्योहरिंय
यौ ॥३९॥ [३१]यथाहिरण्यकस्यादादंतस्थितहरीरितः । तथानादात्तदन्यस्यब्रह्मादैत्यस्यकस्यचिदितिच ॥३१॥
पौंड्[३४]रकेनरकेचैवसाल्वेकंसेचरुग्मिणि । आविष्टास्तुहरेर्भक्तास्तद्भक्त्याहरिमापिरे । असुरास्तुस्वयंतेतुमहात
मसिपातिताइतिच । तदात्मानस्तत्राविष्टास्तद्भक्ताः ॥४०॥ [३०]वैरोपसर्जनेनानुबंधेनेत्यन्वयः ॥३९॥ [४६]भग
वान्येनगम्यतइत्यनेनभागवतधर्मेणैवभगवान्गम्यते । नद्वेषादिनेत्युपसंह्रियते । वृत्तानुकथनंचतदर्थत्वे
नैव । ज्ञानस्यविशेषायाथात्म्यादयः । भक्तिर्ज्ञानंविरक्तिश्चनवकःश्रवणादिकः । धर्मोभागवतःप्रोक्तस्तद्भ
क्तेषुतथानवेतितंत्रसारे ॥४६॥ [५०]निर्वाणंसुखंअशरीरसुखं । एतद्वाणमवष्टभ्येतिश्रुतेः ॥५०॥ इतिसप्तमता

त्पर्येदशमोऽध्यायः ॥१०॥ ॥ तदधीनंवासर्वंनवेतिसंशयंरुद्रस्याहनत् । अल्पकेनैवमर्येनरुद्रस्यप्रतीका
रंकृत्वा ॥१॥ कस्मिन्कर्मणिमयोविपरीतंचकार ॥२॥ सापेक्षंनतुदोषाययत्रसिद्धमपेक्षितमितिशब्दनिर्णये
॥ ३ ॥ [१४]विष्णुनादिष्टंव्यपोहितुंदेवोसुरोन्योवानसमर्थः ॥ १४ ॥ इतिसप्तमतात्पर्येएकादशः॥ ११ ॥ ॥
[११]अनाद्यनंतकालेषुमुक्तौसंसारएवच । मयिस्थश्चोदयत्येकोविष्णुर्मांसर्वदैवतु । इतिसप्रीतिकंज्ञानंविद्यादा
त्मसमर्पणं । बहिस्थेश्वरदासत्वंदास्यमित्युच्यतेबुधैरितितंत्रमालायां ॥ ११ ॥ [३]हरिरस्मिंस्थितइतिस्त्रीणांभ
र्तरिभावना ॥ शिष्याणांचगुरौनित्यंशूद्राणांब्राह्मणादिषु । भृत्यानांस्वामिनितथाहरिभावउदीरितइति
च ॥३०॥ इतिसप्तमतात्पर्येद्वादशोऽध्यायः ॥१२॥ ॥ [१]बहुत्वेनैववस्तूनांयथार्थज्ञानमुच्यते । अद्वैतज्ञा
नमित्येतद्वैतज्ञानंतदन्यथा । यथाज्ञानंतथावस्तुयथावस्तुतथामतिः । नैवज्ञानार्थयोर्भेदस्ततएकत्ववेदन
मितिच ॥१०॥ [१४]गुरोराज्ञानुरोधेनदूरस्थोवनस्थोवागृहीभवेदितिच ॥१४॥ अप्रविष्टःसर्वगतःप्रविष्टस्त्वनुरू
पवान् । एवंद्विरूपोभगवान्हरिरेकोजनार्दनइतिच ॥ १५ ॥ [२४]कार्यस्यकारणलयज्ञानमात्रंविलापनमितिच
॥२४॥ [२]परःकविर्बृहस्पतिः ॥२८॥ [२१]चित्तंहिरण्यगर्भेतुविलाप्यपरमात्मनि । क्षेत्रज्ञाख्येलापयेच्चततोनान्य

त्स्मरेद्बुध इतिच ॥२९॥ [31]आत्मानंपरमात्मानं । अद्वयः । ततोन्यस्मृतिवर्जितः । दग्धयोनिर्यथानलइति कृत्याभावमात्रं । नहरिंस्मरतःकृत्यंदग्धेंधनहुताशवदितिच ॥ ३१ ॥ इतिसप्तमतात्पर्येत्रयोदशोऽध्यायः ॥१३॥ ॥ [4]आत्मनिपरमात्मनि ॥४॥ [7]अप्रयोजकंपक्षंनसंश्रयेत् । नाप्रयोजनपक्षीस्यान्नवृथाशिष्यबंधकृत् । नचोदासीनशास्त्राणिनविरुद्धानिचाभ्यसेत् ॥७॥ नव्याख्ययोपजीवेतननिषिद्धान्समाचरेत् । एवंभूतोयतिर्यातितदेकशरणोहरिमितिसमाचारे ॥८॥ [44]चित्तेमनोवृत्त्यभिमानिनि । अर्थविभ्रमेअर्थेषुभ्रममाणे । चित्ताख्याग्नेरधीनंहिजगदेतद्विचिंतयेत् । मनोनामेंद्रवशगमग्निंचप्रविचिंतयेदित्यादिच ॥ ४४ ॥ [46]शास्त्रीयत्वान्मुख्यतःशास्त्रापेतमिदंविदुः । शास्त्रनिर्णयगम्यत्वाच्छास्त्रीयमभिधीयतइतिच ॥४६॥ इतिसप्तमतात्पर्येचतुर्दशोऽध्यायः ॥१४॥ ॥ [14]नभश्छिद्रः नभोव्याप्यस्थितःपरमात्मा ॥१४॥ [22]सप्तम्यादित्रयंचैवतथाचैत्र(व)त्रयोदशी । चतस्रस्त्वष्टकाःप्रोक्ताःसर्वपक्षाद्विशेषतइतिचव्यासस्मृतौ । हेमंतेशिशिरेचैवनित्यश्राद्धंगुणोत्तरमितिच ॥ जीवेनरूपेणसह ॥२२॥ [30]ब्रह्मादिस्थावरांतेषुनविशेषोहरेःक्वचित् । व्यक्तिमात्रविशेषेणतारतम्यंवदंतिचेति ॥३०॥ [42]शिलावत्प्रतिमाःसंतोविप्राद्याश्चहरेःस्मृताइतिच ॥ ४२ ॥ इतिसप्तम

तात्पर्येपंचदशोऽध्यायः ॥ १५ ॥ यैज्ञाभिमानिनोदेवान्स्मरंतींद्रियमानिनां । वशगांस्तान्मनोमानिसुरेंद्र स्यवशेस्थितान् । वेदात्मिकायाःपार्वत्यास्तांरुद्रस्यवशेस्थितां । वर्णत्रयात्मकंरुद्रंशेषेतुप्रणवात्मके । बिंदु रूपसरस्वत्यांतंतांतस्यांपुनर्न्यसेत् । मूलस्थानादरूपायांतांवायौतंजनार्दने।प्रकृतावथवाप्राणंतामेवपुरुषो त्तमइतिब्रह्मतर्के ॥५३॥ स्वैराडिंद्रः ॥५४॥ विश्वाद्याअनिरुद्धाद्यास्तेद्विधासंप्रकीर्तिताः । विष्णुरूपास्त दन्येचतान्सर्वान्यातिमोक्षगः । तदन्येचदिवस्पुत्राःसर्वेचद्युसमीपगाः । तेदिवंप्रापयंत्येनंसावायुंसहरिंपृ थक् । विश्वादिरूपंतुर्यश्चवासुदेवश्चनापरइतिच । अधिकोभूत्वासुखादिभिः ॥५५॥ भक्तिमान्मार्गवि विन्नैवनीचांगतिमवाप्नुयादितिच ॥५६॥ ग्लापकत्वात्तमः ॥५७॥ दुर्घटत्वादर्थत्वेनपरमेश्वरेणैवकल्पितं ॥५८॥ छायारीतिःप्रकारश्चभावश्चेत्यभिधीयतइतिशब्दनिर्णये । क्षित्यादीनांपदार्थानांकतमोपिप्रकारेोन घटते । परमेश्वरकल्पितत्वात्कार्यमित्येववक्तुंयुक्तं । नहिबहुरूपांसंघातमात्रंपृथिवी । नचविकारमात्रं । नहिकालुष्यादिविकारमात्रेणपृथिवीभवति । नचाद्भ्यःपृथक्स्थितिः । नचवस्तुद्वयवत्सहावस्थानमात्रं ॥५९॥ एवमवयवावयविनोरपि ॥६०॥ नचसादृश्यमात्रं । वस्तुभेदेहितद्युज्यते । तस्मात्स्वप्नएव । जा

ग्रस्त्वसौयथाविशेषतोदृश्येतेतथापृथिव्यबादिविशेषोदुर्घटोपीश्वरकल्पनयैवासौदृश्यते । कार्यकारणवस्तू
नांविशेषोननिरूपितः । तथापीशेच्छयैवासौदृश्यतेनियतोपिचेतिच ॥६१॥ [६२]अतीतमहाकल्पेअतीतब्रह्म
काले । ब्रह्मकालःपरश्चेतिमहाकल्पश्चकीर्तितइतिच ॥६९॥ इतिश्रीमद्भागवतसप्तमस्कन्धतात्पर्येश्रीमदा
नंदतीर्थभगवत्पादाचार्यविरचितेषोडशोऽध्यायः ॥ १६ ॥ ॥ सप्तमःस्कन्धःसंपूर्णः ॥ ॥
श्रीवेदव्यासायनमः ॥ [३]यैतइतिस्रष्टृत्वं । येनेतिप्रवर्तकत्वं । यइतिसत्ताप्रदत्वं । नसंतियदुपेक्षयेत्युक्तत्वा
त् । उत्पन्नस्यापियत्सत्ताहरेस्तत्सइतीर्यते । हरेर्विश्वंभिन्नमपिपरमोसौयतोविभुरितिब्रह्मतर्के ॥३॥ इत्यष्ट
मतात्पर्येतृतीयोऽध्यायः ॥३॥ ॥ [२५]अनुग्राह्यतयापक्षादेवानामात्मार्थंतोहरेरितिच ॥२५॥ [२६]छंयात्वविद्यासं
प्रोक्ताजन्यविद्यातपःस्मृतं । जीवगृध्रस्यतौपक्षावधऊर्ध्वपथोःपृथक् । तौविष्णोस्तुनविद्येतेनित्यविद्यास्व
रूपिणइतिच ॥२७॥ गुणत्रयनाभि । विद्युद्ब्रह्म । विद्युद्ब्रह्मेत्युपासीतेतिश्रुतेः । जगच्चक्रस्याक्षभूतोबल
रूपश्चकेशवइतिच ॥२८॥ [३०]आत्माचआत्मगुणाश्चनिर्जितायेन ॥ ३० ॥ [३३]सूर्यसोमयमेंद्रादीन्तेन्येलोकपा
अपि ॥ अद्भिर्जीवंतिसोमाच्चमहेंद्रादीन्तेऽखिलाः । अपांसोमस्यचेंद्राद्याःसर्वेवैजीवनप्रदाइतिच ॥३३॥

[३५]समुद्रेउदरे ॥३५॥ अमृतस्येतिमुक्तेरित्यस्यविशेषणं ॥३६॥ इत्यष्टमतात्पर्येपंचमोऽध्यायः ॥५॥ ॥ [३९]अनं
तोढोमंदरस्तुयदावैवस्वतांतरं । अमृतार्थेसुपर्णोढोरैवतस्यांतरेमनोरितिब्राह्मे ॥ ३९ ॥ इत्यष्टमतात्पर्येष
ष्ठोऽध्यायः ॥६॥ ॥ [४६]रुद्रस्ययशसोर्थायस्वयंविष्णुर्विषंविभुः । नसंजह्रेसमर्थोपिवायुंचोचेप्रशांतयइतिच
॥४६॥ [३२]तत्रतत्रस्तुतिपदैर्हरिरेवतुतद्गतः । स्तूयतेऽतोयुक्तमेवगुणाधिक्यवचोपित्वितिच ॥३२॥ इत्यष्टमता
त्पर्येसप्तमोऽध्यायः ॥७॥ ॥ [२३]अनाद्यनंतकालेपिविष्णुमेवाश्रितारमा । अन्येषांज्ञापनार्थायदोषानुक्त्वे
ताराज्ञहावितिच ॥२३॥ तेषां[३५]सत्याचालनार्थंहरिर्धन्वंतरिर्विभुः । समर्थोप्यसुराणांतुस्वहस्तादमुचत्सुधामि
तिच ॥३५॥ इत्यष्टमतात्पर्येअष्टमोऽध्यायः ॥८॥ ॥ कालनेम्यादयःसर्वेहरिणानिहताअपि । शुक्रेणो
ज्जीविताःसंतःपुनस्तेनैवपातिताइतिच ॥ इत्यष्टमतात्पर्येनवमः ॥९॥-२१॥ ॥ बलि[९।१२]रप्यसुरावेशात्स्तुव
न्नपिजनार्दनं । आक्षिपत्यंतराक्कापिप्रह्लादोनित्यभक्तिमानितिब्रह्मांडे ॥ इत्यष्टमतात्पर्येद्वाविंशोऽध्यायः
॥२२॥ ॥ [६१]अनंतशक्तिर्भगवान्मत्स्यरूपीजनार्दनः । क्रीडार्थंयाचयामासस्वयंसत्यव्रतंनृपमितिमात्स्ये ॥
इत्यष्टमतात्पर्येत्रयोविंशोऽध्यायः ॥२३॥ ॥ अष्टमःस्कन्धःसंपूर्णः ॥८॥ ॥ ॥

श्रीवेदव्यासायनमः ॥१॥५॥ ब्रह्मादिभक्तिकोव्यंशादंशोनैवांबरीषके । नैवान्यस्यचकस्यापितथापिहरि
रीश्वरः । तात्कालिकोपचेयत्वात्तेषांयशसआदिराट् । ब्रह्मादयश्चतत्कीर्तिंव्यंजयामासुरुत्तमा । मोहना
यचदैत्यानांब्रह्मादेर्निंदनायच । अन्यार्थंचस्वयंविष्णुर्ब्रह्माद्याश्चनिराशिषः । मानुषेषूत्तमत्वाच्चतेषांभक्त्या
दिभिर्गुणैः । ब्रह्मादेर्विष्ण्वधीनत्वज्ञापनायचकेवलं । दुर्वासाश्चस्वयंरुद्रस्तथाप्यन्याय्यमुक्तवान् । तस्या
प्यनुग्रहार्थायदर्पनाशार्थमेवचेतिगारुडे ॥८५॥ इतिनवमतात्पर्येषष्ठोऽध्यायः ॥६॥७॥ [१३] नित्यपूर्णसुख
ज्ञप्तिस्वरूपोसौयतोविभुः । अतोस्यरामइत्याख्यातस्यदुःखंकुतोण्वपि । तथापिलोकशिक्षार्थमदुःखो
दुःखवर्तिवत् । अंतर्हितालोकदृष्ट्यासीतामासीत्स्मरन्निव । ज्ञापनार्थंपुनर्नित्यसंबंधंस्वात्मनःश्रिया । अ
योध्यायाविनिर्गच्छन्सर्वलोकस्यचेश्वरः । प्रत्यक्षंतुश्रियासार्धंजगामानादिरव्ययः ॥९३॥ इतिनवमतात्प
र्येअष्टमोऽध्यायः ॥८॥ [१७] नक्षत्रमासगणितंत्रयोदशसहस्रकं । ब्रह्मलोकसमंचक्रेसमस्तंक्षितिमंडलं ॥ १७॥
[२२] रामोरामोरामइतिसर्वेषामभवत्तदा । सर्वोराममयोलोकोयदारामस्त्वपालयदितिस्कांदे ॥२२॥ इतिनवम
तात्पर्येनवमोऽध्यायः ॥९॥–१२॥ ॥ जामदग्न्योवरंवव्रेऽनंतशक्तिरपिस्वयं । पितुर्मान्यत्वसिध्यर्थंलोके

लोकेश्वरःप्रभुः । अपापमपिदेवेशंपितरःसंन्यवर्तयन् । अजानंतोस्यमाहात्म्यंमोहितास्तस्यमायया । मो
हयन्माययालोकंचक्रेचापचितिंवधे । पुण्यपापादिनिर्मातुःकुतःपापादिसंगतिरितिच ॥८॥ इतिनवमता
त्पर्येचतुर्दशोऽध्यायः ॥१४॥१६॥ ॥[३७]द्वाजंमिमंभर । उचथ्यस्यक्षेत्रजोबृहस्पतेर्जातइति । द्वयोर्जातत्वाद्द्वा
जः । बृहस्पतेर्वीजःप्रजासंततिर्येनभृताबृहस्पतेर्भरद्वाजः ॥३७॥ [३९]भरद्वाजोमरुद्भिश्चभृतोजातोद्वयोर्यत
इतिपाद्मे ॥३९॥ इतिनवमतात्पर्येसप्तदशोऽध्यायः ॥१७॥१९॥ इतिनवमतात्पर्यंसंपूर्णं ॥ ॥
श्रीवेदव्यासायनमः ॥ [४१]स्वप्नेयथादृष्टश्रुतस्मृत्यनुसारिदेहंप्राप्नोति । अपस्मृतिर्मृतः । पूर्वदेहस्मरणाभावा
त् । अनभिमानतः ॥४१॥ यतोयतः यत्रयत्र मनोधावत्यात्मपंचानांमध्येतत्रतत्रतेनदैवेनसहजायतेगु
णानुबद्धःसन् देवगांधर्वपित्र्येषुमानुषेष्वासुरेषुच । यत्रयत्रमनोयातितत्रतत्रोपजायते । स्वगुणस्यानुसारे
णसत्त्वादिविनिबंधनइतिगारुडे । देवादित्वंयोग्यतयातत्सकाशस्त्वनुस्मृतेः । श्वेतद्वीपादितत्रापियोग्य
तामप्यपेक्ष्यतु । विष्णोःस्थानंविनान्यत्रवायुशक्रादिनामपि । त्रैलोक्यदेशभेदेषुयोग्यतानत्वपेक्षितेति
१४५ नारदीये ॥४२॥ विभाव्यतेविविधंभाव्यते । स्वमायारचितेषुविष्णुमायारचितेषु । रागानुगतःपुमान्जी

वोविविधंमुह्यति । यथैवोदशरावेषुसूर्यादिःप्रतिबिंबितः । वायुनाचलितोभातिछिन्नभिन्नादिरूपवान् ।
एवंविष्णिवच्छयाजातगुणेषुप्रतिबिंबितः । छिन्नोभिन्नोमृतोस्मीतिबहुधाप्रतिपद्यते । तदेवचदृढीभूतउद
केनिःशरावके । छेदभेदादिनाप्नोतिनिश्चलंप्रतिबिंबितं । एवंगुणैर्विमुक्तस्तुजीवोनाप्नोतिदुःखितां । शरा
ववद्गुणाःप्रोक्ताअज्ञानंतुद्रवत्ववत् । दृढीभूतोदवज्जीवस्तज्ज्ञानंप्रतिबिंबवत् । नित्यांतःकरणंचैवप्रतिबिंब
श्चतद्गतः । द्वयमेवविमुक्तस्यनकिंचिज्जडमिष्यते । सूर्यकांतादिवत्तस्यस्वरूपंद्वयमप्युत । तस्मान्नहंतुंश
क्योसौकेनचिज्जीवआत्मवान् । तस्मात्स्वजीवनार्थायनपरद्रोहमाचरेत् । हन्यतेचाज्ञभावेनपरेषांद्रोहमा
चारन्निितितंत्रभागवते । परःस्वोहरिरुद्दामाइतिनामचतुष्टयं । विष्णोर्गुह्यंतुयोवेदसर्वपापैःप्रमुच्यतइतिप्र
काशिकायां । स्वतंत्रत्वात्सुखत्वाच्चस्वनामाविष्णुरुच्यतइतिपाद्मे ॥ ४३ ॥ कुंडादिस्थाभेर्दारुयोगादौस्व
तःप्रवृत्त्यभावात् । यथाकुंडस्थितस्याग्नेर्दैवाद्दारूपसंनमेत् । देहयोगोवियोगश्चतथादैवान्नचान्यथेतिवाम
ने ॥५१॥ इतिदशमतात्पर्येप्रथमोऽध्यायः ॥१॥२॥ ॥ ॐआविश्यपितरंविष्णुःस्वरूपेणैवमातरं । विडं ॥८६३॥
बनार्थंलोकस्यनिर्जनिश्चाप्यथाविशत् । आनंदमात्रदेहेनजातवत्संप्रदृश्यतइतिच ॥१९॥ सँच्छब्दउत्तमं

ब्रूयादानंदंदितिवैवदेत् । येतिज्ञानंसमुद्दिष्टंपूर्णानंददृशिस्ततः । सत्यशब्दोदितंतादृग्रूपंनित्यंयतोहरेः ।
सत्यव्रतस्ततोविष्णुःसद्भूतत्रयमुच्यते । त्यंतदन्यत्समुद्दिष्टंतत्परत्वात्तुतत्परः । वेदमुख्यार्थरूपत्वात्रिसत्यो
भगवान्हरिः । सत्यस्यचोत्तमानंदज्ञानदातृत्वतःसदा । सत्यस्यसत्योभगवान्सत्यस्थोजगतिस्थितः । जग
न्नेतृत्वतःसत्यनेताविष्णुःप्रकीर्तितः । अत्तृत्वाच्चतदादानात्सत्यात्माचोच्यतेविभुरितितंत्रभागवते ॥२७॥
जगद्वृक्षाश्रयाह्येषाप्रकृतिस्तुगुणत्रयं । मूलंमालाःशिफास्तस्यउत्पित्सुत्वादिकास्तस्था । षट्प्रकारास्तुविट
पादेवगंधर्वदानवाः । राक्षसाश्चपिशाचाश्चतिर्यङ्मानुषतस्थुषः । इंद्रियाण्यस्यपत्राणिद्वारोद्वारोनवस्मृ
ताः । प्रवृत्तंचनिवृत्तंचफलद्वयमुदीरितं । धर्मादयस्त्वत्ररसामोक्षएकफलस्यतु । प्रवृत्ताश्चनिवृत्ताश्चपक्षि
णोद्विविधामताः । कारणस्यसदासत्वात्प्रवाहेणचसन्नसौ । नकदाचिन्नभूतोसौनचैवनभविष्यति । स्व
तोवापरतोवापिसन्नतोसौजगत्तरुः । अस्यसर्गादिकृद्विष्णुःसदानंदैकरूपकइतिच ॥२८॥ [३१] सदासर्वगुणा
ढ्यत्वात्सत्ववान्हरिरुच्यते । नतुसत्वगुणात्मत्वाद्यतस्त्रिगुणवर्जितइतिनारदीये ॥ ३१ ॥ भगवत्पादपोतो
सौनान्यपोतसमोभवेत् । संनिधायैवशिष्येषुतदेवप्राप्नुयुर्यतइतिवामने । भगवत्पादनौकायानेयंनौकोप

माभवेत् । तयातीर्त्वातुतामेवप्राप्यतिष्ठंतितत्रयदितिब्राह्मे । अतस्तामेवयाताः ॥३४॥ विशुद्धसत्वब्रह्मा
देःशरीरेसंस्थितोहरिः । तेषामादेशमार्गेणवेदाद्यैरर्चयंतितमितिभागवततंत्रे ॥३५॥ सत्वंब्रह्मादिदेहाख्यं
ज्ञानरूपंतमोनुदं । यदिनस्यात्तदासत्वप्रकाशानुमितोविभुः । यदिनस्यात्परोविष्णुःकथंविद्वज्जनाअमुं ।
अर्चयंतीतितत्त्वस्यजिज्ञासुभिरधोक्षजः । कथंज्ञायेतकस्यापिनिर्गुणत्वात्परोविभुरितितंत्रभागवते ॥३६॥
लोकसिद्धार्थनाम्नःसराहित्यान्नामवर्जितः । अरूपोप्राकृतत्वाच्चसत्वाभावात्तथागुणः । अकर्माक्लिष्टकारि
त्वान्नित्यत्वादजएवच । अलौकिकार्थसन्नाम्नामनंतत्वाज्जनार्दनः । अनंतनामापरमःसुसुखज्ञानरूपवा
न् । तानिचास्यसुदिव्यानिसुगंधीनिसुभांतिच । शुभलक्षणपूर्णानिसुवर्णानिमहांतिच । यदतोनंतरूपो
सौपूर्णानंदादिभोजनात् । बलैश्वर्यसुवीर्यादिपूर्णासंख्यगुणत्वतः । अनंतगुणएवासौतेचाभिन्नागुणाह
रेः । परस्परमभिन्नाश्चसर्वेधर्माश्चतद्गताः । अभिन्नानिचरूपाणिसर्वाणिजगदीशितुः । प्राकृतस्यतुनामा
देरीक्षितापुरुषोत्तमः । अनामादिवचोभिस्तुसएषोर्थोनुमीयते । अनामत्वादिचान्यच्चज्ञानिनांमनसेंग्यते ।
तेनैवचोह्यएषोर्थस्तस्माज्ज्ञेयइतिप्रभुरितिब्रह्मतर्के । देवक्रियायाःप्रतियंति । भगवत्प्रेरणादेवजानंति ।

नामरूपादिविष्णोस्तुनशक्यंज्ञातुमंजसा । तथापितत्प्रसादेनजानंतिपरमर्षयइतिपाद्मे ॥३७॥ यस्मान्ना मरूपादयःसंतितस्माच्छृण्वन्गृणन् । क्रियासुक्रियमाणासुप्रेरकत्वेनपूज्यत्वेनच । सर्वक्रियासुकर्तृत्वपूज्य त्वेनजनार्दनं । योवेत्तिनैतिसंसारंतत्प्रसादान्नसंशयइतिक्रियायोगे ॥३८॥ खंनाभिश्चरणौक्षितिरितिभ वतःपदोभुवः । पदाद्याश्रयणाद्विष्णोःपृथिव्यादिपदादिकं । तज्जत्वाद्वाथसादृश्याद्यथानुर्भूमिगंपदमिति ब्रह्मतर्के ॥३९॥ अज्ञानादेवमन्यंतेविष्णोर्जनिमृतीनराः । स्थितिरूपस्यचान्यस्मात्स्थितिंमोक्षाश्रयस्य हि । स्वेच्छयाहिजनिंभंगंस्थितिंचासौकरोत्यजः । सर्वस्यजगतोयस्मात्तज्जन्मादिःकुतोभवेदितिच ॥ ॥४०॥ इतिदशमतात्पर्येतृतीयोऽध्यायः ॥३॥ ॥ बहिश्चविद्यमानत्वादप्रविष्टोजगद्धरिः । प्रविष्टवच्च तत्रैवपूर्णरूपत्वतोविभुः । अप्रवेशःप्रवेशश्चप्रविष्टोपमतातथा । बहिरंतर्गतस्यस्यादित्याहुःशब्दवेदिनइ तिच ॥१५॥ महदादिस्त्वविकृतईषद्विकृतरूपतइतिच । अनुगताइव । प्रविष्टाइव । पूर्वोक्तवद्बहिरपि विद्यमानत्वात् । अंतश्चदेवतानामविभक्तशक्तित्वात्पूर्वोत्पन्नत्वात्तत्त्वानामंडप्रवेशमात्रं । व्यक्तिविशेषा दुत्पत्तिरित्युपचर्यते । अंडजोब्रह्मेत्यादि । महद्रूपादिनाब्रह्मादेवाश्चैवप्रजज्ञिरे । अंडेत्वेषामभिव्य

 क्तिर्जनिरित्यभिधीयतइतिच ॥१६।१७॥ ग्राह्यगुणविषयबुध्यनुमेयलक्षणः । ग्राह्यगुणेष्वस्वातंत्र्या 
 त्तज्ज्ञापकोन्योस्तीतिज्ञायते । ज्ञातापिसर्वभावानांज्ञायतेज्ञानलिंगतः । जिघृक्षोर्ग्रहणाभावादस्वातं
त्र्यप्रतीतितः । सर्वत्राव्यवधानेनद्रष्टृत्वात्सर्ववस्तुनः । आंतरंबाह्यमित्येवविशेषोनास्तिकश्चनेतितंत्रभाग 
वते । जीवस्यग्रहणशक्तिरपितस्येत्यपिशब्दः । एवंशरीरमुत्पाद्यज्ञायसे । सर्वस्यसंपूर्णस्य । सर्वःसंपूर्ण
सामर्थ्यात्सर्वात्मासर्वभक्षणात् । अनन्याश्रयतश्चात्मवस्तुत्वमभिधीयतइतिच । आत्मन्येववासादात्मवस्तु
॥१८॥ परमात्मनोपिशरीरेसन्निधानादेवाबुधैरस्वव्यतिरेकतोज्ञायसे । यथानुकूलवादंवेदवचनंविनाप्रवर्त
मानंनतन्मनीषितं । सम्यक् । अभीश्दमेकमेकोअस्मिनिष्षाळभीद्वाकिमुत्रयःकरंति । खलेनपर्षान्प्र
तिहन्मिभूरिकिंमानिंदंतिशत्रवोनिंद्राइतिजीवेशयोर्भेदंव्यक्तंवचःपरःपुमानुपाददे । प्रविष्टत्वाच्छरीरेषु
जीवएवेतिदुर्धियः । मन्यंतेपरमात्मानंनतन्मतमनुव्रजेत् । वेदवादविरोधित्वादनुयातातमोविशेत् ।
यतःपर्यंकशयनआहविष्णुःसनातनः । इदंजगत्सर्वमथेद्दशानिभूरीणिवामामभियांतिसंख्ये । धान्यानिय
द्वत्खलगानिमर्त्याःसंचूर्णयिष्याम्यहमेकएवेतिब्रह्मांडे । चेतिफलतोपितमोयांतीति । ऐकात्म्यज्ञानतोयां 

तितमोभेदात्परंपदं । स्वातंत्र्यपारतंत्र्यादिज्ञानंभेददृशिर्भवेदितिब्रह्मवैवर्ते ॥१९॥ अनीहोऽक्लिष्टकारित्वा त्तथाऽविकृतएवसन् । सर्वंकरोतितद्युक्तमैश्वर्यात्पूर्णशक्तितइतिब्राह्मे । अगुणश्चेत्कथंगुणैःसृष्ट्यादिकृदि तितदाश्रयत्वात् । अगुणोऽगुणदेहत्वात्सगुणोगुणधारणात् । ऐश्वर्यादिगुणत्वाद्वावासुदेवइतीर्यतइत्या ग्नेये ॥२०॥ जगतांवर्धयन्सत्वंयदारक्षतिकेशवः । हयग्रीवादिरूपेणशुक्लवर्णस्तदाविभुः । वर्धयंस्तुरजोये नजगदुत्पादयेद्धरिः । तद्रक्तंजामदग्न्यादिरूपंयेनविनाशयेत् । वर्धयंस्तुतमोलोकेतत्कृष्णंयादवादिकं । सर्वत्रसर्वंकुरुतेविशेषस्तत्रकीर्तितः । ज्ञानदानादिनारक्षामहतांसंप्रकीर्तिता । रागदानेनमहतांसृष्टिःसृ ष्टिरुदीर्यते । असतांतुतमोवृद्धिंकुर्वन्पातयतेयदा । सतांविवर्धनार्थायकृष्णरूपीतदाहरिः । ज्ञानाद्युत्प त्तिकृच्चापिरूपंरक्तंविभोःस्मृतं । तमोविनाशकमपिकृष्णंविष्णोरुदाहृतं । आचार्यादिषुरागार्थेशुद्धसत्वा त्मकंरजः । यतोव्यपेक्षितंनाशेतमसोपिततःपरं । तमोद्वेषात्मकंशुद्धंसत्वात्मकमुदीर्यते । एवंसृतिगता नांतुरागाद्यानगुणोद्भवाः । शुद्धज्ञानात्मकाःसर्वेमुक्तानांनात्रसंशयः । सर्वत्रसर्वकृच्चापिहयग्रीवादिरूप कः । ज्ञानादिरक्षकोविष्णुर्जामदग्न्यादिरूपवान् । ज्ञानाद्युत्पादकोनित्यंकृष्णादिर्दोषनाशकः । एकरूपो

पिभगवान्बहुरूपइवेयते । अचिंत्यैश्वर्यरूपत्वात्पूर्णानंदैकरूपकइतिब्रह्मतर्के । स्वेच्छयातुगुणान्विष्णुर्नानारूपान्करोत्यजः । गुणानामाश्रयत्वात्तुभवेत्सगुणबृंहितइतितंत्रभागवते ॥२१॥ सतांसुखविवृध्द्यर्थमसतांपीडनंहरेः । यावच्चासुरदुःखंस्यात्तावद्देवसुखंभवेत् । तत्रापितारतम्येनब्रह्मणोभ्यधिकंसुखं । यावत्क्षीणंतमस्तावत्प्रकाशस्यतुवर्धनं । सर्वस्माच्चकलेःपीडाब्रह्मणोऽभ्यधिकंसुखं । तस्मात्सतांरक्षणायसर्वकर्महरेःस्मृतमितिब्रह्मतर्के ॥२२॥ सर्वाशुभविनिर्मुक्तगुणमात्रोयतोहरिः । सत्तामात्रमतःप्राहुर्निर्विशेषोखिलोत्तमः । अनादरान्निरीहश्चसेहःसर्वकृतीयतइतितंत्रभागवते । यस्यतद्रूपंसत्वं । सप्तसुप्रथमेतिसूत्रात् ॥२७॥ अशेषसंज्ञःसर्वनामा ॥२६॥ चेष्टतेअनेनेतिचेष्टा ॥२७॥ इतिदशमतात्पर्येचतुर्थोऽध्यायः ॥४॥ पूतनाकंसनरकशिशुपालादिषुद्विधा । जीवाःसंतस्त्वसंतश्चतत्रबंध्वादिरूपिणः । विष्णोःसंतइतिज्ञेयाअसंतःशत्रुरूपिणः । शुभजीवप्रकाशेनकदाचिच्छुभबुद्धयः । विपर्ययेऽन्यथाचस्युःशुभास्तत्रहरिंययुः । असुराश्चतमोघोरंयदितत्रैवमध्यमाः । मध्यमांगतिमेवापुरेकदेहगताअपीतिगारुडे ॥१॥ अयमात्मापरमात्मा ॥१९॥ यतःपरमात्मनोनैकविधमैक्यंविपरीतज्ञानेनयतश्चसंसृतिर्ननिवर्तते । सएवनविपर्येति । (पु

त्रादिकंतुविपर्येति ) तस्मात्तस्मिन्नेवस्थितिंकृत्वामानुशोच । अहंब्रह्मास्मिदेवोस्मिनास्मिकेवलमानुषः । जातोस्मिवर्धेधनवान्प्रियइत्यादिकासदा । देहादिषुचदेवेषुपरेब्रह्मणिचाभिदा । मोहाद्यन्माययानित्यंदृश्यतेऽधममध्यमे । सईशोनविपर्येतिसर्वेशत्वात्कदाचन । पुत्रादिकंविपर्येतिपित्रादिश्चयतोभवेदितिब्राह्मे । तल्लक्षणैर्विहीनःसन्ब्रह्मदेवोस्मिचेतितु । असुराःप्रतिपद्यंतेजन्मादीन्मानुषाजनाइतिच । परब्रह्मण एकस्यब्रह्मास्मीतिविचिंतनं । परब्रह्मेतिरामादिलक्षणैरवधारयेत् । देवोस्मीतिचदेवानांतच्चज्ञेयंस्वलक्षणैः । मर्त्यानांमानुषोस्मीतिप्रतिपत्तिर्विधीयते । अन्यथाप्रतिपत्त्यातुतमोयांतिविनिश्चयात् । अन्यथाप्रतिपद्यंतआसुरानियतंजनाः । घोरंतमश्चतेयांतितथाज्ञानात्परंसुराइतिच ॥२०।२१॥ देहिनां[२६]मज्ञानप्रभवायातनाःस्वपरेतिभिदाहंति । देवोहंमानुषोवेतिविशेषंतत्रचापितु । तथैवपरमात्मानंविशेषंब्रह्मजीवयोः । सम्यग्भेदेनयःपश्येत्सहंत्यज्ञानसंभवाः । यातनाःपरमात्मानंतत्प्रसादाच्चगच्छतीतिब्रह्मांडे ॥ २६ ॥ भगवद्दर्शनाद्यस्यविरोधाद्दर्शनंपृथक् । पृथग्दृष्टिःसविज्ञेयोनतुसद्भेददर्शनइतिचभविष्यत्पुराणे । स्वरूपभेदोहिपरजीवयोर्जीवगोमिथः । परस्परेणवस्तूनांविशेषःशास्त्रदर्शितः । सद्भेदोयंसमुद्दिष्टस्त्वसद्भेदंचमेशृणु । स्व

रूपाणांगुणानांचविष्णोर्भेदःपरस्परम् । सर्वस्यविष्णवतंत्रत्वंशत्रुमित्रादिभेदिता । यच्चान्यच्छास्त्रविद्विष्ट
मसद्भेदःसईरितः । सद्भेददर्शनान्मोक्षस्त्वसद्भेदात्तमोव्रजेत् । सद्भेदादर्शनाच्चैवतमोमोक्षस्तथेतरादितिच
॥२७॥ इतिदशमतात्पर्येपंचमोऽध्यायः ॥५॥१०॥ ॥ [३०]रूप्यत्वात्तुजगद्रूपंविष्णोःसाक्षात्सुखात्मकं । नि
त्यपूर्णसमुद्दिष्टंस्वरूपंपरमात्मनइतिवामने ॥ ३० ॥ देहे । विष्णुःसर्वगुणोद्रेकात्कालइत्यभिधीयतइतिच
॥३१॥ प्रकृत्यादेस्तद्वशत्वात्प्रकृत्यादिरुदीर्यते । यथाराजाभृत्यकृतात्स्वयंकर्तेत्युदीर्यते । तथादेहंस्वतंत्र
त्वात्स्वयमित्याहुरंजसेतिपाद्मे ॥३२॥ स्वात्मनागृह्यमाणः ॥३३॥ छन्नोन्येषांनतुस्वस्यभगवान्पुरुषोत्तमः
॥३४॥ तस्यावतारादेहस्थाअदेहस्थाइतिद्विधा । अंतर्याम्यादिरूपाणिदेहस्थानिविदोविदुः । मत्स्यकूर्मा
दिरूपाणिनदेहस्थानिहृत्पतेः । अन्यातुल्यैरतिशयैर्मनसोनियमादिभिः । ज्ञायंतेतानिरूपाणिनित्यपूर्णा
निसर्वशइतिमहाकौर्मे ॥३५॥ इतिदशमतात्पर्येएकादशोऽध्यायः ॥११॥१३॥ ॥ [३४]दंडोपिभगवच्चीर्णो
ममैषोनुग्रहःकृतः । इतिभक्त्याचिंतयतांशुभकारीभवत्यलं । तत्वापिकुर्वतांद्वेषंतमःप्राप्स्यैतथाभवेदितिच ॥८६७॥
॥३४॥ [३७]अपुनर्भवमात्वात्तुहरिसामीप्यमुत्तमं । तत्रापिस्पर्शयोग्यत्वंयथावेदविदोविदुरितिपाद्मे ॥ ३७ ॥

[३९]भूतायसर्वदाविद्यमानाय ॥३९॥ अप्राकृताय ॥४०॥ कालनाभाय । कालाश्रयाय । विश्वस्यतदधीन
त्वाद्विश्वंविष्णुरुदीर्यंते । मूलहेतुत्वतोहेतुःकर्ताप्रातिस्विकंकृतेरित्याग्नेये ॥४१॥ [४६]गुणप्रदीपाय । गुणज्ञाप
काय । गुणात्मस्थोदयाय । गुणात्मिकाप्रकृतिःतस्यांस्थितउदयस्वरूपोहरिः ॥४६॥ [४७]अविश्वायजीवेभ्यो
न्यस्मै । शरीरेषुप्रविष्टत्वाद्विश्वोजीवउदीर्यंते । जीवस्यतदधीनत्वाद्विश्वोविष्णुरितिस्मृतः । तस्योत्पत्त्या
दिहेतुत्वाद्विश्वहेतुश्चकीर्त्यतइतिमात्स्ये ॥४८॥ हरेःस्वरूपशक्तिर्याकालशक्तिरुदीर्यंते । सदासर्वगुणात्म
त्वाद्दुर्गावाप्यवराततः । सर्वसंहारकारित्वाद्वायुःसर्वस्यजीवनात् । कालाभिमानिनावेतौदुर्गावायुश्चकी
र्तितावितिप्रकाशसंहितायां ॥४९॥ अंतःप्रियंबहिश्चेतिद्विधाप्रियमुदाहृतं । अंतःप्रियाहरेःसंतःसर्वंचा
पिबहिःप्रियं । असंतश्चापिसंहारईषदंतःप्रियाइव । तदपेक्षयातथासंतोविशेषांतःप्रियास्थिताइतिषाड्गु
ण्ये । सुखांतंप्राप्नुयुर्यस्माद्देवाःशांताउदाहृताः । अशांतामानुषाःप्रोक्ताविमूढाआसुरामताइतिप्रकाशसं
हितायां । कर्मपरीप्सयाकर्मप्रवर्तनार्थं । सर्वशरीरेषुस्थातुरीहतःप्राणस्यसकाशात् । प्राणसकाशाद्धिक
र्मप्रवर्तनमिच्छतिभगवान् । वायोःसकाशाज्जगतःप्रवृत्तिंकामयत्यजः । प्राणप्राणमतःप्राहुर्विष्णुंवायोर

पिप्रभुमितिच ॥५०॥ धाँतुर्गुणविसर्जनं । हिरण्यगर्भसकाशाद्गुणभूतासृष्टिरस्यजगतः । प्राधान्येनवि
ष्णोरेव । विष्णुःप्रधानतःस्रष्टागुणस्रष्टाचतुर्मुखइतिनारदीये ॥ ५७ ॥ इतिदशमतात्पर्येचतुर्दशोऽध्यायः
॥१४॥ ॥ विष्णुनाविष्णुभक्तैश्चब्रह्मशापोनुवर्त्यते । ब्राह्मणानामपीडायैबलिभिःक्षत्रियादिभिः । वि
ष्णोश्चविष्णुभक्तानांशापाद्येतितपोखिलं । तथापिचासुरावेशाच्छपेयुर्हरिमप्यहो । अतस्तुसौभरेःशापं
नात्यवर्तत्खगेश्वरः । अन्यथातूत्तमानांहिनाधमैःशापइष्यते । वरोपिदत्तस्त्वधिकैर्नाधमाधिक्यकारणं ।
विष्णोरपिवरस्तस्मान्नाधिक्यंसंप्रयच्छति । क्रमशःश्रीविरिंचादेःकथंचित्केनचित्क्वचित् । नचदद्याद्धरि
स्तादृग्दद्याद्वाबाह्यमेवत्वितिब्रह्मांडे ॥ ११ ॥ इतिदशमतात्पर्येपंचदशोऽध्यायः ॥१५॥ ॥ श्रीदामाकृ
ष्णमुवाह । हरिवंशादिवचनात्। बहुमानविरोधेतुव्यत्यासःशब्दतोर्थतः। कार्योऽनिरुक्तदेवानांगुणसिद्ध्यै
नचान्यथा । विष्णुर्ब्रह्मतथावायुरनिरुक्ताःप्रकीर्तिताः । तत्पत्न्यश्चेतरगुणाव्यत्यस्यास्तेष्वसंशयइतिब्रह्म
तर्के ॥२३॥ इतिदशमतात्पर्येषोडशोऽध्यायः ॥१६॥ १७॥ ॥ श्रीदेवीवेणुमाविश्यरेमेकृष्णमुखांबुजे ।
पपौचतद्गतंगीतंसुराइतरभांडगाइतितंत्रभागवते ॥८॥ इतिदशमतात्पर्येएकोनविंशोऽध्यायः ॥१९॥२१॥

[१६] फलरूपःसकर्मणइत्याद्यवांतरेश्वरविषयं । स्वभावेकर्मणिचयःसत्वादिषुगुणेषुच । स्थितोविष्णुःसर्वकर्ता
पृथक्संस्थश्चसर्वगः । गुणकर्मस्वभावादिशब्दवाच्यश्चकेशवः । तेनजातंफलंयस्मात्कर्मणःफलमीर्यते ।
नचासौकर्मफलवान्नास्यकिंचिन्नशक्यते । तदन्यावांतरेशानांतद्वशत्वंयतःसदा । कर्मणःफलरूपत्वमत
स्तेषामुदीर्यते । नान्यकर्मवशत्वंतुतेषांविष्णुंविनाक्वचित् । सचब्राह्मणगिर्यादिनामाविष्णुरजःपरः ॥ ए
तस्मात्कारणात्कृष्णःशक्रस्यविमदायतु । गिर्यादिस्थितमात्मानंपूजयामासबल्लवैरितिच ॥१६॥ इतिदश
मतात्पर्येद्वाविंशोध्यायः ॥२२॥ ॥ अत्यल्पस्त्वसुरावेशोऽदेवानांचभविष्यति । प्राणमेकंविनासौहित्वाख
णाश्मसमःस्मृतः । तस्मिन्नप्यसुरावेशेगतेप्रकृतिरेवत्वितिचतंत्रभागवते ॥१॥ इतिदशमतात्पर्येत्रयोविं
शोऽध्यायः ॥२३॥२४॥ ॥ विशुद्धसत्वंविगतशुद्धसत्वं । यस्मात्त्रिगुणसंबंधस्त्वयिनविद्यते । यत्राग्र
हणमनुबंधः । तपोमयंज्ञानात्मकं ॥४॥ पुनर्गुणसंप्रवाहस्यकारणत्वात्तद्धेतवः । असतांचसतांचैवहरिरे
वानुशासकः । सतांतुश्रेयसेसैवह्यनुशास्तिर्भविष्यति । असतांविपरीतायलंघयित्वानुशासनमित्याग्नेये
॥५॥ आवेशोवसुदेवादौदेहादानंहरेःस्मृतं । देहादानंतदन्येषांजन्मेतिकवयोविदुः । तथाप्यसुरमोहाय

ग्रंथेषुबहुधैवत्विति पाद्मे ॥९॥ इतिपंचविंशोऽध्यायः ॥२५॥२६॥ ॥ कृष्णंकामास्तदागोप्यस्त्यक्त्वादेहं दिवंगता । सम्यक्कृष्णंपरंब्रह्मज्ञात्वाकालात्परंययुः । पूर्वंचज्ञानयुक्तास्तास्तत्रापिप्रायशस्तथा । अतस्तासांपरंब्रह्मगतिरासीन्नकामतः । नतुज्ञानमृतेमोक्षोनान्यःपंथेतिहिश्रुतिः । कामयुक्तातदाभक्तिर्ज्ञानंचातोविमुक्तिगाः । अतोमोक्षेपितासांचकामोभक्त्यानुवर्तते । अतोदकत्वेनसदाद्वेषिणामधरंतमः । मुक्तिशब्दोदितंचैद्यप्रभृतौद्वेषभागिनः । भक्तिभागीपृथङ्मुक्तिमगाद्विष्णुप्रसादतः । कामस्त्वशुभकृच्चापिभक्त्याविष्णोःप्रसादकृत् । द्वेषिजीवयुतंचापिभक्तंविष्णुर्विमोचयेत् । अहोतिकरुणाविष्णोःशिशुपालस्यमोक्षणादितिस्कांदे । जगत्प्रपितामहेजारबुद्धिर्नयुक्तातथापि । ब्रह्मतयानसम्यक् । प्रेष्ठोभवांस्तनुभृतांसुहृदंतरात्मा । रमायादत्तक्षणमितिवचनात् ॥१३॥ कामिनःकामित्वंक्रोधिनःक्रोधित्वमेवसर्वदाभवतीतितन्मयता । विमुक्तावपिकामिन्योविष्णुकामाव्रजस्त्रियः । द्वेषिणश्चहरौनित्यंद्वेषेणतमसिस्थिताइतिच । भक्त्याहिनित्यकामित्वंनतुमुक्तिंविनाभवेत् । अतःकांततयावापिमुक्तिर्भक्तिमतांहरौ । स्नेहभक्ताःसदादेवाःकामित्वेनाप्सरस्त्रियः । काश्चित्काश्चिन्नकामेनभक्त्याकेवलयैवतु । मोक्षमायांतिनान्येनभक्तियोग्यां

विनाक्कचिदितिपाद्मे । भक्त्यावाकामभक्त्यावामोक्षोनान्येनकेनचित् । कामभक्त्याप्सरस्त्रीणामन्येषांनैव कामतः । उपास्यःश्वशुरत्वेनदेवस्त्रीणांजनार्दनः । जारत्वेनाप्सरस्त्रीणांकासांचिदितियोग्यता । योग्यो पासांविनानैवमोक्षःकस्यापिसेत्स्यति । अयोग्योपासनाकर्तुरनर्थश्चभविष्यति । तस्मात्तुयोग्यतांज्ञात्वा हरेःकार्यमुपासनमितिभद्रिकायां । पतित्वेनाश्रियोपास्योब्रह्मणामेपितेतिच । पितामहतयान्येषांत्रिद शानांजनार्दनः । प्रपितामहोमेभगवानितिसर्वजनस्यतु । गुरुःश्रीब्रह्मणोर्विष्णुःसुराणांचगुरोर्गुरुः । मूलभूतोगुरुःसर्वजनानांपुरुषोत्तमः । गुरुर्ब्रह्मास्यजगतोदैवंविष्णुःसनातनः । इत्येवोपासनंकार्यंनान्यथातु कथंचनेतिवाराहे ॥१५॥ इतिदशमतात्पर्येसप्तविंशोऽध्यायः ॥२७॥३२॥ ॥ मानैर्वोबदरःसिंधुःशशिन स्त्रिनामकं । योवेदमुच्यतेरोगैर्विष्णुनाम्नेवसंसृतेरितिस्कांदे ॥२४॥ इतिदशमतात्पर्येत्रयस्त्रिंशोऽध्यायः ॥३३॥३४॥ ॥ आदिनोराक्षसाःप्रोक्तास्तदंतत्वाज्जनार्दनः ॥ आद्यंतइतिविज्ञेयःपरेशोब्रह्मणीशनादिति ब्राह्मे ॥३४॥ इतिदशमतात्पर्येपंचत्रिंशोऽध्यायः ॥३५॥ ॥ तंत्सनन्तथैवसन् ॥११॥ शुंभंतिशोभयंति । शुंभनंशोभनंशुंभंशुभपर्यायवाचकाइत्यभिधानं ॥१२॥ वैन्यंपार्थबलेशादावाविष्टंपुरुषोत्तमं । अपेक्ष्यत

द्गुणाःसर्वेतज्जीवानामभाविनः । अप्युच्यंतेपुराणेषुविशेषात्सन्निधिर्यतइतिमाहात्म्ये ॥३०॥ इतिदशम
तात्पर्येषट्त्रिंशोऽध्यायः ॥३६॥३७॥ [३]तवांगेभ्योभूताः ॥३॥ अन्यात्मतयागृहीताः । मत्तोन्येजीवात्मान
एतइतिभागवतागृहीताः । अहंपरोहिमद्भिन्नाजीवात्मानोल्पबुद्धयः । मद्वशाःसर्वएवेतिब्रह्मादीन्मन्यतेह
रिरितिस्कांदे ।यथाहरिःस्वमात्मानंवेदतद्वद्रमापिन ।ब्रह्माचकुतएवान्येविदंत्येवतथापित्वितिमाहात्म्ये॥४॥
स्थितोब्रह्मादिदेवेषुसाधिभूतेषुचेश्वरः । आत्मशब्दोदितनरेष्वपियस्माज्जनार्दनः । साध्यात्मःसाधिभूतश्च
साधिदैवेतिचोच्यतइत्यध्यात्मे॥५॥[६]सर्वदेवेष्वपिहरिःसर्वदेवनियामकः। नामवान्सर्वदेवानांसर्वपूजांतथात्य
सावितिच॥६॥ [१३]अविद्यया। भगवदिच्छया ॥१३॥ त्वयैवप्रकल्पिताः। विष्णोरंगसमुद्भूताविष्णोरंगानिदेव
ताः। उच्यंतेसर्ववेदेषुस्वरूपाभेदिनोपित्वितिच॥१४॥[१७]भृतामेवबिभर्तीशोह्यवतारतनुंसदा। बिभर्तीत्युच्यते
थापिमोहायव्यक्त्यपेक्षयेतितत्त्वनिर्णये॥१७॥[२२]प्रद्युम्नेचानिरुद्धेचबलदेवेचकेशवः। सन्निधानंविशेषेणकरोति
जगतांपतिः। तत्रकृष्णःस्वयंविष्णुःपरमानंदलक्षणः। पाराशर्यश्चभगवान्स्वयमेवजनार्दनइतिच ॥तत्तद्गत
स्यैव हरेस्तत्तन्नामानिचांजसा। औपचारिकनामानितदन्येषामितिस्थितिरितिशब्दनिर्णये ॥२२॥ इतिदश

मतात्पर्येअष्टत्रिंशोऽध्यायः॥३८॥ ॥ ५१ ॥ पूर्वार्धःसंपूर्णः ॥ ॥ ॥ ॥ ॥ ॥
श्रीवेदव्यासायनमः ॥ सर्वावताराभिन्नोपिसर्वशक्तिरपिस्वयं । पूज्यपूजकनीचोच्चंमोहनायदुरात्मनां । अ
खंडैकरसोविष्णुर्दर्शयेत्तत्रतत्रहीतिषाड्गुण्ये॥२१॥इतिदशमतात्पर्येद्विपंचाशोऽध्यायः॥५२॥बहूनिस्थानजा
तानिकृष्णस्यक्षीरसागरे। कानिचिन्मुक्तगम्यानिनामुक्तैस्त्रिदशैरपि। गंतुंशक्यान्यथान्यानिगम्यान्यन्यैर
पिक्वचित् । तत्रदेवाश्चयोगींद्राभक्ताश्चान्येजनार्दनं । गत्वार्चयंतिदेवेशंबलिस्तत्रागमत्क्वचित्। तस्यतत्रा
सुरावेशात्पापबुद्धिरजायत । तद्व्यक्त्यर्थंजगन्नाथःशिश्येसुप्तवदव्ययः । तदासपापयाबुद्ध्याकिरीटमहरत्प्र
भोः। तंजित्वागरुडस्तत्तुहृत्वागोमंतमाव्रजत्। तत्रकृष्णस्यशिरसिकिरीटममुचत्प्रभोरितिमाहात्म्ये ॥८॥
ब्रह्मस्थोब्रह्मनामासौरुद्रस्थोरुद्रनामकः । तयोरपिनियंतैकःस्वयमेवजनार्दनइतिस्कांदे ।१५। इतिदशमता
त्पर्येत्रिपंचाशोऽध्यायः ॥५३॥७०॥ नीतंच्छित्। भगवताप्राप्तभेदः ।९। इतिद०ता०एकसप्ततितमोध्यायः
॥७१॥ अम्मयाद्यभिमानिनोदेवाःउरुकालेनैवपुनंति । गुरूपदेशंप्रापयित्वा ।११। भेदकृतः अन्यथाज्ञानि
नः । विपश्चितस्तुप्रत्यक्षदर्शनादन्यथाज्ञानमेवापनयंति । प्राकृतैर्दृश्यमानंतुनद्रवंतीर्थमुच्यते । देवाश्चन

शिलामात्राःकिंतुतत्रातरस्थिताः । गुरूपदेशंतुविनानतेदृश्याःकथंचन । नज्ञायतेचतद्रूपमन्यथाज्ञानिनां चते । कोपाच्छापंप्रयच्छंतितस्माद्गुरुमुपाव्रजेत् । तस्मात्तीर्थानिदेवाश्चनित्यंविद्वत्सुसंस्थिताइतिगारुडे । भिन्नस्याभेदतोदृष्टिरपिभेददृशिर्मता । वस्तुयाथात्म्यतस्तस्यभिन्नत्वादितिसूरिभिः । अन्यथाज्ञानमेवातो भेदज्ञानंविनिंदितं । नविद्यमानभेदस्यदर्शनंनिंदितंक्वचित् । शिलादेवइतिज्ञानंदेवोस्मीतितुयादृशिः । उत्तमस्याधमत्वेननीचस्योच्चतयादृशिः । असमस्यसमत्वेनसमस्यासमदर्शनं । द्रवंतीर्थमितिज्ञानंदेहोहमि तियामतिः । असद्भार्यादिषुस्वीयदर्शनंचैवमादिकं । भेदज्ञानमितिप्रोक्तंयाचान्याप्यन्यथामतिः । तस्मा त्तदपहानायसंसेव्यागुरवोवराः । तत्रस्थादेवताःसर्वाःप्रीयंतेगुरुपूजया । नैवान्यथैषांप्रीतिःस्याद्गुरूक्तिम पहायतु । तस्मात्पूजाविशेषेणसतांकार्यानृणांसदा । भक्तिस्तुतारतम्येनविशिष्टेत्वधिकाभवेदितिस्कांदे । उत्तमाअपिदेवेशाअवरान्विदुषोनृणां । पूजार्थैसंप्रयच्छंतिपरोक्षत्वप्रियायतः । तेषुस्थित्वास्वयंपूजांगृह्ण त्यनुपमांसदा । ज्ञानानिचप्रयच्छंतितस्मादेवंविदासदा । पूजिताःस्युःसुरवराःसब्रह्माणःसकेशवाइतिवा मने ॥१२॥ हृदयं । प्रियं हृद्ययनात् ॥१९॥ इतिदशमतात्पर्येद्विसप्ततितमोध्यायः॥७२॥७४॥ ॥ भैवाने

वभवतःसदृशः ॥३८॥ नृपपदंनृपशब्दवाच्यमात्रं । नतुमुख्यतोनृपालकं । अंधंतमःप्रतिविधुतं ॥३९॥ तवे
हितमनुमेईहितानिभवंति ॥४०॥ यतःकिंचिन्मात्रंनास्तिकिंतुसर्वमेवास्ति ॥४१॥ फलात्मासुखात्मा । अत
एवपुरुषैरर्थ्यस्वरूपः । तेषांभवतश्चसमुदितःसमोगुणोनास्ति । यश्चकोपि । त्रय्यांचरतयोः । वेदोक्तक
र्तृत्वेनसुमतीनांत्रयीरतत्वं । प्रतिपाद्यत्वेनभवतः । सुखदुःखिनोः । केवलंपरिपूर्णसुखोभवान् । भगव
ज्ज्ञानपर्यंतंदुःखिनस्ते । अल्पसंपूर्णशक्तित्वादल्पपूर्णसुखत्वतः । अल्पसंपूर्णदर्शित्वान्नसाम्यंजीवकृष्ण
योरितिब्रह्मांडे । त्रय्यांचेतिचशब्दःस्मृतिष्वपीति ॥४२॥ अब्जोब्रह्मा । सोद्ध्यएवपुरुषंसमुद्धृत्यामूर्च्छयदि
तिश्रुतिः । अद्भ्यःसंभूतोहिरण्यगर्भइत्यष्टाविति च ॥४३॥ सन्मुखरितंसद्भिःप्रधानीकृतं । मर्त्याशिषोरुभयं
जनंप्रतिअर्थोयमितिविविक्तदृष्टिः ॥४६॥ कामरूपंत्वामविगणय्य॥ भ्रमःतिरस्त्रंयस्याःसाभ्रमतिः । तस्याः
भ्रमत्याः । विपरीतज्ञानिनांभक्षिकायाइत्यर्थः । श्रुतिभिःप्रमाणेन । अभ्रमाभ्रमतामत्रीयादेवैरपिपूज्यते ।
तस्यैनमोस्तुतेदेव्यैविष्णुवक्षस्थलाश्रयइतिनारदीये ॥४७॥ खरगोश्वबिडालवत्स्त्रीणांभृत्याः ॥४८॥ आनंद
श्मश्रुरानंदकेशआपादनखात्सर्वएवानंदः । सएषविष्णुरजोऽमृतोऽचलोब्रह्मयएवमेवंवेद । आनंदएवस

भवत्यानंदस्यसार्ष्टितांसलोकतासायुज्यमाप्नोतीतिमाध्यंदिनायनश्रुतिः ।४९। अनतिरिक्तदृष्टेः । भक्त्यनु
सार्यनुग्रहस्य । यएषदेवःपरोजरोऽमरस्तंवाएनमाहुर्भाक्तइति । भक्त्याहिसोनुगृह्णातिभक्त्यैवेदंवृणुतेऽश्रि
यंविरिंचंरुद्रमिंद्रमापिपीलिकं । नाभक्तंवृणुतेनाभक्तमनुगृह्णाति । यावान्वावसभक्तस्तावद्ध्येषवृणुतेताव
द्ध्येषोनुगृह्णाति । नाधिकंवृणुतेनाधिकमनुगृह्णाति । नावरंवृणुतेनावरमनुगृह्णाति । अथातोभक्तिमीमांसा
भवति । युवास्यात्साधुयुवाध्यायकः । आशिष्ठोद्रढिष्ठोबलिष्ठः । तस्येयंपृथिवीसर्वावित्तेनपूर्णास्यात् ।सएको
मानुषोभक्तोभवति तेयेशतंमानुषाभक्ता एतावान्मानुषोगंधर्वः । तेयेशतंमानुषागंधर्वाः एतावान्देवगं
धर्वः । तेयेशतंदेवगंधर्वाः एतावांश्चिरलोकःपैतृकः । तेयेशतंचिरलोकाःपैतृकाः। एतावांश्चिरलोकोदैविकः
। तेयेशतंचिरलोकादैविकाः । एतावत्यतात्विकदेवता । तायाःशतमतात्विक्योदेवताः । एतावतीतात्वि
कीदेवता । तायाःशतंतात्विक्योदेवताः । एतावान्पुरुहूतः । तेयेशतंपुरुहूताः एतावान्वावरुद्रः । तेये
शतंरुद्राः । एतावान्वावविरिंचः । तेयेशतंविरिंचाः एतावतीश्रीर्भक्त्याभवति । तद्यावतीवावभक्तिस्ता
वज्ज्ञानंभवति यावद्यावतज्ज्ञानंतावदानंदोमौक्तिकोथैषएवपरमानंदोयोसौहरिर्विश्वोविनोदोपनोदःसं

स्कारकोविकारकोधिकारकएतस्यैवानंदस्यान्यानिभूतानिमात्रामुपजीवंतीतिपौत्रायणश्रुतिः । मिलितौ वाएतौभगवतोयदनुग्रहश्चभक्तिश्चयोवानुग्रहीसभक्तोयोभक्तःसोनुग्रही । योवानुगृहीतोब्रह्मणासभक्तोयो भक्तस्तंवाब्रह्मानुगृह्णातियावान्वैब्रह्मणोनुग्रहस्तावतीभक्तिर्यावतीभक्तिस्तावान्वैब्रह्मणोनुग्रहः । प्रकृतौवैब्र ह्मणोनुग्रहःपरमस्तदवरोवावमहतितदवरोथरुद्रेतदवरःपुरुहूते । अथदेवर्षिपितृषुमनुष्येष्वितिधर्मश्रुतिः । तस्याएवरजउद्रेचनमुपात्तरजोतिमात्वत्वं । अथत्रिगुणाह्येवप्रकृतिरगुणोवावविष्णुःसयदाह्यरजारजोस्याउ द्धर्धयत्येषावावसृष्टिः । सयदाह्यसत्वःसत्वमुद्धर्धयत्येषावावस्थितिः । सयदाह्यतमास्तमोस्याउद्धर्धयत्येषवा वलयोनैनमेतेगुणाअभ्युपस्पृशंति । नैषएतान्गुणानभ्युपस्पृशत्यगुणोह्येषभवति । अत्रैषश्लोकोभवति । निर्गुणस्यगुणादानंप्रकृतेर्गुणवर्धनं । नकदाचिद्गुणैरेषस्पृश्यतेपरमोहिसइतिचाक्रायणश्रुतिः ॥५०॥ मातुः कन्याप्रदानवादेरतिर्यथानालीकंभवतिप्रायःतथातेवचःक्वचिदपिनालीकंभवत्येव ॥५१॥ यामसतींबुधोन बिभृयात् । याचतांबिभ्रद्दृष्टादृष्टच्युतोभवति । तस्याअपिपुंश्चल्यास्त्वयिमनोनवंनवमभ्येति । अमुग्धैव तुमुग्धेवत्वदुःखादुःखितेवच । श्रीर्दर्शयेद्धरिश्चैवनैवैतौमोहदुःखिनौ । मिथोपितादृग्वचनमाकारंचैवली

लया। दर्शयंतोनृणांमोहंकुर्यास्तांशास्त्रदर्शनादितिकापिलेये ॥५२॥ इतिदशमतात्पर्येपंचसप्ततितमोऽध्यायः
॥७५॥ अजितंजरासंधंभगवतएवश्रुत्वा। तथाहिसभापर्वणिपश्चाद्दिग्विजयोक्तेः। पूर्वाःकथाःपरंब्रूयुः
पराःपूर्वंतथैवच। मोहनार्थायदुष्टानांसर्वव्यत्यासइष्यते। विस्तारेतुयदुक्तंस्यात्तद्ग्राह्यमविरोधतः। संक्षेपो
क्तविरोधेतुगुणोक्तिश्चसतांयथेतिशब्दनिर्णये। जरासंधंनिहत्यैवपांडवैस्तुदिशोजिताः। प्रसादाद्वासुदेव
स्यराजसूयःक्रतुःकृतइतिमात्स्ये ॥१५॥ इतिदशमतात्पर्येअशीतितमोऽध्यायः ॥८०॥८५॥ ॥ जानन्सा
त्वकृतांमायामजानन्निवकेशवः। अन्ववर्ततकिंचित्तुततस्तामहरद्विभुः। एवमेवतुसर्वत्रपरमात्मासनात
नः। विद्धत्वग्रुधिरस्रावीकथंचिदजयत्परं। इत्यादिदर्शयेद्विष्णुर्मोहयन्माययाजगत्। चिदानंदघनस्या
स्यकुतोवेधादिसद्गतेरितिब्रह्मांडे। यदचरस्तन्वावावृधानोबलानींद्रप्रब्रुवाणोजनेषु। मायेत्सातेयानियुद्धा
न्याहुर्नाद्यशत्रुंननुपुराविवित्सेइत्याद्याचश्रुतिः ॥१८॥ इतिदशमतात्पर्येषडशीतितमोऽध्यायः ॥८६-९३॥
सनकाद्याःसमाःसर्वेतत्रश्रेष्ठःकुमारकः। मरुतश्चसमाःसर्वेसप्ततेषुप्रधानकाइतिऋक्संहितायां ॥१२॥ श्रीर्भू ॥८७३॥
मिरितिरूपाभ्यांप्रकृतिर्विष्णुनासह। शेतेश्रुतिस्वरूपेणस्तौतिब्रह्मलयेहरिं। एकाप्यनंतरूपासावाक्यभेदा

त्सरस्वती । अनादिनिधनानित्यास्तौतिनारायणंप्रभुमितिज्योतिःसंहितायां ॥ सर्वदाजयतोविष्णोर्जय
स्तस्यप्रकाशनं । श्रवणंदृष्टिरित्यादिप्रार्थ्यंतज्ज्ञापनंस्मृतं ॥ शृणोतिपश्यतिह्येषजयतीत्यादिकंस्वतः । ज
यपश्यशृणुष्वेतितत्तज्ज्ञापनमेवत्वितिविमलसंहितायां॥श्रीर्भूर्दुर्गेतियाभिन्नाप्रकृतिःशक्तिरुच्यते । विष्णोः
स्वरूपशक्तेःसाशक्यत्वाच्छक्तिरेवतु । नित्याव्यवहितत्वात्तुविशेषाच्छक्तिनामिका । यथैवपंकजंब्रह्मारुद्र
इत्यादिकंपदं । ताभिःशयानंपुरुषंसैवतुश्रुतिरूपिणी । अस्तौत्प्रकाशयात्मानंप्रकृतिंजीवबंधनं । जह्दिो
षैर्ययासर्वैर्गुणाजीवस्यसंवृताइतितंत्रभागवते । श्रीःपराप्रकृतिःप्रोक्ताब्रह्माणीत्ववराततः । उमाशचीमु
खास्तस्याअवराःसंप्रकीर्तिताः ॥ अथान्येप्रकृतीदुष्टेनृषुप्रातिस्विकंस्थिते । स्वगुणाच्छादिकात्वेकापरमा
च्छादिकापरा । स्वगुणाच्छादिकांहत्वापरमाच्छादिकांपरः । व्याघुट्यमोक्षपदवींददातिपुरुषोत्तमः । अजे
द्वेअपितेप्रोक्तेअनंताच्छादिनीहरेः।नविष्णुंछादयत्येषातज्ज्ञानंछादयेत्परं । जीवस्यैवनतत्रापिब्रह्मादेरस्ति
साक्कचित् । सर्वावरेतेप्रकृतीसततंदुःखितेपिच । पिशाचवत्समुद्दिष्टेपुरुषस्याधिकारिणः । प्रेरकास्तुतयो
र्देव्यइंदिराद्याःसुखात्मिकाइतिमहातत्त्वविवेके ॥१३॥ राजवज्जयशब्दाद्यानित्यबुद्धस्यबोधनं।विडंबमात्रंकै

वास्यनिद्राविद्यापतेर्हरेरितिकापिलेये ॥१४॥ दोषैर्दुःखाद्यैर्जीवगुणाआनंदाद्याःगृहीताआवृतायया सादोष गृहीतगुणा । त्वमसियदात्मनासमवरुद्धसमस्तभगः । यस्मात्त्वंस्वतएवानपगतपूर्णैश्वर्यादिगुणोसि । अत स्त्वदाभासस्यजीवस्यप्रकृतिगृहीतत्वादेवनैश्वर्याद्यागुणाअवभासंते । जगदोकसांश्रीब्रह्मादीनामप्यखिल शक्त्यवबोधक । क्वचित्सृष्टिकालेआत्मनाजीवेनप्रकृत्याचप्रवर्ततस्तेअनुचरेद्वेदोविधिनिषेधरूपेण । अन्यदा स्तुतिमात्रोनतुजीवानांप्रयोजकः । तस्मात्सृष्टिंकृत्वावेदैर्जीवान्बोधयित्वातत्स्थामजांजहि । जयजयहन हनप्रकृतिंद्रावयद्रावयभिंधिभिंधिदुःखंतमोरतिं । अजितपरमरमेशानवासुदेववैकुंठनारायणहृषीकेशान याहिजीवगुणाविसंवृताअधिसंवृताः । एषह्यानंदोऽजरोऽमरोऽधिशक्तिमांस्त्वदाभासस्त्वयातथाधिसंभा व्योयतःपरःपरमेश्वरःपरज्ञानःपरानंदःपरशक्तिःपरश्रीःपरयशाःपरप्रवृत्तिर्नित्यमेवत्वंस्वतोसित्वंरमायास्त्वं विरिंचस्यरुद्रेंद्रसूर्यसोममुखानामदभ्रशक्तिदोसिप्रवर्तकोसिनिवर्तकोस्यंतकोस्यनंतोसिसृजतोहितेश्रुतयो नुवर्ततेनैवासृजतः । कंवाविदधतेकंवानिषेधंतिस्तुतिमात्राएवतेस्युःप्रभोविभोसमास्स्वव्यास्वोत्तिष्ठप्रचरवि चरसंधिनुसंधिनुमातेक्षणोत्यगान्मातेक्षणोत्यगादितिशांडिल्यश्रुतिः । लयस्यत्वष्टमोभागःसृष्टिकालउदा

हृतः । तत्रैववेदसंचारोह्यन्यदास्तुतिमात्रकाइतिनारदीये । सृष्टिकालएवगुणवृत्तयः । सर्वदानिर्गुणेपरमेश्वरएववर्ततेश्रुतयइतिकथंचरंतिश्रुतयइत्यस्यपरिहारः । यत्प्राप्त्यर्थंयन्नियमाद्विधिनिषेधावर्ततेसत्वमित्यादिविधिनिषेधानांस्तुतिपरत्वं । विध्यादीनांनियंतायःपूज्यःप्राप्यश्चतद्धतां । इत्यादिस्तुतिरूपेणविध्यादिश्रुतयोपितु । हरिंवदंतिसर्वेषांतन्नामत्वादथापिचेतिश्रुतिनिर्णये । पृथक्श्रुतित्वान्नपूर्वापरसंबंधः । उपलक्षणत्वादनंतत्वाच्छ्रुतीनांसर्वश्रुत्यर्थोपबृंहितत्वाच्चैतेषांश्लोकानांनसर्वश्रुतीनांपृथगुक्तिः । सर्वश्रुत्यर्थसंपन्नान्श्लोकान्सत्यवतीसुतः । एकैकशाखास्तुत्यर्थान्जगौसर्वोपलक्षणान् । बबंधतान्भागवतेप्रतिश्लोकंपृथक्श्रुतीरितितंत्रभागवते ॥१।१५॥ अविकृततमोविषयेत्वमुदगाः । मूलप्रकृतेरपित्वमधिकोयतः । अतोबृहत्त्वेनतेस्वरूपमुपलब्धं । इतइदमधिकमितोपीदमधिकमितिसर्वाधिकत्वेनततोधिकाभावेनावशेषितत्वेन । द्वितीयार्थेतृतीयार्थेचतुर्थ्यर्थेचसप्तमी । पंचम्यर्थेचसंप्रोक्ताविषयेतिचतांविदुरितिमहाव्याकरणे । यतमसोधिकोभवइत्यर्थः । अतस्त्वंसर्वोत्तमइत्येवत्वयिमनोवचनाचरितानिदधतांनायथातानिभवंति । यथाभूमौपदंनिक्षिपामीतिप्रवर्ततोभूमेर्नान्यत्रभवति । उदकवृक्षादेर्भूम्यंतर्भावात् । आधारशक्तियुक्तत्वा

ङ्गरुदंचप्रकीर्तितं । सापिवाय्वंतरंगैवसह्याधारोखिलस्यचेतिमहासंहितायां । अतइतिहेत्वर्थेतथेत्यर्थेच ।
तस्माद्बृहत्त्वेनादधुरिति । अतःशब्दस्तुहेत्वर्थेतथेत्यर्थेचवर्तते । उभयार्थेचभवतियथाशब्दविदोविदुरिति
शब्दनिर्णये । उपलब्धंवेदेषु । बृहद्भिदृष्टमवशेषितंयत्स्वरूपमीशस्यतमोधिकस्य । सर्वाधिकत्वेनतमोहि
दुर्गाततस्तथैनंविबुधाययथागुरित्यौद्दालकायनश्रुतिः। अनिर्देश्यमप्येकदेशेननिर्दिष्टंभवतीत्युक्तंकथमयंथा
भवंतीत्यनेन । यथासर्वांभूमिमसंचरन्नप्येकदेशसंचारेणभूसंचारीभवतितथेति । निरपेक्षबृहत्त्वस्यज्ञाना
ज्ज्ञातंभवेत्परं । बृहत्त्वमेवतुगुणैःसर्वैरुद्दिश्यतेयतइतिमान्यसंहितायां ॥२।१६॥ अनन्याश्रयत्वात्स्वधामा
परमः । तेनविधुतादुःखाद्याआशयगुणाःउत्पत्त्याद्याःकालगुणाश्चयेषांतेमुक्तास्तापान्जहुरितिकिंपुनः ।
कथामृताब्धिमवगाह्यापिजहुरितियदितिहेत्वर्थइतिशब्दः । त्यजंतितापंयउतेभवत्कथाइतिस्मुक्ताःकि
मुतेस्वरूपगाः । परावरेशेशपदंभजंतःपरंपरानंदमनारतंतइतींद्रद्युम्नश्रुतिः ॥३।१७॥ चरमोत्तममध्यमा
दिषुपुरुषेषुयस्तवस्वरूपंप्रथयेत् । सपुरुषविधंत्वामन्वेति । ब्रह्मैवमुक्तिगेष्वादिःसुरास्तदवरोत्तमाः । मध्य
माऋषिगंधर्वाश्चरमामानुषोत्तमाइतिप्रभावल्यां । असक्तोदेहपुर्येषजीववद्देहगोपियत् । अथवापुंविधातृ

त्वात्पुंविधः पुरुषोत्तमइतिपुरुषोत्तमतंत्रे । अनिशमुच्छ्वसंत्यसुखोद्धरितास्तवरिपवोदृतिवत्तमसिप्रविष्टाः । तवगुणप्रथनाःपरिहायतमःपरियांतितेपदमजस्रमनंतसुखमितिपैंगिश्रुतिः॥४।१८॥ यर्हियस्माद्ब्रह्मवर्त्मनि। सूक्ष्मदृक्काच्छार्कराक्षनामानः । प्राणंप्रत्युरुगृणीहीतिवचनादुदरनामकंब्रह्मोपासते । यस्माच्चारुणयोहृद्यनाद्धृदयनामकं । तस्मादेवतत्समुपेत्यकृतांतमुखेनपतंति । इतरेपिपरिसरःप्राणःपद्धतिर्मार्गोयस्यसपरिसरपद्धतिः । कस्मिन्वहमुत्क्रांतउत्क्रांतोभविष्यामि कस्मिन्वाप्रतिष्ठितेप्रतिष्ठास्यामीति । सप्राणमसृजतेतिश्रुतिः । प्राणएवैनमनुप्रविशतिप्राणमितरादेवताःनप्राणादपरःपरमनुप्रविशतिप्राणएवैनमनुभुंक्ते प्राणमितरादेवताःनप्राणादपरःपरमनुभुंक्तेप्राणएवैनमन्वानंदीभवति । प्राणमितरादेवतानप्राणादपरः परमन्वानंदीभवतितस्मादाहुःप्राणःपद्धतिरितिहिरण्यनाभश्रुतिः । अतःपरिसरस्यपद्धतिरितिवा । ततोहृदः । नंदनपथाब्रह्मनाडीद्वाराशिरउदगाद्यत्परमंब्रह्मतत्समुपेत्य । पुनरिहैवहृदादिषुस्थितंयत् । तंप्रपदाभ्यांप्रापद्यतब्रह्मेमंपुरुषंयत्प्रपदाभ्यांप्रापद्यतब्रह्मेमंपुरुषंतस्मात्प्रपदेतस्मात्प्रपदेइत्याचक्षते । शफाः खुराइत्यन्येषांपशूनांतदूर्ध्वमुदसर्पत्ताऊरूअभवतामुरुगृणीहीत्यब्रवीत्तदुदरमभवदुर्वेवमेकुर्वित्यब्रवीत्तदुरो

भवदुदरंब्रह्मेतिशार्कराक्षाउपासतेहृदयंब्रह्मेत्यारुणयोब्रह्माहैवताईऊर्ध्वंत्वेवोदसर्पत्तच्छिरोश्रयतयच्छिरो श्रयततच्छिरोभवत्तच्छिरसःशिरस्त्वंताएताःशीर्षंछ्रियःश्रिताश्चक्षुःश्रोत्रंमनोवाक्प्राणःश्रयंतेस्मिन्श्रियोय एवमेतच्छिरसःशिरस्त्वंवेदेत्याद्याश्रुतिः ॥ ५।१९ ॥ विचित्रयोनिषुविशन्जीवःतद्वदज्ञानांत्रकास्मि । अनलोयथा । स्वकृतंदार्वादितदपनयनेगच्छंस्तत्स्थापनेतिष्ठन्ननुवर्तते । एवमेवस्वकृतशरीराद्यनुवर्त सेतद्गतःसन् । भरतमतोवायुनाज्ञातः । अन्यथाभवंतीष्वपियोनिषुअनन्यथाभूत्वैवबहुविधंतिष्ठंतंभ वंतंत्वत्समीपस्थबुद्धयोमहांतस्त्वाभिविपत्यमनसाधिगम्यमनसित्वांनयंति । रतत्वाद्भात्मकेविष्णावथ वापिजगद्भूतेः । भरतोवायुरुद्दिष्टोभारतीतत्सरस्वतीतिनामसंहितायां । योनिवेश्याह्वयोजीवस्त्वज्ञानांत द्वदेवतु । प्रकाशतेपरोदेवस्तेनयांत्यधरंतमः । सर्वहेतुतयैवेशंप्राणोजानातितत्त्वतः । तेनचासौपरोदेव स्तत्परंयातिकेशवं । इंधानानयनेत्वग्निर्यथैवानीयतेसह । एवंजीव(देह)गतोविष्णुःसहगच्छेन्निजेच्छया । अशाश्वतेषुदेहेषुशाश्वतंबहुधास्थितं । निचाय्यमनसासंतोजानंतिनिकटेच्छवइतितंत्रभागवते । योजीवव द्योनिषुभात्यनंतोमूढैस्तमोगैर्भरताधिगम्यः । निचाय्यतंशाश्वतमात्मसंस्थंतदिच्छवोत्मन्यदधुर्महांतमिति

कमठश्रुतिः ॥६।२०॥ सर्वपुरुषेषुसर्वधीषुचस्थित्वाश्रीब्रह्मादिषुप्रकर्षेणक्रमेणस्वात्मनैवसत्कृतंअंडाद्यंतर्ब
हिश्चअसच्चरणेपापाचारेस्थित्वापापाचारमपिस्वात्मनःपूजात्वेनैवकारयंतंत्वांवदंति । तस्याधोगत्यर्थं ।
तस्मात्सर्वंतवस्वकृतमेववदंति निषुसीदगणपतेगणेषुत्वामाहुर्विप्रतमंकवीनां । नऋतेत्वत्क्रियतेकिंचना
रेमहामर्कंमघवंचित्रमर्चेत्याद्याश्रुतिः । श्रीब्रह्मरुद्रपूर्वेषुक्रमात्स्थित्वाजनार्दनः । स्वात्मानमर्चयत्यद्धाबहि
रंतरसत्सुच । असतामधमाचारोहरिद्दष्ट्यात्मपूजनं । तस्याधोगमनायेतिश्रुतिराहाखिलक्रियमितितंत्र
भागवते । स्वकृतमित्यनन्यापेक्षयेति ॥७।२१॥ भवमध्यविनिःश्वसिताइतियत् । अतोविमृशंतिकवयो
निगमावपनंत्वां । चरितमहामृताब्धिपरिवर्तपरिश्रमणाइतियत् । अतोभवमध्यातेविनिःश्वसिताःमुक्ताः
निगमानामावपनंस्थानंत्वांविमृश्ययज्ञादिभिर्भजंतउपासते । निगमविषयेआयतवाङ्मनसः । निगमानां
ततोव्यक्तेस्ततएवफलप्रदत्वात्तद्विषयत्वाच्चनिगमावपनं । परिवर्तोमथनं । विमथ्यवेदाब्धिमतिश्रमेणज्ञा
त्वापरेशंमुनयोविमुक्ताः । मृशंतियज्ञैश्चजयंतिनित्यमुपासतेवेदफलप्रदंतमितिकुशिकश्रुतिः ॥८।२२॥
त्वत्प्राप्त्यनुसारित्वाच्छरीरंप्रियवत्पश्यंति । सर्वप्रियतमेसर्वादानादिकर्तरिचत्वयि । तथाहितेभिमुखाः ।

नकिंचिदभिवांछंतियतयःसुसदाश्रयाः । प्रेष्ठस्यपरमस्यास्यैप्रियवद्देहदृष्टयइतिविमदश्रुतिः ॥९।२३॥ अ
न्यथोपासनयात्महनोसुर्यान्नामलोकान्नित्यनिरतिशयदुःखान्निरस्तसमस्तसुखान्प्राप्नुवंति । तदेतन्नचरमं
तिअनुभवंतिच नित्यदुःखमितिचशब्देनोक्तं । असुर्यशब्देनचश्रुतौसुष्ठुरमणरूपत्वादसुरप्राप्यत्वाच्च । य
त्रानुशयनंकुर्वंतस्तमस्येवभ्रमंति । अभवाजन्मवर्जिताः । आत्महनइत्येषशब्दोभगवद्भक्तद्वेषिणामपि
समइतिदर्शयति । निभृतमोक्षहृदययोगयुजइत्यादि । येमुनयोहृद्ययनंभगवंतंनिभृतमोक्षहृदयेनवायुना
योगेनयुक्तानियमिताःसंतउपासतेतेषामरयोपितदेवतमोययुः परिपूर्णमोक्षार्थज्ञानंयस्यसनिभृतमोक्षहृद
यः । असुर्यानामतेलोकाअंधेनतमसावृताः । तांस्तेप्रेत्याभिगच्छंतियेकेचात्महनोजनाइतिश्रुतिः । नित्य
दुःखसुसंपूर्णंनिरस्तानंदमव्ययं । तमोयांत्यन्यथाज्ञानाद्द्वेषाद्वाहरिसंश्रयइतिप्राणसंहितायां । निभृतोमोक्ष
वित्प्राणस्तद्योगात्तत्प्रसादतः । जानंतिपरमंदेवंनान्यथातुकथंचनेतिभागवतसंहितायां ॥१०।२४॥ हेस्म
रणादेवस्वनुरक्ततत्तेस्वरूपंभवानेववेद । उरगेंद्रभोगदंडेविषक्तबुद्धेस्तेंघ्रिसरोजसुधां । वयमपिसमासमदृ
शः । सर्वमाहात्म्यस्यवेदैरपिवक्तुमशक्यत्वादसमदृशः। वेदागम्यमाहात्म्यस्यापिवेदैरेवगम्यत्वात्समदृशः।

अतःकोन्योवक्तुंवेद । कोह्यस्मांस्त्वांचर्तेऽपेतजन्मलयःयतउदगादुत्पत्तिमानेवऋषिर्ब्रह्मा । प्राप्तपदाअप्राप्त
पदाश्चदेवगणाः । त्वंवेत्थनापरस्तेस्वरूपंननित्यवाङ्नागभोगप्रियस्य । कुतोब्रह्माप्राप्तलोकाश्चदेवास्तथा
प्राप्ताजनिमंतोयतोस्मादितिसंकृतिश्रुतिः।महिम्नःसर्वशोनुक्तेर्वेदाश्चासमदर्शिनः।तस्यापिवेदगम्यत्वात्तथैव
समदर्शिनइतितंत्रभागवते ॥११।२५॥ शास्त्रमपकृष्यप्रलयेशास्त्रस्यप्रवृत्त्यभावात् । असतःसूक्ष्मरूपात्स
तःस्थूलरूपस्यपरमेश्वरपर्यंतंयथाक्रमंजन्मम्रृतिंचसर्वस्मात्परमात्मनिभेदंचविपणंफलापेक्षास्मृतेर्येस्मरंति ।
तेषांध्वनिमुपविश । आरुवतोवायोःप्रसादात्तथास्मरंति । नासदासीन्नोसदासीत्तदानींनासीद्रजोनोव्योमा
परोयत् । किमावरीवःकुहकस्यशर्मन्नंभःकिमासीद्गहनंगभीरमित्यादिश्रुतिः । सूक्ष्माणिमहदादीनिस्थूला
न्यंडादिकानिच । उभयंत्वग्निरापश्चनाकिंचित्प्रलयेभवदितिप्रकाशसंहितायां । सर्ववेदादिरूपेणप्राणस्या
रुवतःसदा । प्रसादाद्येविजानंतिसूक्ष्मात्स्थूलजनिंक्रमात् । म्रृतिंचसर्वजीवादेरीशस्यव्यतिरिक्ततां । जा
नंतियेनिराकांक्षास्तेषांवाचिजनार्दनइतितंत्रभागवते ॥१२।२६॥ अबोधकृतात्रिगुणबद्धता । यस्माज्जी
वस्यापितस्मात्तदवबोधरसेत्वयिसानविद्यते । त्रिगुणात्मकंमनस्तवापिविद्यतइत्यसतांपक्षः । मनुजानामा

दयोदेवास्त्रिगुणातीतत्वाद्भवतोभवानेवपरमानंदः । त्वदन्यत्सर्वंजीवजातमार्तमित्येवविमृशंति । सत्वा
दिजंदेहमथोमनश्चसत्वादिबद्धंचवदंत्यसंतः । परंपुमांसंनसुरास्तुतैर्हिजीवाःसुदृष्टाःपरमार्तरूपाइतिसूक
रायणश्रुतिः । त्रैगुण्यदेहेंद्रियकमासुराजानतेहरिं । त्रिगुणातीतमीशेशमतःपूर्णसुखंसुराः । जानंतिगु
णबद्धत्वाज्जीवानार्तांश्चकृत्स्नशः । अनार्तस्यप्रसादेनतेषामार्तिविनाशनमितिचैतन्यविवेके ॥१३।२७॥ य
थाकनकस्यविविधकृतंकुंडलादिकंकनकंविनापरित्यक्तुंनशक्यतेतथास्वकृतंजगदनुप्रविष्टोभगवान्मूलरूपं
विनापरित्यक्तुंनशक्यः । आत्मतयाएकरूपत्वात् । रसितंआत्मनाप्रकाशितंजगत्प्रविष्टस्तस्मात्सर्वगतो
विष्णुरितिज्ञातव्यमित्यर्थः । इत्थंयेज्ञात्वापरिचरंतितवस्वरूपंतेऋतात्मकब्रह्मप्राप्तिविरुद्धत्वान्निर्ऋत्याख्यसं
सारस्यशिरःस्फुटंपदाक्रमंति।सर्वगंयेप्रपश्यंतिब्रह्मानंदमजाक्षरं।एकमेवाद्वयंनित्यंनिर्ऋतेस्तेशिरोगताइति
सौकरायणश्रुतिः । यथैवकुंडलंत्यक्त्वानादातुंकनकांशकं । तस्यैवतदवस्थत्वात्केवलाभेदतःस्फुटं । एवं
सुरासुरनरेष्वास्थितोभगवान्हरिः । नैवभेदेनमंतव्योजीवभेदेतुसत्यपि । येतथाभिन्नमीशेशंपश्यंतिपरम
र्षयः । ऋतप्राप्तिविरुद्धत्वात्संसारंनिर्ऋतेःशिरः । अगणय्यपदाक्रम्यवैष्णवंनिलयंययुरितिगारुडे ॥१४।२८॥

वयतिगाइवयःसुरादिकांस्तन्मनसोजगदपुनञ्छुचयोनपरे । सएकईशःपरिपूर्णशक्तिर्बलिंहराइतरेस्युः सुराःसुखिनइत्यारुणिश्रुतिः । विष्णुनादेवताबद्धाविष्णवेचबलिप्रदाः । विष्णुरासांपतिर्नित्यंनविष्णोर्बं धकःक्वचिदितिवामने ॥ १५ ॥ २९ ॥ स्थिरचरजातयोयेतेऽनिमित्तयुजःस्युः । भगवन्नियमादेवसंसार युजःस्युः । विरहेमुक्तौ । यदिपरस्यसकाशान्मुनिरेवेत्युदीक्षयेत्सपरः । विमुक्ताःसंतोयेनपरेणतस्यविमु क्तसतः । नान्यःपंथाअयनायविद्यतइतिश्रुतेर्मुक्तिस्तस्मादेवेत्यंगीकर्तव्यं । अतोबंधोपिततएवेत्यर्थः । सतांविमुक्तिदाद्विष्णोर्मुक्तिर्यद्यभ्युपेयते । बंधोपिततएवस्याद्यस्मादेकस्तयोःपतिरितिस्कांदे । आत्मानं मुक्तिदंविष्णुर्यदिपुंसउदीक्षयेत् । सुप्रसन्नस्तदाबंधस्ततएवेतिसेत्स्यतीतिब्राह्मे । खंडाधीशाःसार्वभौमस्य यद्वद्ब्रह्मेशाद्याःकुर्वतेतेनुशास्तिं । त्वंमुक्तिदोबंधदोतोमतोनस्त्वंज्ञानदोज्ञानदश्चासिविष्णवित्युदारशांडि ल्यश्रुतिः ॥१६॥३०॥ यस्यपरमस्यतेकश्चिदपरःस्वतंत्रोनास्ति । अनपरस्यप्राणोत्तमस्य । अत्रजीवसमुदाये । व्ययतःविशेषेणायतःसर्वज्ञस्य । यथाप्राणस्यनापरःस्वतंत्रस्तद्वत्प्राणःश्रीरन्योवात्वांविनास्वतंत्रोनास्ति । हेशून्यतुल समानवर्जित । सर्वंसंदधतस्ते । यदिततःप्राणात्तनुभृतोजीवाध्रुवास्तर्ह्यपरिमिताःसंतिहेसर्व पूर्ण ।

एकमेवाद्वितीयं । एकंपरंज्योतिरनन्यमद्वयमित्यादिनियमोजीवानांशास्यतानेत्यत्रनहि । किंतुस्वगत
भेदस्येश्वरांतरस्यास्वतंत्रस्यनिषेधे । अतोन्यदार्तं । नेहनानास्तिकिंचन । नतत्समश्चाभ्यधिकश्चदृश्य
तइत्यादितथाब्रुवतेच । तवस्वतंत्रोनापरोयद्वदत्रप्राणान्नान्यस्तुल्यशून्यस्यसंधिन् । प्राणाधीनाअमिताजी
वसंघाःप्राणोवशेतेप्रकृतिश्चभूमन्निितिमहाशालीनश्रुतिः । स्वतंत्रोनापरःकश्चिद्विष्णोःप्राणमृतेक्वचित् ।
यथाप्राणात्परोनास्तिस्वतंत्रोजगतिक्वचित् । तथाप्राणोरमाचैवनविष्णोःपृथगीश्वरौ । यद्युच्यंतेप्राणतंत्रा
बहवःपुरुषाइति । सत्यमेवह्यसंख्यातानियम्यनिषेधकाः । एकाद्वितीयश्रुतयःकिंत्वीशांतरवारकाः ।
तथास्वगतभेदस्यतदतंत्रनिषेधकाइतिब्रह्मांडे । स्वरूपमस्मरत्कृष्णएकंस्वस्मिन्नभेदतः । अतत्तंत्रस्यराहि
त्यादनन्यंसदृशोज्झितेः । अद्वयंनित्यनिर्वृत्याभावनिर्वृतिमीश्वरमितितंत्रभागवते । अधिकस्यसमस्तापि
स्वतंत्रस्यचवर्जनात् । एकएवाद्वितीयोसौनशास्यजनवर्जनादितिकौर्मे ॥१७।२१॥ अनंतमदुष्टतयानुजा
नताचार्येणसंततताद्भवात्परिमुच्यते । अबद्धप्रकृतिपरेशौविनान्योनविद्यते । यतस्तयोरेवोद्भवोनघटते ।
ततस्तयोरजयोरसुभृतउद्भवंति । देशतःकालतश्चयत्रपरमस्तत्रप्रकृतिर्यत्रप्रकृतिस्तत्रपरमइत्युभययुजोः । ॥८७९॥

मुच्यतेतत्त्वसंबुद्धादाचार्यात्पुरुषोभवात् । एतावेवस्वतोऽबद्धौपरमःप्रकृतिस्तथेतिकलापश्रुतिः । सम्यग्ज्ञानवदाचार्यान्मुच्यतेपुरुषोभवात् । द्वावेवनित्यमुक्तौतुप्रकृतिःपरमस्तथेतिवामने । देशतःकालतश्चैवसमव्याप्तावुभावजौ । ताभ्यामुभययोगाभ्यांजायंतेपुरुषाःपरइतिकौंठरव्यश्रुतिः ॥१८।३२॥ हेततओतइमेविबुधनामार्थभूतागुणास्त्वयिनिलिल्युः । परमेमृतार्णवेमधुन्यशेषरसाइव । अतःपूर्णगुणत्वाद्भवतोनृणांमध्येसुधियः । तवमाययात्वदिच्छयैव । त्वयिकुशलंविधातुंप्रभवः । तत्रकुशलंभेदएव । सर्वस्मादन्योविशिष्टगुणःपरइतिदर्शनं । स्वगतयासुष्ठन्यैरनवगतया । तथात्वत्प्रसादादनुवर्तिनाकथंमुहुर्भवभयंभ्रुकुटीसृजति । योनःपिताजनितायोविधाताधामानिवेदभुवनानिविश्वा । योदेवानांनामधाएकएवतंसंप्रश्नंभुवनायंत्यन्या । तआयजंतद्रविणंसमस्माऋषयःपूर्वेजरितारोनभूना । असूर्तेसूर्तेरजसिनिषत्तेयेभूतानिसमकृण्वन्निमानिइत्यादिश्रुतिः । ब्रह्मेशेंद्रादिसन्नाम्नांयेर्थभूतागुणामताः । पूर्तीशितृत्वद्रष्टृत्वप्रमुखास्तेहरेःसदा । अतस्तुसर्वनामासौसर्वकर्ताचकेशवइतिपाद्मे । आनंदत्वादनामासावुत्कृष्टत्वादुनामकः । एतन्नामद्वयंविष्णोर्ज्ञात्वापापैःप्रमुच्यतइतिस्कांदे । अन्याविज्ञातयाविष्णोःशक्त्यैवकुशलंजनाः । कुर्वंति

कुशलेषूच्चैर्भेददर्शनमेवतु । पूर्णानंदादिसंपत्तिंविष्णोर्ज्ञात्वेतरेषुच । तदपेक्ष्यविष्णुण्मात्रत्वज्ञानंतद्भेद
दर्शनं । अनाद्यनंतभेदोयंस्वभावःपरजीवयोः । स्वतोवापरतोवापिनकदाचित्प्रणश्यति । एवंज्ञानवता
विष्णुर्बहुजन्मनदास्यति । अनुवृत्तिर्यद्यनल्पासहिसर्वेश्वरःप्रभुरितिप्रमाणसंहितायां । यःपिताजनिताचै
वकल्पकोनित्यपोषकः । प्रापकःसर्वदेवानांपदानांपुरुषोत्तमः । सर्वदेवाभिधावाच्योभूतभव्यभवत्प्रभुः ।
विचार्यसर्ववेदैश्चब्रह्माद्याश्चयजंतिच । त्रिगुणात्मकस्यस्रष्टारस्तथापिनयजंतितं । यतःपूर्णशक्तयैवतेषां
यजनमिष्यते । अतःसर्वेश्वरोविष्णुरेकएवमहागुणइतिमहासंहितायां ॥१९।३३॥ भवच्चरणेषुसुष्टुजात
स्थानाः उत्तमयोग्यतायुक्ताःहृषीकाण्येवमहत्तुरगाः । वायुरेवोदात्तः । रथोपरिस्वीकरणादुदात्तःसारथि
र्मतइतिव्यासनिरुक्ते। जयोविष्णोश्चवायोश्चभक्त्यातत्प्रीतिसाधनं।जगदीशयोःकुतोह्येनोःसर्वशक्त्योर्बला
ज्जयइतिपवनविजये। तेषांतानिसाधनानिसुखस्यापिशांतिमतिपूर्णसुखेत्वयिनसंति। गुर्वभावात् । विभ
वेजीवन्मुक्तेगुरावुद्यतिउपदिशतिसर्वरसेपरमात्मनिश्रयतएव । यस्यदेवेपराभक्तिर्यथादेवेतथागुरौ । त
स्यैतेकथिताह्यर्थाःप्रकाशंतेमहात्मनइतिश्वेताश्वतरश्रुतिः । देवाअपिसुयोगाब्ध्यायतंतःसर्वसाधनैः ।

पुत्रदारादिभिःसार्धंनाश्वसंतीहसंसृतौ । गुरोरनुग्रहमृतेसाधनंनहरेःप्रियं । गुरूपदेशात्तुपरंप्राप्नोत्येवनसंशयः । षण्णवत्यंगुलोयस्तुतालास्योदशतालकः । दशप्रादेशकःसप्तपादोहस्तचतुष्टयः । कलमत्रयांगुलश्चैववाग्मीसंदेहवर्जितः । वासुदेवैकशरणोगुरुरित्युच्यतेबुधैः । गुरुलक्षणसंपूर्णःसाक्षादेवचतुर्मुखः । ततःशेषेंद्रवींद्राद्याःक्रमेणैवप्रकीर्तिताइतिगुरुविवेके । देवायोग्यतयाजाताविष्णुपादांबुजाश्रयाः । तथापिसाधनैस्तेषांतत्प्राप्तिर्गुर्वनुग्रहादितितत्वोद्योगे ॥२०।३४॥२१।३५॥ इतिलोकेपरिदृश्यमानप्रकारेणचरतांविजनेमोक्षविषयेकःसुखयति । सुष्ठुनिरस्तभगेअतस्त्वामेवसंतंज्ञात्वाभवतःपदांबुजंहृदानिविशंति । हरावसथमहंकारंनकुर्वंति । ब्रह्माज्ञात्वेतिलोकप्रवृत्तिंप्रवर्ततांकोनुमोक्षंददाति । अतोब्रह्मोपासतेसाधुधीरानाहंभावस्तेषुरुद्राधिवासइतिमहारवश्रुतिः । महाभाग्यंतुकैवल्यमज्ञानांकःप्रदास्यति । अतःसंतोविजानंतिहरिंतेत्वनहंकृताइतिस्कांदे ॥२२।३६॥ इदमप्यपालकं ईश्वरवर्जितं । नमत्तोन्यईश्वरश्चेतनत्वादित्यादितर्कैर्वदंतिचेत् । अथोइत्यनेनतदपिवचनंभगवत्प्रेरणयैवेत्युक्तं । तस्मादथोअथेत्येतद्धेत्वर्थंसमुदीरितमितिशब्दनिर्णये । असत्यमप्रतिष्ठंतेजगदाहुरनीश्वरमितिच । वेदोक्तोजीवव्यतिरिक्तेश्वरोनतर्कैरपनेतुंशक्यः ।

यतस्तर्काव्यभिचारिणः । मृषैवकचित्तर्कः ॥ इष्टसाधनादितर्कस्तुव्यभिचारी । शरीरसंमितआत्मेत्यादिद
र्शनपरिकल्पितस्तुमृषैव । ततोभयबुद्धीनांबुद्धिव्यवहितयेभवंति । नतुधीराणां । विकल्पःवेदविरुद्धकल्प
ना । अंधपरंपरयैवान्वहमुषितः । यस्माद्भारत्यपिभ्रमतिबहुधावक्ति । बहूक्तिरन्यथाज्ञप्तिःपरिवृत्तिश्चक
थ्यते । भ्रमइत्येवविद्वद्भिस्तथाचंक्रमणंक्वचिदितिशब्दनिर्णये । उरुवृत्तिभिरूढजवाअनंतगुणाकरत्वाद्भग
वतोबहुगुणकर्माणिवक्तुंवेगवतीवेदवाक् । अतोवेदेपिबहुधावचनात्तदर्थनिर्णयाभावाद्विरुद्धकल्पनायुक्ता
ऽसुराणां । यस्माद्गर्भस्थस्यजीवस्येश्वरत्वंनास्तिअतोनिधनानंतरंचनरकादिगमनान्नविद्यते । अनिमित्त
कंभगवन्निमित्तमेव । तस्यांतराभातिमृषात्वयिजीवे । नतुवस्तुतस्त्वंजीवः । एकरसेप्रधानसारे । नचजी
वोवस्तुतःसर्वोत्तमसारः । मृषैवतथामन्यंते । अतोभ्रांत्याद्रविणवानभिजन्मवानित्यादिविरुद्धकल्पनापथैरु
पगीयते । यतोभवानेवद्रविणवान् । यतश्चतपोदमाद्याअभिजन्मकारणभूतागुणाश्चभवतएव । अतोमि
ध्यामनोविलासंजीवेश्वरत्वंबुधाअवयंति । गुणाएवाभिजात्याख्यास्तद्वानेवाभिजात्यवान् । अतोभिजा
त्यवान्विष्णुस्तदन्येतूपचारतइतिशब्दनिर्णये । येजीवमीशंप्रवदंतितर्कैस्तन्नेश्वरोवचनंसंदधाति । नासी

दादौमरणेनोभविष्यन्मृषाततोहीशितृत्वंस्वपेष्विवतिविपरीतश्रुतिः। येजगत्प्रवदंत्यज्ञाजीवादन्येशवर्जितं। तेषामपितुतांवाचमीशएवददात्यजः । नचतर्कैर्भवेदीशोजीवोवेदविरोधतः । व्यभिचारिणोयतस्तर्काइष्ट साधनगाअपि। क्वचित्क्वचिन्मृषातर्काःकणादादिप्रदर्शिताः। तत्त्वनिर्णयभीरूणांव्यवधानकरास्ततः । नै वतुस्थिरबुद्धीनांकुर्युस्तेबुद्धिचालनं पारंपर्येणचाज्ञानामुक्त्यालोकेषुविस्तृतं । पठ्यतेचाप्यहरहर्नतुविद्व न्मुखोद्गतं । अनंतगुणकर्मत्वादीशस्योक्तौसुवेगिता । वक्त्यभेदमिवाज्ञानांनाभेदंकुत्रचिच्छ्रुतिः । एक आत्माद्वयेत्यादिपदानामर्थनिर्णये । नवर्ततेश्रुतिर्यस्माद्गुणांतरकुतूहलात् । अथवामोहनार्थायसुरारीणा मनर्हतः । कुत्रचिन्निर्णयवचःसुराणामर्थसिद्धये । नहीशितृत्वंगर्भस्थेनाप्यसौनिरयोपगे । मृषातईश्वरा भेदःसर्वोत्कर्षश्चजीवगः । धनवत्त्वंचकर्तृत्वंबलवत्त्वंचविष्णवि । अतोजीवेश्वराभेदंमिथ्येतिकवयोविदुरि तितंत्रभागवते । जीवस्यजगतश्चैवयदीशाभेदतोवचः । अतात्त्विकंजगच्चेतिविष्णवधीनत्ववाचकं । अभे दस्तुकुतस्तस्यपरमस्यावरेणतु । मिथ्यात्वंचकुतस्तस्यजगतोनित्यवर्तनादितिवाराहे ॥२३।३७॥२४।३८॥ श्रुतिषुतवानुगीतान्गुणान्जुषन्पुमानुदगादस्मात्संसारात्तवसरूपतांचभजति । तदनुगुणस्मरणमनुगुणां

श्रजुषन्नितिचशब्दः कर्मणिचेत्यस्मिन्नर्थे । यच्चायंपुमानात्तभगांत्वयापहृतभगांप्रातिस्विकींपूर्वोक्तांद्विविधां कष्टांप्रकृतिंजहाति जिहातिहंतिचतदपित्वमेवजहासिजिहासिच । उतेतित्यागवधयोःसमुच्चयार्थे । जिहातिरावणंसंख्येराघवःपरमास्त्रविदितिस्कांदे । स्वातंत्र्यात्प्रकृतित्यागकर्तानारायणःपरः । यद्यप्येषाजीवसंस्थाहंताच्चभगवान्प्रभुरितिगारुडे । महसिमहीयसेपूजयसिपूज्यसेचात्मनैव । स्मरन्ब्रह्मगुणान्नित्यंमुक्तोब्रह्मसरूपतां । दुर्भगांप्रकृतिंत्यक्त्वाहत्वाचान्यांदुरन्वयां । यातितच्चपरेशानात्सहिपूज्योथपूजकः । तस्यैकस्यस्वतंत्रत्वात्सचानंतगुणोविभुरितिकौशिकश्रुतिः ॥२५।३९॥ अज्ञानामनवगतांतकादनधिरूढब्रह्मपदात् । सयथाकामोभवतितत्क्रतुर्भवतियत्क्रतुर्भवतितत्कर्मकुरुतेयत्कर्मकुरुतेतदभिसंपद्यतइतितुकामयमानोयोकामोनिष्काम आप्तकाम आत्मकामोनतस्यप्राणाउत्क्रामंतिब्रह्मैवसन्ब्रह्माप्येतीतिश्रुतिः । निषिद्धकामयुक्तानामसतांतुविशेषतः । दुर्ज्ञेयोभगवान्विष्णुर्हृदिस्थोस्मृतहारवत् । अकामत्वेनभजतांददात्यभयमंतकात् । पूर्णानंदादितेश्चंतिपूर्णानंदादिकाःस्वतः । ब्रह्मणोब्रह्मसंपत्तिमतआहश्रुतिःस्फुटं । नपरब्रह्मतावाप्तिर्नतेविष्णवितिश्रुतेः । परमब्रह्मताचैषांब्रह्मलोकात्परागतिः । नपरब्रह्मरूपत्वमेतमेवेतिचश्रुतेः ।

अन्येषांम्रियमाणानांप्राणाभागतएवतु । देवतास्वेकतांयांतिभागतोनुव्रजंतितं । ज्ञानिनांमुच्यमानानां नैवयांतिस्मदेवताः । तेनैवसहसंयांतिततोनुत्क्रमणश्रुतिरितिब्रह्मतर्के । देवाश्चऋषयश्चैवसुभक्त्याकामिनोपितु । मुच्यंतेनियमादेवपश्यंतिचहरिंनन्वितिस्कांदे ॥२६।४०॥ परमेश्वरस्यावगमात्तदवगमाश्रीः । तयाचगम्यत्वादर्थःपरमस्तेनबद्धत्वात्सिताश्रीर्गुणात्मिकाच । सगिरः । वाक्पूर्वकाणींद्रियाणिश्रियोविष्णोश्चनानुकूल्येनययुः । अनुययुश्चहंसकुलगीतपरंपरया । यथातुषावृतानांतंडुलानांरजस्पृष्टिर्नास्तिएवंरजोरूपान्मनुष्यान्नवांतिश्रुतयः । वयसासहमहताकालेनापि । अतस्त्वयिसफलंपतंतिनपतंतिचविधिनिषेधरूपेणबंधनात्मिकाः । जानातिप्रकृतिर्विष्णुंज्ञेयोविष्णुस्तुनिर्गुणः । तावुभौनविजानंतिऋतेब्रह्मपरंपरामितिमहोपनिषदि । अन्येसर्वेश्रियाबद्धाःश्रीर्बद्धाविष्णुनैवतु । बंधश्चविष्णुतंत्रत्वंमुक्तानांचश्रियस्तथा । अमुक्तानांतुबद्धत्वंजन्ममृत्यादिदुःखिता । हेयोबंधश्चसैवस्यान्नतुस्वोच्चवशोस्थितिः । गुणात्मिकाचसादेवीनिर्गुणःपुरुषोत्तमः । सैवविष्णुंविजानातिज्ञेयोज्ञाताचकेशवः । नतावन्येविजानंतिविनाहंसपरंपरां । तथापिनैवजानंतिमानुषाअसुरास्तथा । निष्फलैवासुरेतस्माच्छ्रुतिर्बंधायकेवलं । निषेधविध्युक्त

मणात्तमस्येवविनिक्षिपेत्। निष्फलासफलाचैवमानुषाणांतुमध्यतः। सफलैवतुदेवानांनियतंमुक्तिदायिनी।
श्रीगरुडउवाच । केहंसाःकःपरोहंसःकेचपारावतागणाः । केचतित्तिरयस्तत्रकेशुकाःकेचवायसाः । श्री
भगवानुवाच । परोहंसोहमेवैकोहंसाब्रह्माणएवतु । पारावतादेवतास्तुमुनयस्तित्तिराःस्मृताः। मानुषास्तु
शुकाःप्रोक्ताआसुराश्चैववायसाः । प्राप्यंप्राप्तंयतोनित्यंपूर्णसर्वोत्तमंमया। अतःपरमहंसोहंमदनंतरमेवतु।
यतःप्राप्तमिवाशेषंसर्वजीवोत्तमंशुभं।अतोब्रह्मपदेयोग्याजीवाहंसाःप्रकीर्तिताः। तेषांपरंपराप्राप्तंयैर्ज्ञानंनि
यमेनतु।तेमुच्यंतेनैवचान्येगुरुर्ब्रह्मायतोनृणां। दैवतंत्वहमेवैकोमामवित्त्वानमुच्यते। परंप्रतियतोनीचाब्रह्म
णःसर्वदेवताः। पारावतास्ततःप्रोक्तास्तैस्तीर्णासंसृतिर्यतः। तित्तिरामुनयस्तस्मात्कासुखत्वात्तुमानुषाः। शु
काइतिसमुद्दिष्टावयोमात्रसुखत्वतः। वयसोंतेतुदुःखित्वादसुरावायसाःस्मृताः। एवंपंचविधाजीवाःषष्ठो
हंपरमेश्वरः। नमत्समोधिकोवापिकश्चिदस्तिद्विजोत्तमेतिगारुडे ॥२७४१॥ व्योमायनमहात्मभिः[४३] ब्रह्मा ॥८८३॥
श्रयेष्वृत्तमैः॥४३॥ कथाःकथयतीशस्यव्यासस्यांतेसनारदः। स्तुत्यर्थंतस्यदेवस्यज्ञापनायनतुक्वचित्। पूर्ण
ज्ञानामृतस्यास्यनतुज्ञप्तिःपराद्भवेत् ॥४८॥ ऋषिरूपीयतोविष्णुःस्वयमेवजनैःश्रुतइतिब्राह्मे। ऋषिणा ऋषि

रूपेण ॥५०॥इतिश्रीमद्भागवतदशमस्कन्धतात्पर्येश्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितेचतुर्नवतित
मोऽध्यायः ॥९४॥ * गात्रान्तराणिपिधातव्येभ्योन्यान्यपि । येषांपिधानेनक्लेशोभवत्यात्मनः । निजभर्तुर
प्यपिदधुः । निर्लज्जाइत्यकामोभवत्यसाविति भयात् । नस्नेहभंगोदेव्यास्तुनभयंकेशवस्यतु । स्नेहभीतइवा
थापिनोचेरुग्मिवधेहरिरितिब्रह्मांडे । सर्वोत्तमोपिभगवान्गुणभावंजनार्दनः । दर्शयेद्वसुदेवादेरात्मनोजी
वतामपि । अज्ञाशक्त्यादिभावस्तुकुतस्तस्याखिलेशितुः । कुतश्चजीवतातस्यप्रधानपुरुषेशितुः । कुतोदो
षास्सर्वगुणपूर्णस्यानंदवारिधेरितिवामने । दशमस्कंधःसंपूर्णः ॥ ॥ ॥
श्रीवेदव्यासायनमः॥[६]आत्मनोभजनेबुद्धिमुत्पाद्यफलदाःसुराः।उत्तमानांजनानांतुनिकृष्टानांविपर्ययः।शुभा
शुभफलानांतुकर्मणांविबुधाःसदा।प्रवर्तकायथायोग्यमृषयःकरुणाःसदा ।सुखमिच्छंतिभूतानांप्रायोदुःखा
सहानृणां । तथापितेभ्यःप्रवरादेवाएवहरेःप्रियाइत्युद्दामसंहितायां ॥६॥ [३]आत्मनोदेहगेहादिद्वयशब्देनभण्य

* स्कंधार्थेप्रमाणंसर्वोत्तमइत्यादि । सिंहावलोकननयेनरामा(अ० ७६ श्लो० ६)इतिश्लोकस्यगात्रांतराणीत्यादि निहत (अ० ७६ श्लो० ५०)इत्य स्यनस्नेहभंगइत्यादितात्पर्यंप्रवृत्तमित्यार्याः ।

ते ।अविद्यमानंजीवस्यप्रतिभातितदीयवत्।जाग्रद्वत्तुयथास्वप्नःप्रतिभातिमनोरथः । विद्यमानवदेवैतद्देहादी
शवशेस्थितं।विभातिस्ववशत्वेनसैषासंसृतिरुच्यते । तस्मात्तद्विषयंत्यक्त्वामनोविष्णौनिवेशयेदितिहरिवंशे
षु॥३८॥ [40] केचिदुन्मादवद्भक्ताबाह्यलिंगप्रदर्शकाः।केचिदांतरभक्ताःस्युःकेचिच्चैवोभयात्मकाः ।मुखप्रसादा
द्धार्द्याच्चभक्तिर्ज्ञेयानचान्यतइतिवाराहे ॥४०॥ सर्वंहरेर्वशत्वेनशरीरंतस्यभण्यते। अनन्याधिपतित्वाच्चतद
नन्यमुदीर्यते । नचाप्यभेदोजगताविष्णोःपूर्णगुणस्यत्वितिहरिवंशेषु॥४१॥ [45] पूर्णत्वादात्मशब्दोक्तःकश्चित्स
र्वनरोत्तमः । सोपिनारायणोनान्यःसचसर्वेषुसंस्थितः । तद्वशाइतरेसर्वेश्रीब्रह्मेशपुरःसराः । सएवतुस्व
भक्तेषुस्थित्वानुग्रहकारकः । अज्ञेष्वज्ञानयंताचद्विषत्सुद्वेषकारकः । तत्प्रेरितास्तदन्येतुप्रियद्वेषादिका
रिणः । अतस्तत्प्रेरणादेवप्रेमाद्यामम जज्ञिरे । इतिपश्यतियोबुद्ध्यासतुभागवतोत्तमः ॥४५॥ सर्वाधिकंपृथ
ग्विष्णुंक्षीरसागरवासिनं । ज्ञात्वातत्रप्रेमयुक्तस्तद्भक्तेषुचमैत्रयुक् । कृपावांश्चतदज्ञेषुतद्द्वेषीणामुपेक्षकः ।
तद्वशत्वंनजानातिसर्वस्यजगतोपितु । तमाहुर्मध्यमंभक्तं ॥४६॥ अर्चायामेवसंस्थितं । विष्णुंज्ञात्वात
दन्यत्रनैवजानातियःपुमान् । तारतम्यंचतद्भक्तेर्नजानातिकथंचन । अवजानंश्चतद्भक्तानात्मनोभक्तिदर्प

तः । उपेक्षकोपिवातेषुनस्मरेदथवापितान् । मानुषेषुयथाकश्चित्किंचिदुच्चःप्रदृश्यते । एवमेवोच्चतांविष्णोरल्पांपश्यतिचान्यतः । तेतुभक्ताधमाःप्रोक्ताःस्वर्गादिफलभोगिनः । तैर्विघ्निताअधोयांतितद्भक्तानामुपेक्षकाः । कुर्युर्विष्णावपिद्वेषंदेवादेवावमानिनः । पूजिताविष्णुभक्तिंचनावज्ञेयास्ततःसुराः । उपेक्षकेषुदेवानांभक्तिनाशंस्वयंहरिः । करोतितेनविभ्रष्टाःसंसरंतिपुनःपुनः । अधोवायांतिविद्वेषात्पूज्यादेवास्ततःसदा । यस्तान्द्वेष्टिसतंद्वेष्टियस्ताननुसचानुतं । ऐकात्म्यमागतंविद्धिदेवैस्तद्भक्तिपूरितैः । उपेक्षकस्तुदेवानांयदैवनिरयोपगः । तदातुकिमुवक्तव्यमुपेक्षायांजनार्दने । विष्णोरुपेक्षकंसर्वेविद्विषंत्यधिकंसुराः । पतत्यवश्यंतमसिहरिणातैश्चपातितः । भुंक्तेस्वर्गफलंनित्यंनिरयंनैवगच्छति । विष्णोस्तुमध्यमोभक्तोजायतेमानुषेषुच । अस्मरन्देवतायस्तुभजतेपुरुषोत्तमं । योग्यःसंस्मरतेदेवानयोग्योद्वेष्टिकेशवं । यस्तूत्तमोभागवतःसमुक्तिंपरमांव्रजेत् । विष्णुनासर्वदेवैश्चमोदतेसचनित्यदेतिच ॥४७॥ विष्णोर्मायांविष्णिवच्छाधीनां । विष्णोरिच्छानुसार्यैतज्ज्ञात्वायोग्यान्नचाधिकं । हृष्यतिद्वेष्टिवायस्तुसवैभागवतोत्तमइतिच । सतांवृद्धिकरोधर्मस्त्वसतांह्रासकारकः । अयंतुनिश्चितोधर्मोह्यधर्मोन्योविनिश्चितः । हर्षःसत्सुतथासत्सुधर्मो

धर्मविपर्ययः । तेषांवृद्धौतथाहानौसर्वंज्ञेयमशेषतः । एतदर्थंचधर्माणामर्यादावैदिकादिका । मूलधर्मवि
रुद्धातुसानग्राह्याकथंचनेतिच ॥४८॥ देहेंद्रियप्राणधियांत्रिधैवत्वभिमानिनः । तत्रोत्तमादेवतास्ताःसर्व
दोषविवर्जिताः । गुणैःसर्वैःसुसंपन्नाविरिंचादुत्तरोत्तरं । मध्यमागुणदोषेताअसुराअवमामताः । तेसर्वे
दोषसंयुक्ताआचित्तादुत्तरोत्तरं । तेभ्योन्योमानुषोजीवस्ताभ्यांदेवासुरावपि । जीवाभिमानिनश्चैवत्रिवि
धाःसंप्रकीर्तिताः । जीवमान्युत्तमोब्रह्मामध्यमःस्वयमेवतु । अधमःकलिरुद्दिष्टस्तत्रमध्यमनीचयोः । मृति
जन्मक्षुधादुःखप्रभृत्यखिलमेवतु । नोत्तमस्यतुजीवस्यदेहादेश्चकथंचन । जन्मादिकृतदुःखंतुदेहमान्यसु
रस्यह । सुप्त्याद्यप्ययजंदुःखमसुरेंद्रियमानिनः । क्षुन्निमित्तंतुयद्दुःखंप्राणमान्यसुरस्यतत् । भयतर्षादिजं
दुःखंमनोमान्यसुरस्यच । केवलंत्वांतरंदुःखंबुद्धिमान्यसुरस्यतत् । नीचोस्मीतितुयद्दुःखमहंमान्यसुरस्य
तत् । अतीतादिस्मृतेर्दुःखंचित्तमान्यसुरस्यच । जीवमान्यसुरस्यस्यात्सर्वंतत्समुदायतः । एवमेवसुखंदे
वेषूभयंमध्यमेषुच । असुराणामधर्मस्यवृद्ध्यासुखमपीष्यते । देवानांनैवकेनापिदुःखंप्रीतिस्तुधर्मतः । अधर्मो
पिप्रीतयेस्यादसुराणामधोगतेः । देवानांपुण्यपापाभ्यांसुखमेवोत्तरोत्तरं । तेषांदुःखादिकंकिंचिदसुरावे

शतोभवेत् । प्राणस्यनासुरावेशआखणाश्मसमोहिसः । संपूर्णानुग्रहाद्विष्णोःप्राणःपूर्णगुणोमतः । असु
राणांसुखाद्याश्चदेवावेशादुदीरिताः । स्वतस्तुनिर्गुणाःसर्वेसर्वदोषात्मकामताः । विविच्यैवंजगत्सर्वंस्वात्मा
नंचपृथक्स्थितं । सर्वतश्चपृथक्संतंविष्णुंसर्वोत्तमोत्तमं । जानंतियेभागवतास्तउक्ताउत्तमोत्तमाइतिब्रह्म
तर्के । देहेंद्रिययोर्जन्माप्ययौ ॥४९॥ चित्तेविद्यमाने । स्वात्मनिकेवलात्मभावेमोक्षेच । यस्यजीवपरयो
रभेदोनास्ति । नक्कापिजीवंविष्णुत्वेसंसृतौमोक्षएवच । यःपश्यतिसुरादींश्चयथोत्कर्षंप्रपश्यति । ससर्वभू
तसमदृग्विष्णुंसर्वोत्तमंस्मरन्नितिहरिवंशेषु । नैवंत्वयानुमंतव्यंद्रष्टोजीवोमयेतिह । सर्वभूतगुणैर्युक्तंदेवं
त्वंज्ञातुमर्हसीतिचमोक्षधर्मेषु । नैवंत्वयानुमंतव्यंजीवात्माहमितिक्कचित् । सर्वैर्गुणैःसुसंपन्नंदेवंमांज्ञातुमर्ह
सीतिचवाराहे ॥५२॥ इत्येकादशतात्पर्येद्वितीयोऽध्यायः ॥२॥ ॐआत्मप्रसिद्ध्येभूतानांभगवज्ज्ञानार्थं
॥३॥ एवंगुणान्भुंजानोभगवान् । तंसृष्टंमन्यमानोजीवइहसज्जते । शरीरेदोषहानेनगुणभोक्तारमीश्वरं ।
शरीरस्थतयाजीवंमन्यमानःपतत्यधः । तत्सृष्टाहिसदाजीवादेहादेर्जनिमत्त्वतः । नित्यानंदैकदेहोसौविष्णु
स्तत्कैकतानयोरितिच ॥५॥ ॐआभूतसंप्लवाज्जन्मजीवेशत्वंविजानतः । ततःपतत्यधोयस्मादुत्थानंनैवतुक्कचि

दितिच ॥७॥ कालाख्यःकलनाद्विष्णुर्व्यक्तमव्यक्तगंनयन्निति च ॥८॥ अव्यक्तंविंशतीत्युक्त्वातस्यविस्तारो वारिणाहृतगंधेत्यादि । संक्षेपविस्तराभ्यांतुकथयंतिमनीषिणः । बहुवारस्मृतेस्तस्यफलबाहुल्यकारणा दितिशब्दनिर्णये ॥१२॥ नभआत्मनिलीयतइत्युक्तेंद्रियाणीत्याद्यपिविस्ताराय ॥१५॥ आत्मनिबुद्धौ ॥१६॥ त्रिवर्णावरणादुक्तात्रिगुणानांहरेर्मतिः । गुणात्मकत्वात्प्रकृतिस्त्रिवर्णेतिप्रकीर्त्यते । तत्रतुप्रकृतिस्तार्याता रिकातुहरेर्मतिः । उभयंविष्णुमायोक्तंज्ञातव्यमुभयंतथेतिच । बहूनांसहनिर्देशएकयाभिधयैवतु । तयैवा भिधयातेषांपरामृश्यैकमुच्यते । तामेतामांतरींरीतिंविदुःशब्दविदोजनाइतिच ॥१७॥ मंडलवर्तिनः युद्धरंगस्थाः ॥२१॥ देवाःसजायामुच्यंतेमानुषाउभयात्मकाः । विजायाएवयोगेशास्तेषांयायैवयोग्यता । तथातथैवमुच्यंतेनान्यथातुकथंचनेतिसंदृश्ये ॥२३॥ संतस्तुत्रिविधाःप्रोक्ताउत्तमामध्यमाधमाः । उत्तमा देवतास्तत्रऋष्याद्यामध्यमामताः । अधमामानुषोत्कृष्टास्तेचापित्रिविधामताः । तत्राधमेषुयेषांतुसंगोवि घ्नायवैभवेत् । तेषामुत्तमसंगस्यतेषांसंगंपरित्यजेत् । आदौतुतेषामपिचसंगउत्तमसंगतेः । साधनत्वान्नतु त्याज्योयदित्यक्तुंनशक्यते । तदातेपितथानेयायथाविघ्नोनवैभवेत् । तदुच्चसंगतेःक्वापितदादोषोनजाय

ते । प्रयोजनायतेषांतुसंगःसर्वात्मनेष्यते । सर्वथाचैवदेवेषुसंगोमुनिगणेषुच । भाव्योहितंविनानैवपुरुषार्थःक्वचिद्भवेत् । विशेषतःस्वोत्तमेषुविनासंगंनमुच्यते । स्वनीचेषुतुदेवेषुविनासंगंनपूर्यते । तस्मात्सत्सूत्तमेष्वेषुसंगःकार्योविशेषतः । अनाद्यनंतकालेषुनचहाप्यःकथंचन । सतांतदुत्तमेशेशेकिमुविष्णौपरात्पर इतिगारुडे । बह्वपेक्षोहिजिज्ञासुरतोदेहादिवृत्तये । किंचित्सत्स्वपिसंगीस्यादशक्येसतिवर्तने । कृतकृत्यस्त्यजेत्संगंसदागुरुसुरादिषु । संगीस्यान्नहितत्संगंविनातुसुखभाग्भवेत् । तस्मादनाद्यनंतैवसक्तिर्गुरुसुरादिषु । अन्यत्रकृत्यापेक्षास्यादितिसंगविनिर्णयइतिभविष्यत्पर्वणि ॥२४॥ श्रद्धाभागवतेतंत्रेवेदेभारतपंचमे । विष्णोरव्यवधानेनवक्तृत्वात्सर्वथाभवेत् । कलाविद्यास्वनिंदाचव्यवधानेनकेशवे । प्रवेशाद्यतिभिःकार्याह्यन्यथानरकंव्रजेत् । श्रन्नामास्तिक्यबुद्धिःस्यात्साचैवद्विविधामता । अत्रोक्तमस्तीत्येकात्रममात्रास्तिप्रयोजनं । इत्यन्यातत्रपूर्वातुयतेःकार्याकलास्वपि । द्वितीयानतुकर्तव्यापंचरात्रविरोधिषु । सदैवनिंदासर्वैश्चब्रह्मादिस्थावरांतकैः । सम्यक्कार्यातद्विनाचतमोयांतिविनिश्चयात् । कुर्वंत्येवसुरास्तत्रतदन्येषांतमोभवेत् । पंचरात्रंचवेदाश्चमूलरामायणंतथा । पुराणंभागवतंचभारतंच(न)विभिद्यते । एतेष्वपियथावि

ष्णोराधिक्यप्रतिपादनं । तद्भक्तानांचक्रमशःसएवार्थोनचापरः । अन्यथादृश्यमानंतुमोहायैवविनिर्दिशे
त् । तस्मात्सर्वेषुशास्त्रेषुविष्णोराधिक्यमेवतु । क्रमेणचतदीयानांप्रतिपाद्यंनचापरमितिब्रह्मांडे । अंधंत
मःप्रविशंतियेऽविद्यामुपासते । ततोभूयइवतेतमोयउविद्यायाᳵरताइतिचगृहिणोप्यल्पबोधस्यनकलासुप्र
योजनं । आवर्तयेद्वेदतंत्वंमुख्योक्तोहरिरत्रहीतिहरिवंशेषु ॥२७॥ कृष्णात्मनाथेषुमनुष्येष्वपिसौहृदंकिमु
देवेषुमहत्सुदेवादिषु ॥३०॥ अहेतुःस्वस्यहेतुरन्योनास्ति । बहिःप्रलयेमुक्तौच ॥३६॥ ब्रह्माद्यायंनजानंति
करणाद्यभिमानिनः । जानंत्यनुग्रहाचास्यप्रधानाग्निंयथार्चिषः । अग्निपुत्रानमस्तस्मैयमाहश्रीश्चतत्स्फुटं ।
वेदरूपापरंदेवंवैलक्षण्यात्समस्तशः । आनंदोनेदृशानंदइत्युक्तेर्लोकतःपरं । प्रतिभातिनचाभातियथाव
द्दर्शनंविनेतिब्रह्मतर्के । बोधकःपरमेश्वरः । ईदृशानंदोनभवतीतिनिषेधवचनार्थएवनसिध्यतिविलक्षणा
नंदाभावइत्यर्थतःसिद्धिः ॥३७॥ त्रिगुणात्मकंप्रधानंचरजःसत्वंतमस्तथा । प्राणोमहानहंकारोजीवास्त
दभिमानिनः । ज्ञानात्मकानींद्रियाणितथाकर्मात्मकानिच । शब्दाद्यर्थाःसुखंदुःखमितिप्रोक्तंद्विधाफलं । ए ॥८८७॥
तत्सर्वंहरेरूपमित्याहुर्ज्ञानदुर्बलाः । सएवबहुशक्तित्वाद्भातिचैषांतथातथा । एवंकारणकार्याख्यंसमस्तंह

रिमेवतु । केचित्पश्यंतिचव्यस्तंकेचिदाहुरपंडिताः । एवंकारणकार्येभ्यःपरमानंदरूपिणं । अज्ञानाद्बहुधा प्राहुरेकंसंतंसुदुर्जनाः । रूप्यत्वात्तद्वशत्वाच्चतद्रूपंचैतदीर्यते । नतुतस्यस्वरूपत्वान्निर्दोषानंदरूपिणः । कथंजडाजडैक्यंस्यात्कुतःपूर्णाल्पमोदयोः । पूर्णाल्पज्ञानयोश्चैवपूर्णशक्त्यल्पशक्तयोः । निर्दुःखदुःखान्वितयोःस्वतंत्रपरतंत्रयोः । अतःसर्वगुणैर्युक्तंसर्वदोषविवर्जितं । अन्याभेदेनविज्ञायतमएवप्रपद्यते । निष्कृष्टंसर्वतोविष्णुंसर्वतश्चविलक्षणं । ज्ञात्वापूर्णगुणंयांतिमुक्तिंनास्त्यत्रसंशयइतितंत्रभागवते ॥ अहंहिजीवसंज्ञोवैमयिजीवःसनातनः । मैवंत्वयानुमंतव्यंदृष्टोजीवोमयेतिह । अहंश्रेयोविधास्यामियथाधीकारमीश्वरइतिमोक्षधर्मेषु ॥३८॥ यथेंद्रियगतःप्राणस्तेषांशक्त्याविकल्प्यते । दृष्टिदःश्रुतिदश्चेतिमतिदोज्ञानदस्तथा । इत्यादिभेदतोवाच्यएकएवमहाबलः । दृष्ट्यादिशक्तिस्तस्यैवततोनान्यस्यकस्यचित् । एवंसद्रूपकंब्रह्मतत्तच्छक्त्याविकल्प्यते । एकमेवमहाशक्तिप्राणस्यापिबलप्रदमितिहरिवंशेषु ॥३९॥ पेशोजरायुरुद्दिष्टःसुवर्णपेशउच्यते । मृदुपिंडश्चपेशंस्यात्क्वचिद्भ्रमपीष्यतइत्यभिधानं । अवनिस्थितेषुस्वेदजेषु । भूस्वेदेनहिप्रायोजायंते । तदाकूटस्थेपरमात्मन्यासजीवः । यंपरमात्मानमृतेसुप्स्यनुस्मृतिरेवन । देहाद्देहांतरगतौप्रविशेत्प्राण

मेवतु । जीवःप्राणःपरात्मानमेवंसुप्तावपिस्फुटं । तदन्यादेवताःसर्वाःप्राणस्यैववशेस्थिताः । ईषच्चसुप्तवद्यां
तिनैवमानुषजीववत् । स्वर्गस्थानांनतुस्वापःप्रायोदेहेपिनाज्ञता । मृतिसुप्तिप्रबोधादेर्नियंताहरिरेकराट् ।
तम्रृतेनैवचावस्थानावस्थावान्नचस्मृतिः । ततस्तुदेवदेवेशःप्राणःप्राणेश्वरोहरिः । नहरेरीशितात्वन्यःसहि
सर्वाधिकोमतइतिहरिवंशेषु ॥४०॥ ॐअनंतोपिहिदुर्ज्ञेयःप्रश्नोयंज्ञानिनामपि । इतिवेदयितुंब्रह्मपुत्रानोचु
र्निमेःपुरइतितंत्रभागवते ॥४३॥ ईश्वरात्मत्वात् । ईश्वरविषयत्वात् ॥४४॥ ॐअज्ञःसन्नाचरन्नाविकर्मणाम्रृ
त्योर्मृत्युमुपैति । सएवेश्वरार्पितंकुर्वाणःसिद्धिंलभते ॥ अज्ञात्वाकुर्वतःकर्मस्खलनात्पापकारणं । तदेवा
र्पयतोविष्णोर्नैवपापायतद्भवेत् । मनोदोषविहीनस्यनतुदोषवतःक्वचित् । सत्सुकेशवपूर्वेषुक्रमशोभक्तिहीन
नता । असद्भक्तिस्तथास्नेहोबहुमानमथापिवा । स्वोत्तमानांप्रियत्यागादात्मप्रियचिकीर्षया । अधिकेष्वे
वनीचोच्चभक्तिव्यत्यासएववा । स्वोत्तमस्यात्मनश्चैवसमस्नेहोथवाभवेत् । कार्येषुबहुमानेवास्वात्मनःसमता
पिवा । आधिक्येकिमुवक्तव्यमात्मनःशक्तिहापनं । शक्तस्याशक्तवत्कर्ममनोदोषाइतीरिताइतिकर्मतंत्रे
॥४६॥ ॐअव्यग्रत्वेनाचार्यंलब्ध्वा । परीक्ष्यैवगुरुःशिष्यंशिष्योपिगुरुमाव्रजेत् । अन्यथानरकायैवप्रायश्चि

त्तंगुरोस्तथेतिच ॥४९॥ द्रव्यलिंगंशिलाद्यंस्यादात्मलिंगंमनोमयं । अथवास्थंडिलंचैवविष्णोर्लिंगंप्रकीर्ति तमितिच ॥५१॥ तन्मयंतत्प्रधानं । विष्णोर्भृत्योहमित्येवसदास्याद्भगवन्मयः । नैवाहंविष्णुरस्मीतिवि ष्णुःसर्वेश्वरोह्यजइतिच ॥५५॥ स्वादानात्स्वात्मनोव्याप्त्याविष्णुःस्वात्मेतिकथ्यते । नतुजीवस्वरूपत्वात्स हिजीवेश्वरःप्रभुरितिशब्दनिर्णये ॥५६॥ इत्येकादशतात्पर्येतृतीयोऽध्यायः ॥३॥ ॥ विष्णोस्तुपुरुषाख्या नित्रीणिरूपाण्यतोविदुः । प्रथमंमहतःस्रष्टृद्वितीयंत्वंडसंस्थितं । तृतीयंदेहिनांदेहेतानिज्ञात्वाविमुच्यतइ तिमाहात्म्ये ॥३॥ यत्काये ॥४॥ ब्रह्मणिस्थोसृजद्विष्णुःस्थित्वारुद्रेत्वभक्षयत् । पृथक्स्थित्वाजगत्पातितद्ब्र ह्माद्याह्वयोहरिरितिरिब्राह्मे । रजसातमसाचब्रह्मरुद्रदेहसृष्टेः । रागक्रोधकारणत्वाच्च ॥५॥ स्वविषयज्ञानरूपः प्रभावरूपश्च ॥६॥ ज्ञानरूपानपिसुरान्विनाप्राणंक्वचित्परे । आविशंतिह्यतस्तेषामज्ञानादिनतुस्वतइति देवतत्त्वे । अथैनमेवनाप्नोद्योयंमध्यमःप्राणः । एवमेतादेवताःपाप्मनाविद्धाःतंहासुराऋत्वाविदध्वंसुर्यथा श्मानमाखणमृत्वाविध्वंसतैवंविध्वंसमानाविष्वंचोविनेशुः । सावाएषादेवतैतासांदेवतानांपाप्मानंमृत्युमप हत्याथैनांमृत्युमत्यवहत्सायदामृत्युमत्यमुच्यतसोग्निरभवदित्यादिश्रुतिश्च॥७॥स्वंभागंबलिंददतोविघ्नमूर्ध्नि

यदिभवान्पदंधत्ते । तर्हिनान्यस्यबलिः ॥१०॥ कुमारनामातुहरिर्ब्रह्मचारिवपुःस्वयं । सनत्कुमारायपरं प्रोवाचजगदीश्वरइतिस्कांदे । विष्णोःसनत्कुमाराख्याच्छुश्रुवुर्ज्ञानमुत्तमं । सनत्कुमारप्रमुखायोगेशाःप रमेश्वराइतिप्रकाशसंहितायां ॥१७॥ सुपर्णाऋषयोव्यासंनाथमानाययुःसदा । ध्वांतंनिवारयास्माकंमुमु ग्धीतिचवादिनइतिव्यासतंत्रे । स्मरणात्तुनृसिंहस्यशक्रोमुक्तोबृहद्भयात् । हिरण्यकहृताश्चापितथैवाप्सर सांगणाइतिप्रभंजने ॥१९॥ उपेंद्ररूपीभगवान्प्रतिमन्वंतरंप्रभुः । असुरान्हंतिनियतंश्राद्धदेवेचवामनइ तिवामने ॥२०॥ इत्येकादशतात्पर्येचतुर्थोऽध्यायः ॥४॥ ॥ येतुविष्णुमवज्ञायश्रियमेवह्युपासते । उपे क्ष्यवाहरिंतेतुभूत्वायाज्याःपतंत्यधइतिप्रवृत्तिसंहितायां ॥१०॥ व्यवायामिषमद्यानिहरेःपूजार्थमेवतु । वा मदेव्योनामयज्ञोव्यवायोहरिपूजनं । पितृयज्ञोदेवयज्ञोमांसेनहरिपूजनं । व्यवाययज्ञेमद्यंतुसोमात्मकतये ष्यते । क्षत्रियादेर्नविप्राणांविप्रोदोषेणलिप्यते । अरागतःप्रवृत्तिःस्याद्रागोदोषस्यकारणं । प्राणभक्षोथ वायज्ञेदैवेसर्वस्यचेष्यते । पैष्टमद्यस्यमाध्व्यादिक्षत्रियस्यनदुष्यति । दैवेरत्यैवचप्रीतिर्विष्णोःपुत्रात्तुमानुषे । तस्माद्विहितमात्रेषुरागंमुक्त्वायथाविधि । समाहितोहरिंस्मृत्वावर्तन्याजीहरेर्भवेदितिक्रियाविधाने । य

ज्ञान्विहायनचोदना ॥११॥ [१३]यज्ञेष्वालंभनंप्रोक्तंदेवतोद्देशतःपशोः। हिंसानामतदन्यत्रतस्मात्तांनाचरेद्बुधः। यतोयज्ञेम्रृताऊर्ध्वंयांतिदैवेचपैतृके । अतोलाभादालभनंस्वर्गस्यनतुमारणमितिच ॥१३॥ [१४]स्वात्मानंस्वस्मिन्नात्मंच । आप्तत्वादात्मशब्दोक्तंस्वस्मिन्नपिपरेषुच । जीवादन्यंनपश्यंतिश्रुत्वैवंविद्विषंतिच । एतांस्त्वमासुरान्विद्धिलक्षणैःपुरुषाधमानितिहरिवंशेषु ॥१५॥ [३५]ध्रुवंतयैवमुच्येतयांमूर्तिंप्रदिशेद्गुरुः। शिष्याणांयोग्यताभिज्ञोविघ्नहानिस्तुतद्युगे । अवतीर्णहरेर्मूर्त्यातत्पूर्वयुगजेनच । नृसिंहमूर्त्याचतथायांचान्यांप्रदिशेद्गुरुरितिस्वाभाव्ये ॥३५॥ [३६]सर्वात्मनाहरेर्भक्तादेवेशाएवकेवलं । देवास्तुसर्वथाभक्ताभक्ताएवेतरेस्मृताः। हरिभक्त्यधिकेष्वेवकिंकरश्चाप्यृणीतथा । हरिभक्तोनेतरेषांवासुदेवव्यपाश्रयात्। द्विधैवस्वोत्तमर्णानिदातव्यानीतराणिच । दातव्येभ्योविमुच्येतनेतरेभ्यःकथंचन । कथंदेवाद्यनुपकृतोमनोमोक्षेपिवर्तयेत् । बिंबत्वात्तदधीनंहिस्वरूपंसर्वशोयतइतिजीवनिर्णये ॥४२॥ उदकैश्चनमस्कारैःस्तुतिभिर्मनसातथा । यतिभिश्चापिसंपूज्यादेवामोक्षमियासुभिः । मध्येविष्णुमनुस्मृत्यनान्यथातुकथंचनेतिसमयाचारे । प्राधान्येनहरिर्ध्येयस्तत्संबंधात्सुरादयः । ध्येयानान्यत्क्वचिद्ध्यायेद्धरावनुपयोगियदितिहरिसंहितायां ॥४३॥ [४४]पौंड्रकादिषुदे

भागव० त्येषुसुरांशाःसंतिसर्वशः । बहुमानफलंविष्णोस्तेयांत्यादायसद्गतिं । विद्वेषस्यफलंयत्तुतदादायासुरास्तमः । तात्पर्य०
॥१०३॥ यांत्यतोनैवविद्वेषोविष्णोःकार्यःकथंचनेत्यंशविवेके ॥४९॥ इत्येकादशतात्पर्येपंचमोऽध्यायः ॥ ५ ॥ ॥ ११ । ६
र्यःप्रकाशरूपः ॥८॥ [१२]अस्पर्धिनीस्पर्धिनीवश्रीरास्तेवनमालया । नहिस्पर्धादयोदोषाःसंविद्रूपांस्पृशंतिता
मितिवामने ॥१२॥ [१४]तनुभृदायुषिसंबध्यमानःअश्चेतितनुभृदायुषिरज्यमानाः । ब्रह्मणासंपरित्यक्तोमृतइ
त्युच्यतेनरइतिभारते ॥१४॥ कालमात्रःकालनिर्माताज्ञाताच । सृष्टिलयाद्यर्थं । नित्यत्वेनच । अव्यक्त
स्यापिस्रष्टृत्वात्कालएवंभूतःतस्मादप्युत्तमस्त्वं । कालाज्जीवात्तथाऽव्यक्तान्महतश्चोत्तमोयतः । उत्तमःपुरु
षस्तस्माद्भगवान्विष्णुरच्युतइतिच ॥१५॥ नारायणाख्यःपरमःशेतेलक्ष्म्यान्वितोलये । सएवपुरुषाख्यंतु
द्वितीयंरूपमात्मनः । कृत्वारमायांपुरुषनामानंतुचतुर्मुखं । प्रधानाख्यांचगायत्रींससर्जपुरुषात्मकः । च
तुर्मुखःसपुरुषोमहत्तत्त्वाभिधंपुनः । प्रधाननाम्न्यांगायत्र्यांससर्जात्मानमेवतु । श्रद्धाभिधांचगायत्रींता
भ्यांशेषोन्वजायतेत्यादिसृष्टिविक्षेपे ॥१६॥ येन्येज्ञानिनःस्वतःपरिहृतान्विषयान्बिभ्यति ॥१७॥ [१९]सर्वंबिभ्र ॥८९०॥
(भ्य)तस्तव ॥१९॥ [२५]वत्सराणांशतंचैवऋतूनांपंचविंशकं । अवतीर्णस्यकृष्णस्ययदाप्रागात्तदाहरिं । स्वस्था

नगमनापेक्षीब्रह्मातुष्टावसामरः ॥२५॥ संवत्सरद्वयंचैवपश्चात्स्थित्वाजनार्दनः । अभिपेदेपरंस्थानंचतुर्मासाधिकंपुनरितिभविष्यत्पुराणे॥२७॥संतामपिकलौप्रासेविकारोमनसोभवेत्। तस्माद्यदूंश्चसंजह्रेनैतेस्युःपापिनस्त्विति । पुनर्लोकविवृद्ध्यर्थमौत्तरेयादिकान्हरिः । आविश्यरक्षामकरोज्जगतःपुरुषोत्तमः । स्वात्मनःसहयानेनपुरुषार्थोधिकोभवेत् । इत्यनुग्रहबुद्ध्याचसंजह्रेस्वकुलंविभुरितिच ॥३१॥ आत्मनोत्तमतांब्रूयुरुत्तमाअपिसर्वशः । कदाचिदेवस्वगुणान्स्निग्धेष्वेवहिसाधवइतिनारदीये ॥ इत्येकादशतात्पर्येषष्ठोऽध्यायः ॥६॥ विद्धिमायांमनोमयीं । मन्मनःप्रधानप्रकृतिनिर्मितं । प्रकृतिःसापरामह्यंरोदसीलोकधारिणी । ऋतासत्यामराजय्यालोकानामात्मसंज्ञितेतिमोक्षधर्मेषु ॥७॥ स्वर्गाद्याश्चगुणाःसर्वेदोषाःसर्वेतथैवच । आत्मनःकर्तृताभ्रांत्याजायंतेनात्रसंशयः । परमात्मानमेवैकंकर्तारंवेत्तियःपुमान् । समुच्यतेस्मात्संसारात्परमात्मनमेतिचेतिभारते । इदंमयाक्रियतइदंमयानक्रियतइदंविपरीतंक्रियतइतिबुद्धिभेदोरजस्तमोगुणनिमित्तोभ्रमः । सर्वंहिपरमेश्वरःकरोति । आत्मशब्दोदितोब्रह्मापरमात्माभिधोह्यहं । सर्वंब्रह्मणिवीक्षेतमयिब्रह्माणमेवचेतिकालसंहितायां ॥८।९॥ आत्मभूतःआत्मवद्भूतः । आत्मौपम्येनसर्वत्रसमंपश्य

तियोर्जुनेतिवचनात् ॥१०॥ कर्तृत्वमात्मनोयस्माज्ज्ञाननिष्ठोनमन्यते । अतःकुर्वन्नपिसदादोषबुद्ध्यानर्निं दितं । गुणबुद्ध्यानविहितंकिंत्वीशप्रेरितोस्म्यहं । सएवचमयिस्थित्वानिंद्यानिंद्येकरोत्यजः । नमेदोषोन चगुणःकर्तृत्वाभावतःस्फुटं । स्वतंत्रत्वान्नचेशस्ययेऽज्ञास्तेषुभवेदपि । इतिमत्वानिवर्तेतनिंद्यात्कुर्याद्गुणा नपीतिबोद्धव्ये । अनित्यामेगुणानस्युर्दोषानैवकथंचन । इतिमत्वाशुभंकुर्यान्निवर्तेदशुभादपि । ज्ञानीत्व कर्तृतामानादीशकर्तृत्वनिश्चयात् । किंतुपूर्णगुणायैवनतुदोषापनुत्तये । नचाल्पगुणसिद्ध्यर्थंबालवत्कृत निश्चयइतिवैशारद्ये ॥११॥ वैलक्षण्याद्धरेर्भिन्नंतत्तंत्रत्वात्तदात्मकं । इतिविश्वंप्रपश्यंतिज्ञाननिष्ठाहरेःप्रिया इतिसार्वज्ञे ॥१२॥ योगोदेवादिषुतेनन्यस्तइतियोगविन्यासः । ज्ञानंतुयोगशब्दोक्तंयुज्यतेनेनयत्सुखं । क्व चिद्योगउपायःस्यात्क्वचिच्चित्तनिरोधनमितिदत्तात्रेययोगे । अत्रज्ञानमुपायश्च ॥१४॥ ॐभगवत्स्वरूपत्वा त्तनुभृत्त्वं । बहिरर्थापेक्षयैवचतेषांमोहः । परमसुखसाधनादन्योर्थोबहिरर्थः । अशरीरःसदाविष्णुःपूर्णा नंदत्वतःसदा । इच्छाचक्रीडयैवास्यनफलाययतोविभोः । अतोबाह्यार्थकामोपिनिष्कामइतिकथ्यते । ब्रह्मानिरभिमानित्वाच्छरीर्यप्यशरीरवान् । नित्यानंदोपयोग्यन्यकामस्योज्झिततःसदा । बहिरर्थविनि

मुक्तस्तथापितनुधारणात् । अमूढोमूढइतिवदुच्यतेचसरस्वती । रुद्राद्यास्तन्वभीमानाद्धहिरर्थयुजस्तथा । सर्वेषांब्रह्मपदवीयोग्यानांपूर्वमेवतु । अभावस्त्वपरोक्षस्यमोहोज्ञानस्यभण्यते । ब्रह्मणस्त्वंशरूपेषुभारत्या ज्ञानवर्जनं । ब्रह्मगायत्रिभावेतुनांशावतरणंक्वचित् । शतजन्मसुपूर्वंतुज्ञानोदयउदीर्यते । आपरोक्ष्येणपा रोक्ष्यात्पूर्णज्ञानंसदैवतु । शतजन्मगतायाश्चआपरोक्ष्योज्झितिर्भवेत् । क्वचित्क्वचित्सरस्वत्यामंशावतर णेष्वितिशक्तिविवेके । अशरीरोवायुरभ्रंविद्युत्स्तनयित्नुरशरीराणिवाएतानीतिचश्रुतिः । श्रुतिभिस्तनि तत्वात्तुस्तनयित्नुर्हरिःस्मृतः । अभ्रंभूतानिभरणाच्छ्रीर्वायुर्भरतःस्मृतः । विद्युत्तुभारतीप्रोक्ताएतएवाश रीरिणः । व्यत्यासेनापिनामस्यादेतेषांमहतांसदेत्यभयनिरुक्ते ॥१७॥ विष्णोर्वायोरनंतस्यत्रिभिरंशैर्नरः स्मृतः । सेंद्रैश्चतुर्भिःपार्थस्तुद्वाभ्यांतुबललक्ष्मणावित्यंशविवेके ॥१८॥ लोकेतत्त्वेचविचक्षणाः । पारोक्ष्ये णैवतत्त्वंतुलोकंचापिविदंतिये । तेपिसत्स्नेहनिर्मुक्तास्तमोयांतिविनिश्चयात् । आपरोक्ष्यान्नचज्ञानंतेषामुत्प द्यतेक्वचिदितिषाड्गुण्ये॥१९॥केवलात्मनःशरीरमात्रपरिग्रहस्य॥२०॥परार्थैकांतसंभवं॥आत्मनोवृद्धिश्चपरा र्थेतु॥सज्जनार्थेतुमन्येतऐहिकींवृद्धिमात्मनः॥पारत्रिकीमैहिकींचप्रीतयेगुरुदेवयोः॥देवतानांचसर्वेषांस्वोत्तमा

नांचसर्वेशइतिच ॥३८॥ [४३]जीवांतर्यामकोविष्णुरात्मनामासमीरितः । तस्यतुब्रह्मरूपत्वाद्बहिरंतस्तथैवच ।
पश्येदाकाशवद्व्याप्तिमसंगत्वंचनित्यशइतितंत्रभागवते ॥४२॥ [४४]गुणान्जीवस्यचेष्टव्यान्सिद्धान्विष्णोर्गुणां
स्तथा । तत्तद्दृष्ट्याविचिन्वीतपृथगेवसुधीःसदेतिलोकतत्त्वे । मधुनामसुखंविंद्यान्माधुर्यंसुखहेतुता । सुखे
रतिर्वासंप्रोक्ताशब्दतत्त्वविचक्षणैरितिशब्दनिर्णये ॥४४॥ दूरतएवभजनीयः । पराभवोधर्षणंस्यादवज्ञान
मथापिवा । नतत्सत्सुसदाकुर्यात्सहशय्यासनंनचेतिषाड्गुण्ये ॥४५॥ जीवस्यछन्नतांशिक्षेत्प्रविष्टत्वंपरात्म
नः । तत्तद्गुणविडंबंचवह्नेःसर्वमथापिवा । अल्पदारौयथाल्पोग्निरेवमल्पशरीरगः । दृश्यतेपरमात्मापिस्थू
लःस्थूलशरीरगइतिवैभवे ॥४६।४७॥ [४८]अवयव्यवयवानांचगुणानांगुणिनस्तथा । शक्तिशक्तिमतोश्चैवक्रि
यायास्तद्वतस्तथा । स्वरूपांशांशिनोश्चैवनित्याभेदोजनार्दने । जीवस्वरूपेषुतथातथैवप्रकृतावपि । चि
द्रूपायामतोनंशाअगुणाअक्रियाइति । हीनाअवयवैश्चेतिकथ्यंतेतेत्वभेदतः । पृथग्गुणाद्यभावाच्चनित्य
त्वादुभयोरपि । विष्णोरचिंत्यशक्तेश्चसर्वंसंभवतिध्रुवं । क्रियादेरपिनित्यत्वंव्यक्त्यव्यक्तिविशेषणं । भावा ॥८९२॥
भावविशेषेणव्यवहारश्चतादृशः । विशेषस्यविशिष्टस्याप्यभेदस्तद्वदेवतु । सर्वंचाचिंत्यशक्तित्वाद्युज्यतेपर

मेश्वरे। तच्छक्त्यैवतुजीवेषुचिद्रूपप्रकृतावपि। भेदाभेदौतदन्यत्रह्युभयोरपिदर्शनात्। कार्यकारणयोश्चा
पिनिमित्तंकारणंविनेतिब्रह्मतर्के। आत्मनिचैवंविचित्राश्चहि। सत्त्रोपेताचतद्दर्शनात्। सर्वधर्मोपपत्तेश्च।
स्वाभाविकीज्ञानबलक्रियाच। यत्रासप्तऋषीन्परएकमाहुरित्यादेश्च। विनादोषांच्छ्रुतमद्धावगम्यंतथास्मृ
तंपरमेसत्यरूपं। नैवासत्यंक्वचिदस्मिन्परेशेसर्वयुक्तंपूर्णशक्तेःसदैवेतिचविश्वंभरश्रुतिः। तस्मादेकस्मिन्न
पिशरीरेभेदाभेदात्प्रभवाप्ययौयुज्येते। नचविरोधः। स्थूलसूक्ष्मवत्। आपेक्षिकमत्रापियुज्यते ॥४९॥
बुद्धिसंस्थत्वात्मभेदोव्यक्तस्थोजीवउच्यते। तेनैवसहसंस्थानात्परात्मास्थूलबुद्धिभिः। जीववल्लक्ष्यतेवि
ष्णुर्यथैवांबुस्थितार्कवत्। परमार्कःपारिमाण्याद्वर्तुलत्वादिनातथा। अर्कस्वरूपानभिज्ञैःशिरःपादादिव
र्जितः। अचेतनश्चकल्प्येततत्तेजोमात्रदर्शिभिः। सूर्यदेहादिभिन्नंहितेजोमंडलमेवतु। दृश्यतेस्थूलमति
भिरेवमेवजनार्दनइतिप्रभासके ॥५१॥ इत्येकादशतात्पर्येसप्तमोऽध्यायः ॥७॥ ॥ महतांवनिताकामः
पतत्यंधेतमस्यलं। अन्यत्रनिरयंयातिदुःखवान्स्याद्विपर्ययइतिधर्मसंहितायां। मोहकारणभूतांतुमायेत्या
हुर्मनीषिणः। अविद्यमानंमेत्युक्तंतज्ज्ञापयतियत्स्वयं। कुत्रचिज्ज्ञानरूपंसत्प्राभरूपंचभण्यते। मयंप्राचु

यंमुद्दिष्टंमायास्यात्प्रचुरेत्यपीतितंत्रनिरुक्ते । स्वतंत्रंपरमार्थाख्यंस्वतंत्रैकाहरेर्मतिः । सैवमायासमुद्दिष्टामु
ख्यतस्तत्स्वरूपिका । मतिमन्मतिभेदोपिनविष्णोःक्वचिदिष्यते । पारमार्थ्येननास्त्येवतदन्यत्तद्वशंयतः ।
अनाद्यनंतकालेषुविद्यमानमपिध्रुवं । अतोमामामयंप्राहुःसर्वंतद्वशगंयतइतिमायावैभवे । स्वाधीनंसदि
तिप्रोक्तंपराधीनमसत्स्मृतं । अविद्यमानमेतस्माज्जगदाहुर्विपश्चितः । अनाद्यनंतकालेषुविद्यमानमपिध्रु
वं । अस्वातंत्र्यात्तुनास्त्येवेत्येवंवाच्यंजगत्सदा । सदावृत्तेर्विद्यमानमितिब्रूयाद्यदिक्वचित् । तथापिनाश
वद्धीदंप्रवाहाद्ध्यस्यनित्यता । अतोनिवर्त्यमित्याहुःप्रपंचोह्यस्तियद्यपि । विष्णोरिच्छावशत्वाच्चमायामा
त्रमितिस्फुटं । परमार्थंत्वेकमेवस्वातंत्र्याद्विष्णुमव्ययं । यदिकल्पयतीदंससएवविनिवर्तयेत् । विष्णुस्त
स्मात्तद्वशत्वान्नास्तीतिद्वैतमुच्यते । स्वातंत्र्येणहरौज्ञातेपराधीनत्वनिश्चयात् । इत्याहुरुपदेष्टारआचार्या
स्तत्त्ववेदिनः ॥ यथैवराजनिज्ञातेनान्योस्तीतिस्फुटंवचः । स्वातंत्र्यात्पारतंत्र्याच्चतद्भृत्यादिषुसत्स्वपि । य
थैकछत्रवांश्चैवएकवीरइतीवच । तथैवसर्वप्राधान्याददि्वतीयोहरिःस्मृतः । एवंमुक्ताविजानंतिसायुज्यं 
प्रापिताविभोः । अनंतकालंपश्यंतोजगदेतच्चराचरं । तस्यैतस्यह्यविज्ञानात्केवलभ्रांतिरूपकं । जगदु

क्त्वातमोयांतिर्हीशितव्येशशापतइतिच । पुत्रामेयदिविद्यंतेमरिष्यंत्येवतेध्रुवं । यदिराज्यंकरोत्येषनश्य
त्येतदसंशयमितिधृतराष्ट्रवचनात्प्रपंचोयदिविद्येतेत्यादि । यदिशब्दस्त्ववस्तुत्वेचास्वातंत्र्येचसंशये ।अवस्तु
शब्दश्चाशक्तेह्यल्पशक्तौचकीर्त्यतइतिशब्दनिर्णये ॥७॥ [३४]भगवद्भार्यतायोग्याःकाश्चिदप्सरसस्त्रियः । रमा
वेशात्कदाचित्स्युस्तास्वेकापिंगलाऽभवत् । तदन्यासांमहान्दोषोभगवद्भर्तृतास्मृतावितिस्वाभाव्ये ॥३४॥
इत्येकादशतात्पर्येऽष्टमोऽध्यायः॥८॥[१०]असज्जनैस्तुसंवासोनकर्तव्यःकथंचन । यावद्यावच्चबहुभिःसज्जनैःसतुमु
क्तिदइतिषाड्गुण्ये ॥१०॥ [१२]बाह्यंमनोविलीनंस्यान्मुक्तौचिन्मात्रकंमनः । तेनैवानुभवेत्सर्वंस्वात्माभिन्नेन
मुक्तिगइतिमुक्तितत्त्वे ॥१२॥ [१७।१८]कालप्रकृतिजीवादौलयेसत्यप्यवर्तनात् । तन्निमित्तस्यकार्यस्यविष्णुरेकइती
र्यते । सहिकालादिकंसर्वंवर्तयत्यमितद्युतिरितितत्त्वलये । प्रकृतिश्चगुणाश्चैवशक्यत्वाच्छक्तयःस्मृताः ।
विष्णोःस्वरूपभूतातुशकनाच्छक्तिरुच्यतइतिशक्तिविवेके ॥१७।१८॥ [२२]यादपिहरिंभक्त्याचिंतयंस्तत्सरू
पतां । पेशस्कारिवदायातिद्विषन्द्वेषसरूपतां । सुखरूपस्यहिद्वेषोदुःखरूपइतीर्यते । तस्माद्दुःखंसदाया
तिद्वेषवान्पुरुषोत्तमे । नृसिंहद्वेषतोदुःखंरक्षोरूपेणरावणः । अगाच्चरामविद्वेषाच्छिशुपालस्तथैवच । त

तोभक्त्यापरंयातोद्वेषरूपस्त्वधोगतिं । तस्मात्सर्वगुणोद्रेकिविद्वेषात्सर्वदोषवान् । भवेदितिसरूपत्वंद्वेषादेःपुरुषस्यहीतिभागवततंत्रे । तंयथायथोपासतेतदेवभवति । तंभूतिरितिदेवाउपासांचक्रिरेतेबभूवुस्तस्माद्धाप्येतर्हिसुप्तोभूर्भूरित्येवप्रश्वसित्यभूरित्यसुरास्तेहपराबभूवुरित्यादिच ॥ सत्यप्यत्यल्पविद्वेषभोजनंदास्यतीतितु । स्नेहबाहुल्यतःकीटःपेशस्कारिसमोभवेत् । द्वेषेसर्वात्मनानष्टेस्नेहेचैवविवर्धति । सरूपतातदेवस्यात्कीटस्यैवंहरेरपि । अत्यल्पोपिहरेर्द्वेषःस्नेहस्यानुदयंकरः । सोयंविशेषोनान्यस्यफलदाताचकेशवः । नहिपेशस्कृतःकिंचित्फलदातृत्वमिष्यते । स्वातंत्र्याद्विद्विषांचैवकेशवोनसुखप्रदइतिस्वातंत्र्यविवेके ।२२। [२५]सत्वनिधनःसत्वंनिधीयतेस्मिन्परमेश्वरइति । सततमतिशयेनोच्चैरर्करूपस्सुखरूपइतिसततात्युदर्कोभगवान् ॥२५॥ बीजार्थमारोपणादिकंकुर्वन्निति ॥२६॥ [३१]एकस्मात्तुगुरोर्ज्ञानंजायतेनैवकस्यचित् । एकस्मादेवजायेतयोग्याद्ब्रह्मपदस्यतु । स्वयंचोपदिशेज्ज्ञानंवैरिंचिपदयोगिनि । अनुग्रहात्तेनचापिज्ञानंदत्वाविमुक्तिदः । ज्ञानंप्राप्यबहुभ्योपिनतैर्मुक्तिश्चतुर्मुखात् । ज्ञानमप्राप्यतेषांतुज्ञानदोविष्णुरेवहीतिगुरुविवेके ॥३१॥ इत्येकादशतात्पर्येनवमोऽध्यायः ॥९॥ [३]बुद्धिगुणैःकामक्रोधादिभिरभेदोविफलः । वस्तुस्थितेरन्य

थात्वंनानात्वमितिकीर्तितं । ज्ञानस्यैवतुनानात्वान्नस्यात्कामाद्यहंमतिः । कामादिषुस्वधीस्थेषुकेवलंजीवसंस्थितिः। इतिबुद्धिरभेदःस्यात्सनकार्यःकथंचन। अदुष्टकामश्चिद्रूपोजीवाभिन्नस्वरूपतः । दुष्टकामोमनोधर्मस्तस्माद्ध्येयःसदैवसइतिविवेके ॥३॥ निष्कामंज्ञानपूर्वंतुनिवृत्तमिहचोच्यते । निवृत्तंसेवमानस्तुब्रह्माभ्येतिसनातनमितिभारते ॥४॥ मामेवनित्यंध्यायेद्योमदात्मासप्रकीर्तितइतिच ॥५॥ [११]अदेहधर्मवान्विष्णुर्देहधर्मवदीर्यते । जीवस्त्वदेहधर्मापिपरतोदेहधर्मवान् । स्वयंत्वनभिमानःसन्नज्ञानामेवदर्शयेत् । विष्णुर्जीवस्त्वभीमानीयावद्विष्णुपदंव्रजेदितिविष्णुसंहितायां । अवस्त्वशक्तमुद्दिष्टंशक्तंवस्त्विहभण्यते । तस्मादेकंपरंब्रह्मवस्तुशब्दोदितंसदेतिलक्षणे॥११॥[१३]पिशाचवत्स्थितामायातूच्यतेजीवगासदा। दह्यंतेतद्गुणाःसर्वेसाचप्रातिस्विकीनरइतिवैभाव्ये।एतच्छब्देनदुःखादिरपरोक्षतयोच्यते।क्वचिद्विश्वंक्वचिद्ब्रह्मक्वचिन्निंद्यमुदीर्यतइतितंत्रनिरुक्ते । बाह्यांतःकरणाज्जन्यंज्ञानंनश्यतिमुक्तिगे । स्वरूपज्ञानतोभोगान्मुक्तौभुंक्तेयथेष्टतइतिमुक्तितत्त्वे ॥१३॥ देहापेक्षमनित्यत्वंजीवानांजननंतथा। स्वतस्त्वजाश्चनित्याश्चबहवःसुखरूपिणः। उत्तमाजीवसंघास्तुनीचावैनित्यदुःखिनइतिजीवतत्त्वे ॥१४।१५॥ [१७]स्वाँधिकानांवशत्वात्तुपरमंसुखमेवतु । त

दन्येषांवशेयस्तुकिंसुखंतस्यभण्यता । स्वाधिकानांवशत्वंचतेषुभक्तिमतःसुखं । तदन्येषांतुदुःखायतस्माद्भ
क्तोधिकोभवेदितिच ॥२७॥ विदुषामपिदेहमानिनांयदानविद्यतेसुखंतदादुःखमूढानामहंकारिणांचकि
म्वित्यर्थः । पुनःशब्देप्रस्तुतार्थेतथाशब्दउदीर्यतइतिशाब्दे ॥१८॥ येतुविद्वत्त्वेनप्रसिद्धाःप्राकृतानांतेप्यद्धा
नविदुर्देहमानिनश्चेत् । दुःखमूढाअधीराः।अहंकारिणोविशेषतोप्यविद्यमानगुणाभिमानिनः ॥१९॥ [32,33]यावं
त्स्याद्गुणवैषम्यमित्यादियउपासीरंस्तेमुह्यंति ॥३२।३३॥ [31]गुणसंयुक्तःकर्मफलानिभुङ्क्ते ॥३१॥ [34]असतिगुणव्य
तिकरेकालादिनामानंमामेवाहुरितिस्वसिद्धांतः । कालःसर्वगुणोद्रेकादाप्तत्वादात्मनामकः । आगमोव
गतेरस्यलोकोज्ञानस्वरूपतः । स्ववशत्वात्स्वभावोयंधारणाद्धर्मइत्यपि । उपासतेसदामुक्ताःपरानंदैकभा
गिनः । तदेतत्तत्त्वमज्ञात्वाप्राहुर्दुर्मतयःपरे । यावत्तुगुणवैषम्यंतावन्नानात्वमात्मनः । भेदबुद्धिस्तुयावत्स्या
त्तावदीश्वरतंत्रता । यावदीश्वरतंत्रत्वंतावत्तस्माद्भयंभवेत् । उपासतेयएवंतुनित्यशोकेपतंतिते । महात
मस्यनानंदेतस्मान्नैवंविचिंतयेत् । तस्मान्नित्यंतुनानात्वंजीवानामीशतंत्रता । स्वाधिकानांवशत्वंचमुक्ता
वपिसदेष्यते । एवंज्ञात्वाविमुच्यंतेपरानंदंव्रजंतिचेतितंत्रभागवते ॥३४॥ अदेहीपरमात्मा । वध्यतेचेत्क

थंबध्यते॥३५॥नित्यंमुक्तोनित्यबद्धइत्येकजीवमतानुसारेणचोदयति। शिष्योपिपूर्वपक्षस्थस्तदेवात्ममतंब्रुव
न्नैवदुष्यत्यसत्येनस्थिरत्वार्थंहितद्वचइतिविक्षेपे। नमेमोक्षोनबंधनं। एकस्यैवममांशस्यजीवस्यैवंमहामते।
बंधोस्याविद्ययानादिर्विद्ययाचतथेतरत्। अथबद्धस्यमुक्तस्यवैलक्षण्यंवदामितइत्यादिपरिहारात् ॥३७॥
इत्येकादशतात्पर्येदशमः ॥१०॥ मेगुणतः। मद्धशसत्वादेः। अमायत्वान्निर्गुणोहंबंधमोक्षौनचापिमे।
मदधीनस्यजीवस्यबंधमोक्षौसदैवत्विति स्वाभाव्ये ॥१॥ स्वप्नोयमित्यविज्ञानात्स्वप्नेदुःखमुपाश्नुते। निज
स्वरूपानुभवराहित्यात्तद्वदेवतु। जाग्रद्दुःखमपिप्रोक्तंविष्णुतत्त्वंनपश्यतः। तस्मात्तदस्वभावत्वात्सदप्येतद
वास्तवमितिलोकसंहितायां ॥२॥ विद्याविद्येममतनूप्रतिमावत्सदोदिते। सदातद्व्यतिरिक्तस्यनित्यज्ञानसु
खात्मनः। मदिच्छावशगेनित्यमविद्यानिर्मितागुणाः। सत्वाद्यामदधीनत्वादविद्यायानमेगुणाः। अवि
द्याचैवविद्याचगुणाःसत्वादिकाअपि। देहोत्पत्तिःसुखंदुःखंसर्वमेतन्मदिच्छया। अतोहंबंधमोक्षाभ्यांरहि
तोनित्यमेवतु। मुक्तशब्दोदितोबंधराहित्यान्नविमोक्षतइतिकालसंहितायां। श्रीस्तुविद्यासमुद्दिष्टादुर्गाऽ
विद्याप्रकीर्तिता। तेत्वनादीहरेरिच्छानियतेसर्वदैवत्वितिमायावैभवे ॥३॥ भिन्नांशस्यैवजीवस्यबंधमो

क्षौनमेकचित् । अभिन्नांशास्तुमत्स्याद्यास्तेजसःकालवह्निवत् । जीवाभिन्नांशकास्तत्रतेजसःप्रतिबिंबवदि
तिवैलक्षण्ये ॥४॥ मुक्तस्यतुनमेमोक्षोबंधाभावात्कथंचन । मुक्तइत्यपिनामैतद्दीप्यतेसौदिवाकरः । इति
वद्बंधराहित्यान्नतुऋक्षादिदीप्तिवत् । कादाचित्कतयावाच्यंबंधाभावादमोक्षतः । जीवस्यबंधमोक्षस्तुमत्प्र
सादात्कदाचनेतितत्त्वोदये । मुक्तस्यविष्णोः । नित्यशुद्धबुद्धमुक्तसत्यसुखाद्वयप्रत्यगेकपूर्णइत्यतःपदान्व
यादित्यादिवचनात् । बद्धोजीवः । बद्धाजीवाइमेसर्वेपूर्वबंधसमन्वयात् । नित्यमुक्तत्वतोविष्णुर्मुक्तना
मासदोदितः । अबद्धत्वादमोक्षोपिदीप्यतेसौरविर्यथेतिब्रह्मसंहितायां ॥५॥ अनत्तृत्वंहरेर्दुःखानत्तृत्वादु
च्यतेसदा । विषयान्विनापिपूर्णत्वात्स्वरूपानंदभोगिनः । सुखमत्त्येवहिसदासर्वत्रापिस्थितंविभुः । स्वा
दोरदनवद्ध्यत्तिजीवोस्वाद्वपियत्सदा । अनारतंपारवश्यात्स्वाद्वत्तीतिततःश्रुतिरितिभोगनिर्णये । अस्वादु
स्वादुवद्ध्यात्तिजीवोनैवंजनार्दनः । अतोनात्तीतिवचनमश्नतोपिसुखंसदेतिपरभागे । साशनानशनत्वेननर
देवौयथोदितौ । अत्तिंविनाप्यदौर्बल्यात्तथानत्तिर्हरेर्भुजइतिस्वाभाव्ये । एतदेवात्रोक्तंनिरन्नोपिबलेनभू
यानिति । स्वयंत्वत्त्येवतथापिनादननिबंधनंतस्यबलंकुतः । यत्रासुपर्णाअमृतस्यभागमनिमेषंविदथाभि

स्वरंति । इनोविश्वस्यभुवनस्यगोपाःसमाधीरःपाकमत्राविवेश । यस्मिन्वृक्षेमध्वदःसुपर्णानिविशंतेसुवते चाधिविश्वे । तस्येदाहुःपिप्पलंस्वाद्वग्रेतन्नोन्नशद्यःपितरंनवेदेत्यादिवाक्यशेषात् । वृक्षेस्थित्वामध्वदःसुपर्णायस्मिन्नधिविश्वे । सुपर्णेनिविशंतेतदाधारत्वेनसुवतेच । तस्यैवसुपर्णस्यस्वादुपिप्पलंअन्यस्तुस्वादुवदश्नातिनस्वादु । यावत्पितरंपरमात्मानंनवेदेत्यर्थः ॥ सुपर्णौद्वौशरीरस्थौजीवश्चपरमस्तथा । पारवश्यादनाज्जीवस्तत्रात्तीतिश्रुतौश्रुतः । स्ववशेनादनाद्विष्णुर्नात्तीत्यत्तापिसन्श्रुतः । सएवहिशुभस्यात्ताजीवोत्तास्यैववेदनादितिकर्मसंहितायां । सर्ववाअत्तीतितददितेरदितित्वं । यस्यब्रह्मचक्षत्रंचोभेभवतओदनः । अत्ताचराचरग्रहणात् । अहंहिसर्वयज्ञानांभोक्ताचप्रभुरेवचेत्यादेश्च । जीवोमुक्तोपिनोजीवान्परमात्मानमेवच । वेत्तिसर्वात्मनाविष्णुर्वेत्त्येकःपुरुषोत्तमः । तस्यप्रसादतःकिंचिद्ब्रह्माद्याअपिजानते । अन्यजीवानपेक्ष्यैकोजानातिचचतुर्मुखः । सामस्त्येनतदन्येतुलेशज्ञानाःक्रमात्स्मृताइतिविनिर्णये । तान्यहंवेदसर्वाणिनत्वंवेत्थपरंतपेत्यादिच । अज्ञाजीवास्तुकथ्यंतेमुक्ताअप्यल्पवेदनात् । ज्ञइत्येवोच्यतेनित्यंसर्ववेत्तृत्वतो हरिरितिवैशेष्ये । अनाद्यविद्ययांधत्वंजीवस्ययदियोग्यता । प्रयत्नश्चानुकूलःस्यादंतवद्भवतिध्रुवं । नित्य

मेवान्यथांधत्वमयोग्यामानुषादयः । बद्धत्वंसर्वजीवानानियमान्नित्यमेवतु । बद्धत्वंविष्णवधीनत्वमंधत्वं
तददर्शनं । अतःक्वचिदनित्यत्वमंधतायाभविष्यति । मुक्तस्यापितुबद्धत्वमस्तियत्सहरेर्वशः । मुक्ताख्या
दुःखमोक्षात्स्याद्बद्धाख्याहर्यधीनता । नित्यबद्धाअपिततोमुक्तादुःखविमोक्षतः । नित्यमुक्तस्त्वेकएवहरि
र्नारायणःप्रभुः । स्वतंत्रत्वात्स्वतंत्रत्वंतस्यैकस्यनचापरइतिमुक्तिविवेके ॥ शतंसहस्राणिचतुर्दशेहपराग
तिर्जीवगणस्यदैत्य । आरोहणंतत्कृतमेवविद्धिस्थानंतथानिःसरणंचतेषां । कृष्णोमुक्तैरिज्यतेवीतमोहैः ।
मुक्तानांपरमागतिरितिभारते । कलाःपंचदशत्यक्त्वाश्वेतद्वीपनिवासिनां । मुक्ताख्याविष्णवधीनास्तेस्वाधि
कानांवशेस्थिताः । नचास्मादधिकंकिंचित्सुखमस्तिहरिंविना । नित्यमुक्तःसएवैकःस्वतंत्रःसयतःसदेति
माहात्म्ये ॥६।७॥ शरीरस्थोपिविद्वत्वान्नविष्णुर्बध्यतेक्वचित् । अविद्वत्वात्तुतत्रैवदेहेजीवस्तुबध्यते । स्व
प्नदृग्वदिमेजीवाहरिःस्वप्नोत्थितोयथा।सदातमोविहीनोपिज्ञापनार्थमुदीर्यतइतिविवेके । गुणैरपिगुणेषु । अ
प्रधानैर्जीवैरप्रधानेषुविषयेषु । आत्मनोवशगैर्जीवैरात्मनोवशगेषुच । दुःखेषुगृह्यमाणेषुमनआदिभिरिं
द्रियैः । अहंदुःखीतिनैवेशस्त्वहंकुर्यात्परःपुमान् । जीवगत्वेनतद्दुःखंविष्णुःपश्यतिसर्वदा । अतोनदुःख

भाग्विष्णुःस्वातंत्र्यात्पुरुषोत्तमः । पारतंत्र्यादहंदुःखीत्येवंजीवःप्रपश्यति । तस्मात्सदुःखभागुक्तोयावदी
शःप्रसीदतीतिस्वातंत्र्ये ॥८९॥ गुणभाव्येनकर्मणागुणभूतः स्वतंत्रोहमस्मिन्कर्मणीतिभावनीयेन । अ
स्वतंत्रःस्वतंत्रोस्मीत्येवंजीवःप्रभावयन् । बध्यतेहीशकोपेनराजभावेनभृत्यवदितिच ॥१०॥ एवंविरक्तःश
यने । एवमस्वातंत्र्येणनित्यबद्धोपिएवमात्मनोःस्वातंत्र्यपारतंत्र्ययोर्विद्वान्जीवोप्यविद्वज्जीववन्नबध्यते ।
एवंविद्वानित्यन्वयः । नित्यबद्धोपिजीवोयआत्मनोनित्यबद्धतां । विष्णुनानित्यमुक्तत्वंतस्यवेत्तिसमुच्य
ते । तदधीनत्वबंधेतुविद्यमानेप्यदुःखभाक् । देहस्थोपिनदुःखीस्यादन्यवत्किमुमुक्तिगइतिपरायणे । ना
नात्वमितिवैमिथ्याज्ञानंकुत्रचिदुच्यते । वस्तुयाथात्म्यतोन्यत्वाज्ज्ञानस्योज्झोविवक्षितइतिवाल्भ्ये ॥ दो
षश्चैवगुणश्चोभावीशतंत्रौनमेवशौ । इतिजानन्नदोषःस्याद्वर्जितोल्पगुणेनचेतिप्राथम्ये ॥११-१३॥ [18] स्थि
तिशब्देननियमःक्वचिज्जीवनमुच्यते। उत्थितत्वंक्वचिच्चैवक्वचिद्गतिविरोधितेतिशब्दनिर्णये॥१८॥[20] दुग्धदोहां
तुगांरक्षेत्क्षीरमात्रप्रयोजनः । यथातद्वद्धरेरन्यवाचोधारणमिष्यतइतिहरिवंशेषु ॥२०॥ अर्थादन्यथात्वेन
मनसःपरिवर्तनंनानात्वभ्रमः । जीवस्येशत्वविज्ञानंजीवानामेकतातथा । ईशस्यबहुताज्ञानमीशस्यानी

शतातथा । जगतोसत्यताज्ञानंनानात्वभ्रमउच्यतइतिविवेके ॥२१॥ [२८]स्वेच्छोपात्तपृथग्वपुः । वसुदेवादिश
रीरंस्वेच्छयानेनस्वीकृतमिति । नित्यानंदशरीरोपिवसुदेवादिदेहगः । प्रदर्शयेज्जनिंस्वस्यनित्यंदेहविव
र्जितः। वसुदेवादिदेहेषुप्रवेशस्तस्यभण्यते । देहोपादानमितितुनह्यन्योदेहइष्यते । अन्याभिमतदेहेषुप्रवि
ष्टःसर्वदाहरिः । नान्यानभिमतोदेहोविष्णोरस्तिकदाचन । अतोशरीरोभगवान्पुत्रताभिमतिस्तुया । व
सुदेवादिकानांतुसैवमिथ्यामतिर्भवत । अन्याहंभावयुग्देहएवासौहरिरास्थितः । नतदन्येषुदेहेषुक्वचित्त
स्यप्रवेशनं । ममपुत्रस्त्वयमितिभ्रमणाययदाहरेः । वसुदेवादिदेहेषुतनूपात्तिस्तुसागतिः । अनुपात्तशरीर
स्यतनूपात्तिरितीष्यते । तद्देहंपितृदेहत्वेउपादत्तेयतोहरिरितिप्रकाशसंहितायां ॥२८॥ [३३]ज्ञात्वाज्ञात्वेतिवी
प्सा । ज्ञात्वापिममनाहात्म्यंतत्रोत्सुकतयापुनः। विशेषाच्चविशेषेणज्ञात्वामामश्नुतेधिकमितिविज्ञाने ।३३।
[३४]सर्वदेवोत्तमोवायुरितिज्ञानान्नचापरं । प्रियमस्तिहरेःकिंचित्तथावायोर्हरेर्विदः । भारतीवायुलक्ष्मीणामा
त्मनश्चयथाक्रमं । आधिक्यज्ञानतोविष्णुःसर्वतःसंप्रसीदतीतिमाहात्म्ये । वायुर्भीमोभीमनादोमहौजाःस
र्वेषांचप्राणिनांप्राणभूतः । अनावृत्तिर्देहिनांदेहपातेतस्माद्वायुर्देवदेवोविशिष्टइतिमोक्षधर्मेषु । तस्माद्वायु

रेवव्यष्टिर्वायुःसमष्टिरपपुनर्मृत्युंजयतियएवंवेदेतिच । पंचभूतमनोबुद्धिरुद्राणांप्रतिदेहकं । बाह्यतश्चापि नेतृत्वाद्वायुर्व्यष्टिसमष्टिकइतिप्रभंजने ॥४४॥ स्वात्मनिस्थोहरिःपूज्यआत्मनामाशनादिकैः । तत्संबंधादा त्मशब्दोजीवेस्यादुपचारतइत्यात्मसंहितायां ॥४५॥ इत्येकादशतात्पर्येएकादशोऽध्यायः ॥११॥ संगस्तु गुणसंप्रीतिर्गुणवत्त्वेऽतिनिश्चयात् । सचेद्धरौभवेत्तेनमुच्यतेनात्रसंशयः । अपरोक्षदृशेर्हेतुर्भवेत्सस्याद्यदि क्षमः । अन्यथासुखभागेवमदृशिर्मोक्षकारणमितिदर्शने ॥२॥ ज्ञात्वापिहरिविद्वेषीतमोयातिनसंशयः । विशेषरूपस्याज्ञोपिगुणवत्त्वेऽतिनिश्चितः । गुणसंप्रीतिमान्नित्यंतंदृष्ट्वामुक्तिमेष्यति । अथवासुखभागेव स्याद्यावद्दर्शनोपगइतिव्यक्ते ॥८॥ हरिसंगविहीनस्तुहरेर्दर्शनवानपि । नमुच्यतेखिलज्ञोपितमोयातिच निश्चयात् । गुणैरन्यैर्विहीनोपितद्भक्तेष्वपिचक्रमात् । संगवान्सुखभागेवस्याद्गुणैर्मुक्तिमेतिवा । स्वभक्त संगहीनस्यव्युत्क्रमात्संगिनोपिवा । स्वसंगविघ्नकृद्विष्णुस्तत्सज्जेतेषुतत्रचेतिसत्संगे । गोपिकाद्यादिवंग त्वाहरिंज्ञात्वायथातथं । परंपदंययुःपूर्वसंगादेवशुभान्विताइतिच । श्रोतव्यंचश्रुतंचैववक्तव्यंकार्यमेवच । निवर्त्यंचहरेःपूजेत्येवंकुर्यान्नचाक्रमात् । एवंकृत्वातुसंन्यासीसर्वोत्संगाद्धरौस्मृतः । अन्यथानैवसंन्यासी

१५१

निष्क्रियोपिशिलायथेतिकर्मविवेके । नाहंकर्तातुसर्वस्यकर्तैकोविष्णुरव्ययः । इतिविस्वातुसंन्यासीनान्य थातुकथंचनेतिनिवृत्ते । मयिसर्वाणिकर्माणिसंन्यस्याध्यात्मचेतसा । निराशीर्निर्ममोभूत्वायुध्यस्वविगतज्व रइतिच ॥९॥ [१६]वायौमुख्यधियेत्युक्त्वाविशेषतोगोपिकाप्रशंसनात्संशयःशृण्वतइतिचोदयति ॥१६॥ [१]गो पिकाअपिमामापुःकिमुवाय्वाद्याइतिदर्शयितुंगोपिकाप्रशंसनं । सर्वैर्गुणैःसर्वोत्तमस्तुवायुरेव । सएवचहिर ण्यगर्भइतिदर्शयितुमाहयएषजीवोविवरप्रसूतिरित्यादि । विशेषेणवराणामहंकारादीनामपिप्रसूतिरुत्पत्ति कर्ता । प्राणेनविष्णुनाघोषेणवेदात्मिकयाप्रकृत्या । मनोमात्रादयश्चहिरण्यगर्भस्यदेव्याःपरमात्मनश्चव्य क्तिस्थानानीत्युक्तं । प्राणेनघोषेणचसहविवरप्रसूतिर्मनोमयंरूपमुपैतीत्यादिना ॥१७॥ तत्रापिविशेषतो भगवतएवव्यक्तिस्थानमित्याह । यथानलइत्यादिना ॥१८॥ [२०]विशेषेणश्लिष्टशक्तिः । अनपगतसामर्थ्यः । यथैकंकलमादिबीजंभूमावुप्तंबह्वंकुरंभवति । एवंपरमात्मानुगृहीतोब्रह्माहंकारादिषुबहुधाव्यक्तीभवति । सुपर्णशेषरुद्रादिप्रसूतिश्चचतुर्मुखः । सर्वजीवोत्तमोजीवोगुणैर्ज्ञानसुखादिभिः । विष्णुभक्त्यादिभिःसर्वै र्नियमात्सार्वकालिकं । मुक्तावपिनसंदेहःसहिदेवेनविष्णुना । प्राणःप्राणेनजगतामीशेनरमयातथा । वेदा

त्मिक्याचसहितःसूक्ष्मःसन्मनसिस्थितः। वींद्रादीनांतुसर्वेषांमात्रावर्णस्वरेषुच । स्थूलरूपीसदातिष्ठन्नेवं श्रोत्रादिखेषुच। सर्वेषांप्रेरकोह्येकोज्ञानानंदबलैस्त्रिवृत्। नित्यशक्तिःसर्वगःसन्बहुधेवप्रतीयते। तस्मिन्नो तमिदंसर्वंपटेलक्षणतंतुवत्। सएववायुरुद्दिष्टोवायुर्हिब्रह्मतामगात्। विशेषतोहरेर्व्यक्तिस्थानान्येतानिस र्वशः। मनआदीन्यहंकारोब्रह्मावेदात्मिकारमा। त्रिगुणात्मिकाचसैवश्रीःसैवोक्तासंविदात्मिका। तस्या अपिनियंतैकोविष्णुःसर्वेश्वरेश्वरः। यथादारुषुसूक्ष्मःसन्मथितोग्निःसमिध्यते। तथावेदादिषुहरिर्मथितः संप्रदृश्यते। व्यक्तिस्थानान्यथैतानिवेदादीनिहरेर्विदुरितितंत्रभागवते। मनसिव्यक्ततांयामितस्माद्व्यक्ति र्हिमेमनइतिभारते ॥२०॥ यथैववस्त्रेदीर्घंचतिर्यक्कापिसुसंस्थिता। तंतुभिःक्रियमाणैवपद्माद्याकारसंस्थि तिः। यथाजीर्णानिवस्त्राणितंत्वाधाराणिवापुनः। कंथावयवभूतानितद्वदेतच्चतुर्मुखे। सोपितद्वद्धरौनित्यं संस्थितःश्रीरपिस्फुटमितिप्रातिस्विके ॥२१॥ जगद्वृक्षस्यबीजेद्वब्रह्माचैवसरस्वती। मूलभूतानिकर्माणि मनोबुद्धिरहंकृतिः। नाळत्वेनसमुद्दिष्टाःखमाद्याःस्कंधसंज्ञिताः। एकादशेंद्रियाण्येवशाखास्तुत्रिगुणास्त्व चः। प्रवृत्तंचनिवृत्तंचफलेअस्यप्रकीर्तिते। पुष्पमैहिकमुद्दिष्टंरसाःशब्दादयस्तयोः। प्रवृत्ताश्चनिवृत्ताश्चपक्षि

णस्तत्रसंस्थिताः । वृक्षस्यपृथिवीवच्छ्रीर्विष्णुराकाशवायुवत् । तस्याअपिसदाधारएवंज्ञात्वाविमुच्यतइति निवृत्ते ॥२३॥ [२४]प्राँकृतांतःकरणजंज्ञानमस्त्रंसृतिच्छिदं । तदेवतेनसंछेद्यंचित्तंप्रकृतिसंभवं । तेनैवसहसंत्याज्यंनैवपूर्वंकथंचन । ज्ञानंप्रकृतिजंचापिमूलनाशेविनश्यति । ततःपरंस्वरूपेणज्ञानेनैवजनार्दनं । वेत्तिमुक्तस्तथात्मानंजीवानन्यांश्चसर्वशइतिमाहात्म्ये ॥२४॥ [२२]बीजंभूतावपिह्यस्यब्रह्माचैवसरस्वती । नरिष्यतोजगत्सृष्टौवटवृक्षादिबीजवत् । स्वकार्यतोमहांतौचगुणतोरूपतस्तथा । पृथिव्युदकवत्तस्माद्बीजत्वंनतुबीजवत् । व्यंजकत्वान्नचाल्पत्वान्महाक्ष्मावद्रमास्मृता । अंडोमहाक्ष्मासंप्रोक्तस्ततःपृथ्व्युदकंतथा । जायतेनित्यशस्तस्माद्भुक्तंभुक्तंनहीयते । तत्राप्युदकवद्ब्रह्मामृद्वचापिसरस्वती । जलाधारायतोमृच्चसर्वत्रापिव्यवस्थिता । अन्यथातुरजोभूतानीयतेवायुनाखिला । अथवासर्वनाशःस्याज्जलाधाराततःस्मृता । वटादिबीजवत्तस्यपुण्यापुण्यमुदीरितं । बाह्योदवच्चाग्निवच्चविष्णुरेवप्रकीर्तितइतिसत्यसंहितायां । श्रियादेरप्याप्यायनत्वाद्बाह्योदवत् । ब्रह्मादेरपिलयकर्तृत्वादग्निवत् । आधारत्वात्सुखदत्वाच्चवायुवत् । अवकाशप्रदत्वाद्व्योमवद्विष्णुः । व्रीह्यादिवत्तुमूलत्वंकर्मणांजगतःस्मृतं । उदवत्पृथिवीवच्चब्रह्मणोवाचएवच । मूलभूव

च्छ्रियश्चैवमूलभूरंडमुच्यते । बाह्योदाभीरखंवत्तुविष्णोर्बीजत्वमिष्यतइतिविश्वसंहितायां । देहेंद्रियमनो
वाक्षुस्थितोभक्त्यादिसाधकः । सुपर्णशेषरुद्रादेरपिब्रह्माचतुर्मुखः । अतोभक्त्यादिकाःसर्वेगुणास्तस्यैवसर्व
गाः । अतिरिक्ताश्चसंपूर्णाःसुपर्णादेःशताधिकाः । सुपर्णादिभिरज्ञातास्तदभीमानवर्जिताः । ब्रह्मणस्तु
पुनःसंतितेषांकर्ताजनार्दनः । तस्मात्सर्वाधिकोब्रह्मागुणैःसर्वैर्नसंशयः । वर्णस्थोवर्णनामासौस्वरस्थःस्वर
नामकः । मनस्थश्चमनोनामातन्नामाचक्षुरादिगः । तस्यसर्वाणिनामानिमुख्यतःकवयोविदुः । तत्स्थान
त्वादिंद्रियादेर्वर्णादेश्चोपचारतः । एवमस्योपचारेणविष्णोःसाक्षात्तुमुख्यतइतिशब्दनिर्णये । कृष्णप्रिया
भ्योगोपीभ्योभक्तितोद्विगुणाधिकाः । महिष्योष्टौविनायास्ताःकथिताःकृष्णवल्लभाः । ताभ्यःसहस्रसमि
तायशोदानंदगेहिनी । ततोप्यभ्यधिकादेवीदेवकीभक्तितस्ततः । वसुदेवस्ततोजिष्णुस्ततोरामोमहाब
लः । नततोभ्यधिकःकश्चिद्भक्त्यादौपुरुषोत्तमे । विनाब्रह्माणमीशेशंसहिसर्वाधिकःस्मृतइत्यंतर्यामिसंहि
तायां । पापद्वेषादिकादोषाअवराणांनसंशयः । भक्त्यादिगुणपूगस्तुपराणामाविरिंचतः । स्वातंत्र्यात्स
र्वदेहेषुस्थितानामपिसर्वशः । स्पृश्यंतेनैवदोषैस्तेगुणदानैकतत्पराइतिविवेके । यदुकिंचेमाःप्रजाःशोचंत्य

मैवासांतद्भवतिपुण्यमेवामुंगच्छतिनहवैदेवान्पापंगच्छतीतिच ॥२२॥ इत्येकादशतात्पर्यैद्वादशः ॥१२॥ [२]धर्मात्पुनःसत्वोद्रेकः । सत्वोद्रिक्तयाबुध्यापुनःसत्वोद्रेकात्पुनर्धर्मोद्रेकः ॥२॥ वेदोवृत्तिज्ञानं । मुक्ताश्चाधीयतेवेदान्जडज्ञानबहिष्कृताः । स्वरूपभूतज्ञानेनपश्यंतःसर्वमंजसेतितात्त्विके ॥७॥ प्रश्नोबीजमस्येतिप्रश्नबीजंपरिहारं। गुणानांचेतसश्चकर्मकारणमितिमन्वानःकर्मधीः। ब्रह्मापृष्टस्तुयोगींद्रैःसनकाद्यैर्मनोगतेः। कारणंविषयेष्वद्धाकर्मेतिप्रत्यपद्यत । हेतुरन्योपितत्रास्तीत्येवंजानन्नपिप्रभुः । विशेषतोमनस्तत्रनाधाज्ज्ञानन्हरेःप्रियं । स्वात्मनापरिहारोक्तिस्तदाह्यासीद्धरेःप्रिया । अतःसतत्प्रियंजानन्नाकरोत्तद्विचारणं । तमेवाचिंतयद्देवःप्रश्ननिर्णयकारणात् । भ्रमतीवमनःक्वापिब्रह्मणोविष्णुमायया । सर्वज्ञस्यापितत्रात्मावक्तुमिच्छेज्जनार्दनः । तज्ज्ञात्वाचिंतितंतस्याचिंतयत्यमुमेवतु । नस्वयंचिंतयत्यर्थंसहितद्भाववित्सदा । अन्येत्वज्ञानसंयुक्तामोहमीयुर्यथाक्रमं। तस्यमध्यंदिनेसूर्यक्षोभवत्क्षोभमात्रकं। नैवाज्ञानंयथासूर्येतमोनास्तिकदाचनेतिभावविवेके ॥१८॥ [२२]आत्मनोवस्तुनःपरमात्मवस्तुनएकत्वंयद्यंगीकृतंतदाकथंप्रश्नोघटेत ॥२२॥ नहिपरमात्मनोन्योब्रह्मणापूज्यःस्यादभिवंदनादिना । यस्माद्ब्रह्मणोवंद्यःपरमात्मैवसचैकएवअतःकथंप्रश्नः

परिहारोवा । वस्तुतःसमानेषुहिरण्यगर्भावरत्वात्तद्वंद्यत्वाभावापेक्षया । तस्माद्ब्रह्मणोवंदनानंतरंविचारोन घटते । तस्मात्कोभवानितिवाचाप्रारब्धःप्रश्नोनिरर्थकः ॥२३॥ यस्मान्मनआदिभिर्गृह्यमाणमहंनभवाम्येव स्वयमपिप्रसादात्कथंचिद्गृह्यतइत्यतआह । मत्तोन्यदिति । यन्मनआदिभिर्विचार्यमत्तोन्यत्वेनैवज्ञायते । त दहंनभवाम्येवेतिबुध्यध्वं । विचारितस्यापिपुनःसंशयकारणंपरिकल्प्यसंशयोनकर्तव्यः । अतःकोभवानि तिनारब्धव्यः । गुणेष्वाविशतेचेतइत्येवप्रश्नआरब्धव्यः । नयुष्माकंमयिप्रश्नोघटतेऽयंकथंचन । मामृते नहिवंद्योस्तिविरिंचेःक्वापिकश्चन । अभिवंदितपादंमांविरिंचेनकथंपुनः । पृच्छथान्येसमायस्मादवरत्वेच तुर्मुखात् । देवामनुष्याःपितरोगंधर्वाअसुरास्तथा । इतिपंचात्मकंसर्वंब्रह्मणस्त्ववरंयतः । यन्मदन्यद्विचा रेणगृह्यतेतन्नचास्म्यहं । इतिजानीध्वमद्धैवमत्प्रसादाद्विमदृशिः । अन्यत्स्वभावतोदृश्यंममप्रेरणयैवतु । तस्माद्विवक्षितार्थेतुप्रश्नारंभोनमद्गतइतितंत्रभागवते । इदंहिसर्वंभगवानिवेतरइतिच । प्रकृतेर्व्यतिरिक्तो यःपुरुषश्चेतिकथ्यते । तंविद्यात्परमात्मानंवासुदेवेतियंविदुरितिभारते । प्रकृतेःप्राकृताच्चैवव्यतिरिक्तंगु णाधिकं । येविदुःपरमात्मानंतेयांतिपरमंपदमितिच । नैतदिच्छंतिपुरुषमेकंकुरुकुलोद्वह । बहूनांपुरुषा

भागव०
॥११५॥

तात्पर्य०
११।१३

णांहियथैकायोनिरुच्यते। तथातंपुरुषंविश्वमाख्यास्यामिगुणाधिकमितिच ॥२४॥ मय्येवात्मामनोयस्यसम
दात्मातस्योभयंदेहेदग्धमभवत् ॥२५॥ मत्स्वरूपेतदुभयंत्यजेत् । मयिस्थिताश्चेतोगुणाश्चेति । विष्णुस्था
विषयाःसर्वेविष्णावेवमनोमम । इतिमय्यर्प्यतत्सर्वंत्यजेत्तत्तन्नबाधतइतिसाम्ये ॥२६॥ [२७]गुणचेतसांत्यागएव
बंधत्यागः ॥२८॥ [२९]भिन्नंस्यत्वेकभावेनतथैकस्यचभेदतः । ज्ञानंनानार्थधीःप्रोक्तानानात्वादर्थतद्धियोरिति
ब्रह्मतर्के ॥३०॥ अभिदाकिंकृतेतेषांभावानांपरमेश्वरे । यतोसत्वमशक्तत्वाद्भावानांतस्यशक्तता । ततः
सत्वंसाधुभावःसत्वमित्युच्यतेबुधैः । साधुभावश्चशक्तस्यततोन्यासाधुताततः । अभेदेजगतोविष्णोर्यावा
चोयेचहेतवः । स्वप्नजाग्रत्कल्पकवत्सर्वेतेभ्रमदर्शिताइतिशश्वत्संहितायां ॥३१॥ दक्षिणाक्षिस्थितोविष्णु
र्भुंक्तेर्थान्जाग्रदास्थितान् । कंठसंस्थस्तथास्वप्नान्जीवानंदंचसुप्तिगः । श्रुत्यन्वयात्स्मृतिभ्यश्चसएकःपरमे
श्वरः । अस्वतंत्रस्यजीवस्यस्वतंत्रोजाग्रदादिदः । स्वयंस्वप्नादिहीनःसन्क्रीडतेपुरुषोत्तमइतिसतत्त्वे । स्वप्ने
नशारीरमभिप्रहत्यासुप्तःसुप्तानभिचाकशीतीत्यादिच ॥३२॥ [३३]जाग्रदादिषुपरमात्मभेदंविभ्रमंवीक्षेत । जाग्र ॥९०२॥
दादिकरोदेवःपरमात्मैकएवतु । इतिवीक्षेतसततंमुच्यतेसंसृतेरतइतिप्रकाशसंहितायां । यदाविभ्रमोय

मितिदृष्टस्तदैवविनष्टः । श्रुतियुक्तिभिर्विचारितेऽतिलोलः । क्षिप्रंविनश्यतीत्यर्थः । अलातस्यचक्राकारत्वभ्रमवत्परमात्मभेदभ्रमः । त्रिगुणैस्तत्कार्यैःपापादिभिश्चबद्धःसन्विज्ञानरूपंपरमात्मानंभ्रांत्याबहुधापश्यति । देहभेदेष्ववस्थासुप्रादुर्भावेषुचैकत्वं । ज्ञानानंदैकसद्रूपंभ्रांत्याभिन्नंप्रपश्यति । साचभ्रांतिर्विनश्येतयदाभ्रांतित्ववेदनं । अतिक्षिप्रंविनश्येच्चनस्थिरंदिग्भ्रमादिवत् । त्रिगुणैर्बंधिताजीवाज्ञप्तिमात्रंजनार्दनं। पश्यंतिबहुधास्वप्नेयथैकंबहुधाक्कचित् । अभिन्नोपिविभिन्नेषुव्यवहारोयथाभवेत्। तथैवव्यवहारायशक्तत्वान्नैवदूषणं । ईशस्यतुतदन्येषामपियच्छक्तिदायकइतिब्रह्मतर्के । अलातभ्रामकोयदानिवर्ततेतदैवभ्रमोनिवर्तते । तद्वद्यदाभ्रमनिवृत्तिमिच्छतितदैवगुरूपसदनान्निवर्तयितुंशक्यः । अशक्योप्यतिशक्योयंविनिवर्तयितुंभ्रमः । ईशस्थोगुरुसंपत्त्यायदिशुद्धमनाःपुमानितिसम्यग्ज्ञाने ॥३४॥ निपातमंधंतमःमोक्षमारभ्यतावत्पर्यंतंस्मृतिर्यस्माज्ज्ञानिनोवर्ततेअतोमूढेषुस्थितोभ्रमोयद्यपिसंदृश्यतेतेनतथापिभ्रमायनभवति । फलंहिनिपातंस्मरति ॥३५॥ त्रिगुणसर्गकृतोविकल्पइत्युक्तंज्ञानिनोपिदेहवत्त्वेनत्रिगुणित्वाद्विकल्पोभवतीत्यतआह । देहंचनश्वरमिति ॥३६॥ आदरोभजनंभक्तिर्बहुमानंचसेवनं । पर्यायवाचकाःसर्वेस्मृति

स्तज्जन्मकर्मचेतिशब्दनिर्णये ॥३७॥ अंपूर्णगुणरूपास्तुसंपूर्णगुणरूपकं । भजंतिपरमंब्रह्मदेवास्त्रिगुणवर्जि
तमितिकालसंहितायां ॥४०॥ इत्येकादशतात्पर्येत्रयोदशोऽध्यायः ॥१३॥ रुद्रमिंद्रंकुमारंचविनैवान्या
ग्रजोमनुः । ब्रह्मपुत्रेष्वादिसृष्टावन्यथात्वंपुनर्जनेरितिस्कांदे । पूर्वसृष्टौपूर्वजायेतेधिकाःसर्वतोगुणैः । अ
नाद्यनंतकालेषुमुक्तावपियथाक्रममितिनिबंधे ॥४॥ अनेनपारंपर्येणकेषांचिदेवदेवादीनां ॥८॥ मद्भक्ति
वर्जितंश्रेयोयेमन्यंतेदुराशयाः । तेषामंतेतमोघोरमनंतंप्राप्यतेध्रुवमितिमान्यसंहितायां ॥११॥ कृपानिमि
त्तायाप्रीतिर्नीचभक्तेषुसाधिका । आंतरेवतुयाप्रीतिःसातूच्चेषुयथाक्रमं । यथाकश्चित्स्वमात्मानंप्रियंपुत्र
मथापिवा । अतिहायकृपायुक्तोभिक्षेवन्नंददात्यपि । कदाचिदेवनपुनःस्वात्मादेःसार्वकालिकं । योगक्षेमव
हत्वंचनित्यंस्वात्मादिषुस्फुटं । एवमेवपरेशस्यभक्तेषुश्रियजादिष्वितिप्रियविवेके । यादवेभ्यश्चसर्वेभ्यउद्ध
वोभगवत्प्रियः । उद्धवाच्चप्रियतमःप्रद्युम्नस्तुमहारथः । तस्मादपिप्रियतमोरामःकृष्णस्यसर्वदा । नैवतस्मा
त्प्रियतमोविनैकंतुचतुर्मुखं । सर्वेभ्योपिप्रियतमाहरेःश्रीरेववल्लभा । नैवतस्याःप्रियतमोविनास्वात्मानमे ॥९०३॥
वत्वितियादवाध्यात्मे ॥१५॥ स्वांघ्रिरेणुभिस्तंशोधयामीत्यनुव्रजामि । अनुगच्छतिविष्णुस्तुस्वभक्तंतस्य

शुद्धये । तस्यांघ्रिरेणुभिर्वातनीतैरग्रेसरैःशुचिः । अग्रतोगमनेविष्णोःपदास्पृष्टंरजोभवेत् । अतःस्वभक्तं पूयेयेत्यनुव्रजतिकेशवइतिसंख्याने ॥१६॥ चित्तंद्रवस्तथास्थैर्यंप्रसादोभक्तिलक्षणं । आधिक्येनतुतत्रापि स्थैर्यमेवविशेषतः । दंभस्यचलभक्तेश्चयस्मादश्वादिकंभवेत् । दंभादिपरिहारार्थंनिगृह्णीयाच्चधीरधीः । अ तआध्यात्मिकक्लेशैराधिभूताधिदैविकैः । वाक्यैश्चवेदतंत्राद्यैरुपदेशैश्चतादृशैः । बलवच्छासनैर्वापियस्य भक्तिर्नचाल्यते । सएवपरमोभक्तोविष्णोर्हृदयवल्लभइतिभक्तिविवेके ॥२४॥ केशवेत्वन्यथाबुद्धिःसैवस्त्री संप्रकीर्तिता । त्रिकालदुःखदत्वेनपुंसासहनिवासनात् ॥२९॥ जुष्टत्वाद्योषिदित्युक्तावननाद्वनितेतिच । प्रमादकरणत्वात्तुप्रमदेतिचगीयते । त्यजेत्तत्संगिनांसंगंबुभूषुःपुरुषःसदा । नतादृशःक्वचिद्दोषःपुरुषस्यासु खावहः । क्षुद्रपापानिपापानिचोपपातकपातके । महापातकनामानिसुमहापातकान्यपि । तथास्वतिमहांतीति पातकानिविदोविदुः । पिपीलिकवधादीनिक्षुद्रपापोदितानिच । पापमस्थिमतांहत्याफलचौर्यादिरेववा । परदारादिकंचापिह्युपपातकसंज्ञितं । पातकंशूद्रहत्यादिब्रह्महत्यादिकंमहत् । देवस्वहरणादीनिसुमहांति विदोविदुः । देवावज्ञासतांचैवततोपिसुमहत्तरा । महन्महत्तरातस्मादवज्ञाकेशवेतुया । केशवस्यसमोस्ती

तिकेशवोस्म्यहमित्यपि । ब्रह्माद्याःकेशवात्मानःश्रीर्वानिर्गुणइत्यपि । मुक्तस्यतद्भावमतिररूपत्वमतिस्त
था । त्रिगुणात्मकदेहोस्याप्यस्तीत्यपितुयामतिः । जन्ममृत्यादिबुद्धिर्वादुःखज्ञानादिसाधनं । तस्यापिप
रतंतत्वविज्ञानंचतदुत्तमः । अस्तीतियामतिस्तस्यवशादन्यस्यकस्यचित् । अस्तीतिभावनेत्याद्याअवज्ञासंप्र
कीर्तिताइतिधर्मविवेके । अवजानंतिमांमूढामानुषींतनुमाश्रितं । अपिचेत्सुदुराचारोभजतेमामनन्यभा
गित्यादिच । बाध्यमानोपिमद्भक्तइत्यादिच । परदारदृशिःप्रोक्ताक्षुद्रपातकसंज्ञिता । उपपातकंतद्गति
श्रवर्णबाह्येषुपातकं । महापातकसंज्ञंतुपित्रादेर्दारधर्षणं । दारदृष्टिःस्वोत्तमानांमानुषाणांस्वभावतः । सु
महापातकंप्रोक्तंतद्गतिःसुमहत्तरा । ऋषिदारेषुमनसोगतिरेवततोधिका । देवदाराभिकामानांसंगिसंगस्त
तोधिकः । किमुविष्णोस्ततोयोषित्संगस्यव्यत्ययस्थितेः । नसमंपातकंक्वापिनहिस्वस्त्र्यभिगामिनः । अव
ज्ञाताभाधवादेस्तस्मात्तंदूरतस्त्यजेत् । मानुषेषुतुदुःखित्वंक्षुद्रपापफलंस्मृतं । पापात्तुवर्णबाह्यत्वंतिर्यग्यो
निगतिस्तथा । सहस्रवर्षनरकंक्षुद्रपातकजंफलं । उपपातकतश्चापिनरकंयुगमात्रकं । चतुर्युगावसानंतु
पातकस्यफलंस्मृतं । महापातकजन्यंचकल्पावधिसमीरितं । सुमहापातकाच्चापियावद्ब्रह्मलयोभवेत् । तत्प

राणांपातकानांफलमंधंतमःस्मृतं । अधोधोदुःखबहुलंविष्णुदाराभिमर्शनात् । वधादपिस्वदाराणांधर्षणं
कोपकारणं । तस्माद्देव्यःसदावंद्याअभिवन्नाभिकामतइतिधर्मतत्त्वे ॥३०॥ उँपास्यप्राणतोनुज्ञांहृदिस्थात्प्रा
प्यसेवकः । अनुज्ञानंतरंमासाद्धशेप्राणोभविष्यति । प्रसादभाक्त्वंसंप्रोक्तंप्राणविष्णवोर्जयस्त्विति । नहि
सर्वविजेतारौविजेयौकेनचित्क्वचित् । अपेक्षितंफलंयेनदीयतेतज्जितंत्विति । यथाजितावसुमतीयथामो
क्षपदंजितमितिप्रभंजने ॥३५॥ व्योमेतिव्योमशब्दःस्याद्विशेषादोततायतइतिशब्दनिर्णये । व्योम्निधारये
त् । सर्वांगेषुधारयेदित्यर्थः । तच्चधारणंत्यक्त्वास्वतएवमनसस्तत्रैवसमाहितत्वादन्यत्किमपिनचिंतयेत् ।
यावत्समग्रस्मरणमचलंकेशवेभवेत्।समग्रंचिंतयेत्तावद्यदातुविचलेत्ततः । प्रत्यंगंधारणंकुर्यान्मनोयावत्सम
ग्रगं । प्रत्यंगाभ्यासतोयावत्समग्रेसुस्थिरंमनः । तदापुनःसमग्रंतुधारयेद्यत्नतोबुधः । यदातुधारणोत्साहं
विनातत्राचलंमनः । तिष्ठेत्त्यक्त्वातमुद्योगंशंखचक्रांबुजांकिते । आरूढचेताःपरमेशृंगाराद्येकधामनि । नै
वान्यच्चिंतयेत्तस्मात्पूर्णानंदाच्चतुर्भुजात् । यतोन्यस्मरणेतस्मान्मनश्चलतिसुस्थिरं । धारणार्थप्रयत्नेनतस्मा
त्तदुभयंत्यजेत् । यावत्स्वारूढचेताःस्याद्विष्णोरूपेचतुर्भुजइतिध्यानयोगे ॥४४॥ परमात्मानंमांस्वदेहेपश्य

 

ति । जीवंज्योतिर्मयिसंयुतंपश्यति । समाधियोगेसंपूर्णेहृदिपश्यतिकेशवं । जीवंतत्प्रतिबिंबंचतेनैवसह
संस्थितं । तदाधारंतदंतस्थंतेनैवसदृशंतदा । आनंदज्ञानशक्त्याद्यैःसदातदवरंगुणैः । जीवन्मुक्तौचमु
क्तौवासततंतद्वशेस्थितमिति । स्वयंप्रकाशरूपत्वाज्जीवोपिज्योतिरुच्यतइतिचतत्त्वप्रतिपत्तौ ॥४५॥ द्रव्य
ज्ञानक्रियाविषयेभ्रमरूपंमनोलयंयाति ॥४६॥ इत्येकादशतात्पर्येचतुर्दशोऽध्यायः ॥१४॥ मय्येवप्राधान्ये
नसंतिअन्येषूपचारतइतिमत्प्रधानाः । सर्वाधिकाअणीमाद्याविष्णोर्नान्यस्यकस्यचित् । स्वाभाविकावि
रिंचस्यतत्प्रसादात्पराधिकाइतिस्वाभाव्ये । गुणभूतानामन्यासामपिसिद्धीनांताएवहेतवः । स्वतस्तास्वेवा
ष्टस्वन्यासामंतर्भावात् । निःसीमाष्टगुणाभावात्सिद्धयोष्टादशस्मृताः । देवेभ्योन्यत्रदेवानांसिद्धयोष्टैवसंम
ताइतिप्राकाश्ये ॥३॥ शक्तिप्रेरणमेवेशितृत्वंअसंगएववशित्वं । यादृशानंदकामःस्यात्तादृशानंदसंभवः ।
भोगान्विनैवप्राकाम्यमणिमादेःपृथक्कृततइतिच ॥४।५॥ अनूर्मिमत्त्वंप्राकाम्येंतर्भूतं । दूरश्रवणदर्शनंत्रि
कालज्ञत्वं । परचित्ताद्यभिज्ञताचप्रकाश्यांतर्भूतानि । मनोजवइत्यादिषट्कंप्राप्त्यंतर्भूतं । अन्यत्सर्वमीश ॥९०५॥
त्वांतर्भूतमपिपरमेशत्वाभावेपृथगित्यष्टादश । अग्न्यर्कांबुविषादीनामित्यादिशब्दोक्ताःशस्त्रास्त्रनखदंत

ताडनशापादिभिरप्रतिहतिःपृथगेवसिद्धिःसप्तदशी । अप्रतिहताआसमंताद्गतिर्यस्याआज्ञायाःसाऽप्रतिहतागतिः। अद्वंद्वमप्रतिहतंत्रिकालज्ञत्वं। अग्न्यर्कांबुविषाणांप्रतिस्तंभाश्चतस्रःसिद्धयः । दूरश्रवणदर्शनेद्वे सिद्धी । गरिम्णःसैवहेतुःस्यान्महिमाहेतुधारणा । प्रायोष्टसिद्धिकथनेष्वतोनपृथगुच्यतइतिच । प्राप्तिप्राकाश्ययोश्चापिधारणैकापिसंभवेत् । अतऐक्येनतावुक्तागरिमाणंपृथक्क्वचिदितिच । दूरश्रवणदर्शनेद्वे सिद्धी । मूलभूतास्तुसिद्धीनांदेवानामष्टसिद्धयः । सर्वसिद्धिप्रधानास्तास्तज्जाअष्टादशस्मृताः । अष्टस्वंतर्गतास्तास्तुतदपेक्षतयाल्पकाइतिच । कामरूपत्वस्याणिमादित्रयेप्यंतर्भावोष्टसिद्धिपक्षे । अग्न्यर्कस्तंभएकैव सिद्धिः। अदाहत्वात् । अग्न्यादिप्रतिस्तंभस्यवशित्वेपि । अनूर्मिमत्त्वाद्यष्टादशपृथक्सिद्धिपक्षेग्न्यर्कस्तंभयोः पृथक्त्वं । तस्मिन्पक्षेतासांसकाशात्प्रधानाष्टौमत्प्रधानाइतिव्याख्या । अनूर्मिमत्त्वसिद्धिस्तुप्राकाम्यांतर्गतामता । दूरश्रुतिर्दूरदृष्टिस्त्रिकालज्ञत्वमेवच । परचित्ताद्यभिज्ञानंप्राकाश्यांतर्गतानिच । अणिमादित्रयांतश्चकामरूपत्वमिष्यते । अग्न्यर्कांबुविषादीनांप्रतिस्तंभोवशित्वतः । मनोजवःकामरूपंपरकायप्रवेशनं । स्वच्छंदमृत्युतादेवैःसहक्रीडेष्टसाधनं । प्राप्तावंतर्गतान्याहुराज्ञाप्रतिहतिस्तथा । अग्निस्तंभोरविस्तंभउदकस्तं

भएवच । विषस्तंभस्तथाशस्त्रशापादिस्तंभएवच । ईशत्वांतर्गतान्याहुरपराजयएवच । एवमष्टादशाष्टभ्यो
जायंतेसिद्धयःक्रमात् । अष्टादशभ्यश्चान्यास्तुजायंतेसिद्धयोऽमिताः । अनूर्मिमत्त्वंदुःखस्याभावमात्रमु
दाहृतं । यथेष्टानंदसंप्राप्तिःप्राकाम्यमितिकीर्त्यते । दुःखाभावोपिप्राकाम्येनेतरेसुखितेष्यते । प्राकाश्यंस
र्ववेदादिज्ञानमेवविदोविदुः । सहस्रयोजनांतेतुदूरदर्शनमिष्यते । दूरश्रवणमप्येवंतस्मिन्नेवयुगेस्थिते ।वेदा
दिकंविनाप्रोक्तात्रिकालज्ञानिताबुधैः । शरीरस्थंविनादेहेपरचित्ताद्यभिज्ञता । अन्येंद्रियैर्दर्शनादियथासं
कल्पवेगिता । प्राप्तिरित्युच्यतेसद्भिःस्वमनःसमवेगिता । मनोजवइतिप्रोक्तःपश्चाद्याकारतातथा । काम
रूपत्वमुद्दिष्टंस्वदेहत्यागतःपरे । परकायप्रवेशःस्याद्युगादर्वाक्तनास्मृता । स्वच्छंदमृत्युतादेवैःक्रीडाचें
द्रादिभिर्विना । यथासंकल्पसिद्धिश्चाप्यन्नपानसुतादिषु । चक्षुर्दृश्येष्वणुत्वंतुअणिमासंप्रकीर्तितः । महि
माचापिसंप्रोक्तस्त्रिलोकांतरपूरणात् । चक्षुर्दृश्यैर्विवाह्यत्वंलघिमाचापिकीर्तितः । त्रिलोकसमभारस्तुग
रिमाचापिकीर्तितः ।पूर्वशक्तेःकोटिगुणशक्त्युद्रेकस्तथेशता । भुविस्थैःप्राणिभिश्चोक्तकरणंचापिकीर्त्यते ।
आज्ञाऽप्रतिहतिर्ब्रह्मादर्वागस्त्रविघातनं । विनामहातपस्वींश्चशापाप्रतिहतिःस्मृता । अपराजयोमनुष्ये

भ्योवशित्वंचाप्यलोलता । दाहादिसहनंचापिप्रतिस्तंभइतीर्यते । इतिषड्विंशतिःप्रोक्तागरिम्णासहसत्त्वा । विंशतिश्चसुरेभ्योन्यदेवेष्वष्टैवसिद्धयः । यतोनिःसीमकास्तेषांदेवानामष्टसिद्धयः । अतोष्टादशसिद्धीनांतदंतर्भावइष्यते । देवेष्विंद्रेशवायुश्रीविष्णूनामुत्तरोत्तरं । सिद्धयःपरिपूर्णास्तुविष्णोरेकस्यनान्यगाइत्यैश्वर्ये । श्रुतेषुतुयथायोगंक्षिप्रग्रहणमेवतु । उक्तंप्राकाश्यमन्येषांदेवानामश्रुतेष्वपि । ऋषीणांमिश्रभावेनभासतेकिंचिदश्रुतं । विषयेभ्योधिकसुखव्यक्तिःप्राकाम्यमेवतु । इतरेषांसुराणांतुनिःसीमानंदभोजनं । एवमेवतुनिःसीमादेवानामष्टसिद्धयः । उत्तरोत्तरमत्रापियावद्विष्णुःसुपूर्णभुगितिहरिवंशेषु । अग्न्यादिशक्तिसंस्तंभस्त्वग्न्यादिस्तंभइष्यतइतिकौर्मे । एकस्मात्सिद्धयोविष्णोःस्थानभेदात्पृथग्विधाः । एकस्थानगताद्वास्युःसुस्थिरोपासनायदीतिभारते ॥६-८॥ भूँतसूक्ष्माणामात्मनिपरमाणुस्थितेणुरूपे । तन्मात्रावयवेसूक्ष्मेपरमाण्वभिधानके । प्रत्येकमणुरूपंतुविष्णुंध्यायन्नणुर्भवेदितिकापिलेये । आकाशवत्सूक्ष्मतांयोव्यापित्वेनैवमन्यते । तन्मात्रव्यापिनंविष्णुंचिंतयन्सतथाभवेदितिच ॥१०॥ महतिव्याप्ते । महत्तत्त्वस्यपृथगुक्तेः । अस्मात्स्थूलतांप्राप्नुवानीत्यपेक्षायांतस्मात्प्राप्नोति । ततोन्यस्मादित्यपेक्षायांतस्मादितिपृथ

 

कपृथक् ॥११॥ परमाणुमयेभूतानांसकाशादतिशयेनाणुरूपे । कालसूक्ष्माणामात्मनि ॥१२॥ अहंतत्त्व
स्थितेमयि ॥१३॥ सूत्रेस्थितेमयि । गृहेपीठइतिवत् । अव्यक्तजन्मनः अव्यक्तस्यापिकिंचित्स्थूलत्वकर्तुः ।
तस्माद्व्यक्तमुत्पन्नंत्रिगुणंद्विजसत्तमेतिमोक्षधर्मेषु । अजरादमरादमूर्तितःशाश्वततमसइतिच । अव्यक्त
स्याजन्मवतोविकारोजनिरुच्यतइतिहरिवंशेषु । मेसकाशाद्विंदते । परमेष्ठिप्रसादादन्येषांभवतीतिपार
मेष्ठ्यं । सर्वगुणानांज्ञानमूलत्वादुपलक्षणत्वेनप्राकाश्यंपारमेष्ठ्यमित्युक्तं । सर्वेगुणास्तुप्राणस्यपरमात्मप्रसा
दतः । प्राणविष्णवोःप्रसादेनभारत्याःसंप्रकीर्तिताः । प्रसादात्तुत्रयाणांवाप्यनंतादेःसदागुणाइतिमाहात्म्ये
॥१४॥ सर्वत्राधीश्वरत्वादौविद्यमानेपितत्रतत्रोक्ताधीश्वरत्वादिगुणविशिष्टत्वेनतत्रतत्रोपासनमितिविशे
षः । तंयथायथोपासतेतदेवभवतीतिचश्रुतेः । उपासतःसत्यइतिसत्यसंकल्पताभवेत् । ईशत्वमीश्वरइति
गुणवंतंयथाहरिमितिविशेषे ॥१५॥ शुद्धःश्वेतःसुखीश्वेतःश्वेतवर्णःक्वचिद्भवेदितिशब्दनिर्णये ॥१८॥ आ
काशस्यात्मनि तत्राकाशे । उपलब्धानांआसमंतात्स्थितानांभूतानांवाचः । हंसोजीवः । त्यागात्पूर्वशरीरा
णांनवानांसंचयेनच।जीवंहंसइतिप्राहुस्तद्धेतुत्वाद्धरिंपरमितिभारते॥१९॥मेनसिमनस्तत्त्वे वायुनासंयोज्य

मनोनुदेहं मनस्तत्त्वेमद्धारणा ॥२१॥ गजादिरूपमाकांक्षन्गजादिस्थितमीश्वरं । ध्यायन्गजादिरूपःस्या
त्पश्वाद्याकारतातथा । कामरूपत्वमुद्दिष्टं ॥२२॥ स्वदेहत्यागतःपरे । परकायप्रवेशःस्यात्परकायस्थितंहरिं ।
ध्यायन्विशेत्परेकायेवायावंतर्गतःपुमान् । प्राणनामाहरिःप्रोक्तस्तस्मिन्वायुःसमाश्रितः । वायावंतर्गतो
जीवोदेहाद्देहंप्रयास्यति ॥२३॥ षडाधारस्थितंविष्णुंध्यायन्नायुःक्षयंविना । यदिमृत्युमभीप्सेततथाप्राप्नो
त्यसंशयं ॥२४॥ त्रिकालप्रेरकंविष्णुंध्यातुःकालत्रयज्ञता ॥२८॥ अग्न्यादिषुहरिंध्यायन्तत्प्रतिस्तंभकोभवे
दितिहरिसंहितायां ॥२९॥ आत्मानंपरमात्मानंतत्रतत्रपरकायेभावयेत् । तदावायौस्थितः । प्राणःपरमा
त्मातत्रगच्छतितमनुजीवोपिगच्छति । वायौभूतोवायुभूतः ॥२३॥ प्राणंपरेब्रह्मणिनीत्वा । प्राणस्थंप्राण
नामानंबहिष्ठेब्रह्मनामके । विष्णुंविष्णावनुस्मृत्यविसृजेद्देहमंजसेतिप्रभंजने । अनेयस्यहरेर्नीतिस्तद्गतस्य
हरेःस्मृतिः । नहिनेयःक्वचित्कापिकेनचित्स्ववशत्वतइतिच ॥२४॥ मेमभावनामद्भावः । भावोमनश्चभ
क्तिश्चक्वचिद्भ्यासइष्यतइतिशब्दनिर्णये ॥२७॥ उपासनयाऽपरोक्षंकृतवतःपुनरुपासनंकार्यकालेकुर्वतः
कार्यसिद्धिरित्यतोयोगधारणयापुनरित्युक्तं ॥३१॥ उपास्यवायुंप्रथमंवायौसुष्ठ्वपरोक्षिते । अनुज्ञातस्ततस्त

द्रंतत्रतत्रहरिंस्मरेत् । कृत्वापरोक्षंतंचापिकालेकालेस्मरेत्पुनः॥अभीष्टकार्यसिद्धिःस्यात्तस्यनास्त्यत्रसंशयः ।
अकामोयदिवायुंचध्यात्वादृष्ट्वाहरिंतथा । नकिंचित्कामयेत्पश्चात्सक्षिप्रंमुक्तिमेष्यति ॥३२॥ यदियोगैः
फलंभुङ्क्तेपुनःकाममपास्यतु । तेनैवक्रमयोगेनवायुंदृष्ट्वाहरिंतथा । एष्टव्यामुक्तिपदवीनान्यथातुकथंचन ।
पूर्वदृष्टिर्हिकामार्थेपश्चान्मोक्षार्थमिष्यते । येषांतुजन्मतःसिद्धिस्तेषांदोषोनविद्यतइतिनिवृत्ते ॥३३॥ यैर्यैः
कैश्चित्कैश्चिदेवजन्मादिभिःयोगगतिंव्रजेत् । जन्मादिभिःकैश्चिदेवप्राप्यतेयोगजंफलं । योगेनसर्वंप्राप्ये
तयोगेयत्नंततःकुर्विंतिच । कश्चिदर्थेचयच्छब्दःप्रश्नार्थेचक्वचिद्भवेत् । क्वचित्परामर्शवाचीक्वचिदाक्षेपवा
चकइतितंत्रनिरुक्ते ॥३४॥ इत्येकादशतात्पर्येपंचदशोऽध्यायः ॥ १५ ॥ सृष्टिस्थित्यादिहेतुत्वाद्भूतानिह
रिरुच्यते । नतुभूतस्वरूपत्वात्सहिसर्वेश्वरेश्वरइतिवस्तुतत्त्वे ॥१॥ स्वस्वजात्युत्तमत्वंतुभवेद्यद्रूपसन्निधेः ।
विभूतिरूपंतत्प्रोक्तमिंदिरादिषुसंस्थितं । तथाबहिस्थितंरूपंविभूतीत्येवशब्दितं । सर्वसाधारणंरूपमंतर्या
मीतिचोच्यते । यथाकृष्णात्मनादुष्टहंताव्यासात्मनासमः। असमोप्येकरूपोपिसामर्थ्यात्पुरुषोत्तमइतिच ।
ब्रह्मरुद्रेंद्रजीवेभ्यःपृथगेवव्यवस्थितं । विभूतिरूपंविष्णोस्तुतद्धश्रेष्ठ्यैककारणं । तदेवब्रह्मरुद्रादिनामभिर्वा

च्यमंजसा। तदेवदेवेर्ष्विंद्रोस्मितथारुद्रेषुशंकरः। इत्यादिनोक्तंकृष्णेननेंद्राद्याजीवसंचयाइतिगीताकल्पे। गतिर्ज्ञानं। प्रधानोज्ञानिनांब्रह्माज्ञानमानीहृदिस्थितः। सएवकालमानीतुसंहर्तृणांप्रभुःस्मृतइतिविभूतौ। आनंदानुभवस्तूमउत्कृष्टानुभवात्स्मृतः। तद्युक्तत्वंतथासौम्यंगुणानामधिकंहितत्। भक्त्यादिगुणपूगोपिदुःखहेतुत्वभावनात्। निष्फलोभवतिह्यद्धाप्रीतस्यसफलोभवेत्। तस्मादानंदमानंतुगुणेषूत्कृष्टमुच्येत। तस्याभिमानीब्रह्मैकोभक्तिज्ञानादिकस्यच। श्रद्धाभिमानिनीदेवीतथैवतुसरस्वती। तदन्येषांगुणानांतु तदन्येविबुधाःस्मृताः। गुणानांतुप्रभुर्ब्रह्मातस्मादेकश्चतुर्मुखः। औत्पत्तिकगुणोनामशुभप्राप्त्यैकयोग्यता। तस्याभिमानीप्राणस्तुसहिसर्वगुणाधिकइतिच। गुणिनांमध्येगुणिनिस्थितमौत्पत्तिकगुणरूपंसूत्रमित्यर्थः। गुणिनांगुणयोग्यत्वंयत्सर्वगुणिषुस्थितं। वायुस्तदभिमान्येकःसर्वगुण्यधिकस्ततइतिप्रभंजने। रूपांतरत्वादेकस्यापिबहुस्थानेषुप्राधान्योक्तिर्नोविरुध्यते। गुणांतरोक्तेश्च रामःशस्त्रभृतां वृष्णीनांवासुदेवइत्यादिवत् ॥१०।११॥ पदानिवाच्यानि छंदसांवेदानां। स्वयूथ्यानामथाधिक्येस्वजातीनामथापिवा। यत्कारणंविभूत्याख्यंविष्णोस्तद्रूपमुच्यतइतिप्राधान्ये। वर्णेशानिपदान्याहुःपादाश्चापितदीश्वराः। पादा

नामीश्वरार्धर्चास्तदीशाऋचएवच । ऋचामधीशावर्गाश्चतेषांसूक्तमधीश्वरं । सूक्ताधीशास्तथाध्यायास्त
दधीशास्तथाष्टकाः । तदधीशास्तथाशाखावेदाश्चापितदीश्वराः । वेदानामीश्वरावाच्यावाच्यानामीश्व
रोहरिः । नहरेरीश्वरःकश्चित्कदाचित्क्वापिविद्यतइतिच । पद्यंतइतिपदानिवाच्यानि । पदंपदसहस्रेणय
श्वरन्नापराध्यतइतिवत् । पदंतुवाचकंप्रोक्तंक्वचिद्वाच्यमपीष्यतइतिशब्दनिर्णये ॥ सर्ववेदाभिमानिन्यो
देव्योलक्ष्मीस्ततोधिका । वेदाभिमानिनीसाक्षात्साविष्णोर्दूरतःस्थिता । यज्ञाख्यासैवविष्णोस्तुयातू
रस्थलमाश्रिता । हरिणारतियोगस्थादक्षिणाख्यापिसैवतु । उत्तरोतरतःसापिविशिष्टादक्षिणासुखे । ए
वंवेदाभिमानिभ्योदेवीभ्यःसर्वएवतु । तदर्थरूपाःपतयस्तस्यास्तस्यास्तथोत्तमाः । शच्याइंद्रस्ततश्चोमात
स्यारुद्रस्ततस्तथा । भारतीप्राणएवास्यास्ततःश्रीस्तद्वरोहरिरितिवैशिष्ये ॥१२॥ ऋतेरुद्रादिकानिंद्रःसर्व
देवाधिकःस्मृतः । ऋतेभीमंफाल्गुनश्चपांडवेभ्योवरस्तथा । तथाशुक्रःकवीशस्तुबृहस्पत्यादिकानृते । य
मःसंयमतामीशःशंकरादीन्विनैवत्विति गीताकल्पे ॥१३॥ गार्हस्थ्यंचयतित्वंचदेवेष्वेकत्वमागतं । प्राधा ॥९०९॥
न्योक्तिर्यतित्वस्यगार्हस्थ्यस्यक्वचित्क्वचिदित्याश्रमविवेके ॥१९॥ वसिष्ठोभ्यधिकस्तेषुमानुषाणांपुरोधसा

मितित्रैकाल्ये ॥२२॥ जीवेशादिभेदवादीविकल्पः । ख्यातिवादिनांज्ञानवादिनां । जीवेशादिविशेषंयो
याथार्थ्येनप्रकल्पयेत् । कलिमारभ्यवाविष्णोराधिक्यादुत्तरोत्तरं । नियमेनैवकेनापिनहेयःसविकल्पकः ।
सर्वज्ञानिविशेषेभ्यःसज्ञानीसर्वथाधिकइतिविज्ञाने । भेददृष्ट्याभिमानेनेत्युक्तं । विद्यात्मनिभिदाबोधइति
चवक्ष्यति ॥२४॥ शांतरूपावरास्त्रीणांपुंसामभ्यधिकोमनुः । तयोरप्यधिकौनित्यमिंद्राणींद्रौशुभैर्गुणैरिति
वैशेष्ये ॥२५॥ ऐश्वर्यादिगुणैःषड्भिःसामग्र्यात्सर्वदेवताः । भगवच्छब्दवाच्याश्चसाक्षात्तुभगवान्हरिः ।
निरपेक्षंतुसामर्थ्यंतस्यसर्वाधिकंयतइतिच । अतोभगवतांदेवानां । सर्वभागवताधीशउद्धवोभगवत्प्रियः ।
तस्मादभ्यधिकोजिष्णुःप्रियत्वेभक्तितोहरेः । तस्मादभ्यधिकोरामःकृष्णात्वभ्यधिकाततः । तस्याअभ्य
धिकोभीमोनतुतत्सदृशःक्वचिदितिच । यत्किंचात्मनिकल्याणंसंभावयसिपांडव । सहस्रगुणमप्येतत्त्वयि
संभावयाम्यहं । धर्मोज्ञानंतथामोक्षोयशःकीर्तिस्तथैवच । त्वय्यायत्तमिदंसर्वलोकस्यापिनसंशयइतिभा
रते ॥२९॥ विष्णोःश्रियोब्रह्मणश्चवायोःसंकर्षणस्यच । सुपर्णस्यचसंप्रोक्ताःप्रत्येकंनवमूर्तयः । पूज्याःसा
त्वततंत्रेषुतत्राद्यामूर्तयोहरेः । प्रधानास्ताहिसर्वासांमूर्तीनांहरिमूर्तयः । अभेदादेवमूर्तीनामेकमूर्तिश्चसा

भागव० स्मृतेतिसहस्रावरणे । श्रियादिनवमूर्तीनांमध्येस्वकीयनवमूर्तिरहमित्यर्थः । स्वरूपतश्चगुणतोनविशेषः तात्पर्य०
॥१२३॥ कथंचन । विष्णोस्तुनवमूर्तीनांपूजाचनवधेष्यतइतिच । अतोस्वनवमूर्तीनामन्येभ्योन्यनवमूर्तीनामपि ११ । १६
प्राधान्यकारणंसन्निधानमात्मनस्तास्वप्यस्तीतिपुरेतिविशेषणं । प्रथमतःपूज्यास्ताइत्यर्थः । नारायणःपरं
ब्रह्मवासुदेवादिकास्तथा । नरसिंहवराहौचपरंज्योतिर्हरेर्नव । इंदिराचरमालक्ष्मीर्हिरण्यागगनातथा ।
रक्तारक्ततराभूतिर्विभूतिश्चश्रियोनव । ब्रह्माचतुर्मुखोधाताविधाताविधिरेवच । कर्ताविरिंचोभूतेशःश
तानंदश्चतानव । धनंजयस्मृतेचैववायोस्तुनवमूर्तयः । शेषोनंतोनरश्चैवलक्ष्मणोबलएवच । संकर्षणोनी
लवासाजगद्रक्षोजलेशयः । सुपर्णोगरुडश्चैववैनतेयोमहाशनः । नववर्णःपंचवर्णःपन्नगाशोमृताकरः ।
तथैवसर्ववेदात्मासुपर्णोनवधास्मृतइतिच ॥३२॥ [३७]यँस्ययस्यस्वभावोयस्तत्तन्नामाहरिःपरः । नियामकःस्व
भावस्यतत्तच्छब्दादिनामवान् । वैशेष्याख्याविभूतिश्चविभूतिश्चस्वभावजा । द्विधाविभूतिर्विज्ञेयाविष्णो
स्तुपरमात्मनइतिच । सत्वादिनामविष्णोस्तुसत्वादिस्थस्यकेवलं । जीवस्थस्यचतन्नामजीवादेरुपचारतइ ॥९१०॥
तिच ॥३७॥ [३९]कालेनसर्वगुणात्मकेनमयाअसंख्यत्वात्तथानक्रियते । नाविज्ञानात् । अनंतमितिवेत्तीशस्त्व

नंतंत्वंतवत्तथा । अनंतस्यहिसंख्यानेनतुसर्वज्ञताभवेत् । अनंतमपिवेत्तीशःप्रत्येकंचविशेषतः । सर्वज्ञ
त्वान्नसंख्यानमसंख्यस्यकुतोहिसेतिच ॥ ३९ ॥ यैंथावाचाभिधीयतेनामादिकंजीवादीनांतेसर्वेशब्दाम
नोविकाराः ॥४१॥ स्वतोमय्येवसर्वशब्दास्तस्मान्मय्येववाचंयच्छ । आत्मानंपरमात्मानंमय्येवलक्ष्यत्वेन
यच्छ ॥४२॥ योमयिनसंयच्छति । तस्यज्ञानंस्रवति ॥४३॥ वाङ्मनःप्राणबुद्ध्यादीन्नियच्छेत्केशवेपरे ।
सर्वशब्दाभिधेयत्वंतस्यज्ञात्वाविशेषतः । मुख्यवृत्त्याभिधेयत्वमन्येषांमनसोभ्रमात् । तस्मात्तथाचिंतयतः
स्रवेज्ज्ञानंयथातथं । तस्मान्मनोवचःप्राणान्माधवैकपरायणान् । कुर्यात्तद्धितपोब्राह्मंमहाधर्मोत्तमश्चसङ्
तिधर्मविवेके । यच्छेद्वाङ्मनसीप्राज्ञस्तद्यच्छेज्ज्ञानआत्मनि । ज्ञानमात्मनिमहतिनियच्छेच्छांतआत्मनी
तिच ॥४४॥ इत्येकादशतात्पर्येषोडशोऽध्यायः ॥१६॥ ॥ विनाप्रसादंविष्णोर्नधर्मंब्रह्माभिवक्ष्यति । तत्प्र
सादेनवक्तुंतुब्रह्माशक्ष्यतिनापरइतिप्राधान्ये । कलाःप्राणाद्याः । सप्राणमसृजतप्राणाच्छ्रद्धांखंवायुर्ज्योतिरा
पःपृथिवीमिंद्रियंमनोन्नमन्नाद्वीर्यंतपोमंत्राःकर्मलोकालोकेषुनामचताइमाःषोडशकलाःपुरुषायणाइतिश्रु
तेः ॥५॥ प्रतिमांवद्धरेरूपंतिर्यङ्नरसुरादयः । साक्षाद्रूपाणिमत्स्यादीन्यभिन्नान्येवसर्वदेतिच ॥५०॥

१५३

इत्येकादशतात्पर्ये सप्तदशोऽध्यायः ॥१७॥ ॥ ॐ संपूज्यन्यसिष्णूंस्तुदेवावैपातयंत्यधः । सुसंपूज्यन्यसि
ष्णूंस्तुदेवाएवानुजानते । अथवातद्यशोवृद्ध्यैविघ्नंतीवपुनःपुनः । तात्पर्याद्विघ्नितोदेवैर्नोत्थातुंशक्नुयात्क
चिदितिदेवहार्दे ॥१४॥ त्रिगुणा[२७]प्रकृतिर्मायातज्जत्वाद्विश्वमीदृशं । अनाद्यनंतकालेषुमायेत्याहुर्विपश्चि
तः । अचेतनत्वान्नैवैतत्प्रयोजकतथास्मरेत् । चेतनत्वंस्वतंत्रत्वंसचैकोविष्णुरेवतु । आयस्तुफलमुद्दिष्टं
प्रोक्तंमायेतिनिष्फलं । फलाल्पत्वात्तुमायैषासंप्रोक्तात्रिगुणादिका । महाफलप्रदत्वात्तुविष्णुरायइतीरित
इतिनिवृत्ते ॥२७॥ वेदे[३०]नसहवादोयोवेदवादइतीरितः । तर्केणवेदस्यान्यार्थकल्पनंतंविदोविदुः । तन्नकुर्या
त्कदाचिच्चतत्कुर्वन्वेदहाभवेदितिच । योगसांख्यकणादाक्षपादावैहेतुवादिनः । पश्वीशशाक्तबुद्धाद्याःपा
षंडाइतिकीर्तिताइतिच ॥३०॥ भू[३३]तानामेकएवात्माथैकोभूतेषुसंततः । एकोभूतानिचादत्तेतस्मादेकात्म
कानित्वितिभद्रमाने । घटादिषुमहाकाशोनिर्विशेषश्चसंततः । घटावयवरूपस्तुतथैवान्योघटानुगः । घट
नाशेप्यनाशःसन्मध्यमाकाशइष्यते । एकदेशाभिमानित्वादित्याकाशास्त्रयःस्मृताः । महाकाशोविघ्नरा
जोविघ्नास्तत्रतुमध्यमाः । क्षुद्रविघ्नास्तदितरएवमात्मात्रिधास्मृतः । महाखवत्परस्त्वात्माजीवामध्यखवत्स्मृ

ताः । घटानुगखवत्प्रोक्ताअसुरानित्यदुःखिनः । महाकाशवशाःसर्वआकाशाइतरेस्मृताः। परमात्मवशे तद्वज्जीवाःसर्वेपिसंस्थिताः। एवंविष्णवात्मकमिदंजगत्पश्येद्यतिःसदेतिविनिर्णये ॥३३॥ स्वँभावतोधर्मपरो नविधेश्शकितश्चरेत् । अल्पंफलंचचकितेस्वभावेफलमुत्तममितिच ॥३७॥ ( विधि ) विरुद्धत्वेनकल्पनंवि कल्पः । निषिद्धंमनसाकल्प्यभीतोविहितमाचरेत् । अज्ञोज्ञस्यतुसंकल्पःस्वभावाद्विहितानुगः । शरीरध र्मिणःक्वापिनिषिद्धेपिमनोव्रजेत् । तथापितस्यनानर्थोमोक्षेचैवान्यथाव्रजेदितिधर्मतत्त्वे ॥३८॥ शुंश्रूषेत्स हितस्तावद्यावज्ज्ञानोदयोगुरुं । ततःपरंचशुश्रूषेद्यथातस्यप्रियंभवेदितिच ॥४०॥ इत्येकादशतात्पर्येअष्टा दशोऽध्यायः ॥१८॥ ॥ त्रिगुणाप्रकृतिर्मायापश्येत्तन्मात्रकंजगत् । निर्मिमीतेजगत्सर्वमतोमायेतिसा स्मृतेतिप्रभवे । इदंज्ञानंहरेःपूजाहरेरेवोदितंसदा । हर्यधीनंचसर्वत्रेत्येवंन्यासोहरौस्मृतइतिच ॥१॥ अँ न्यस्थंनिर्मितंजीवेजन्मादिहरिणायतः । तस्मान्मायेतितत्प्राहुर्मायानिर्माणमुच्यते । नहिजीवस्यजन्मादि स्वतोनित्यस्यसंभवेत् । सृष्टेःप्राक्प्रलयेचैवयतोजन्मादिनास्यहि । तस्मान्मध्येपिनास्यास्तिदेहादिस्थंतुवि ष्णुना । कर्मभिर्निर्मितंजीवेप्रलयेयन्नजीवगं । यन्नविद्येतहिलयेयन्नविद्येतमुक्तिगे । जीवस्यनस्वभावोसौ

प्रायेणेतिविनिश्चितइतिप्रकाशिकाया । मायेत्युक्तंनिर्मितंतुयतोजन्मादिनिर्मितं । देहादिगंपरेशेनमाया जन्मादितेनत्वितिप्रकृते । मांप्रतिवद । तस्यदेहादेर्जन्मादयोस्यचिदानंदरूपस्यतवस्युःकिं । अस्वतंत्रत्वादवस्तुनोजगतआद्यंतयोर्यज्जीवस्यास्तितदेतस्यस्वाभाविकंसंसारेपि । अन्यदभिमाननिमित्तंप्रलयेविद्यमानस्यकथंजन्मादिस्यादितिभावः॥तदानाशाद्देहादेस्तुयुज्यते । मुक्तिगमेवजीवस्यस्वाभाविकं।किमुलयेप्यविद्यमानंस्वतःस्यादित्यर्थः । आद्यंतयोरनुगमादाद्यंतरहितस्यतु । आद्यंतेभाविनोमध्येकथमन्याद्दशंवपुरितिब्रह्मतर्के । अनित्यत्वात्तुदेहस्यतस्यजन्मादिकंभवेत् । मुक्तिप्रलयसंबंधेकथंजीवेतदिष्यतइतिच । अनित्यस्यगुणामध्येभवेयुःस्वतएवतु । नतुस्वतस्तुनित्यस्यकादाचित्कगुणैर्युतिरितिच ॥७॥ [15]एतदेवचविज्ञानंतथापिनतथैवच ॥१५॥ [14]ज्ञात्वातत्त्वानितेष्वीशंसर्वतत्त्वेश्वरंप्रभुं । जानञ्ज्ञानीभवेत्स्वस्ययोग्यंज्ञानंविशेषतः । पूर्वोक्तएवयोजानन्सविज्ञानीभवत्युतेतिप्रभासे ॥१४॥ [16]नैस्तत्त्वानांमध्येयेनयद्यत्रस्थित्वाचस्युस्तदेवसत् । सत्त्वंस्वातंत्र्यमुद्दिष्टंतचकृष्णेनचापरे । अस्वातंत्र्यान्नचान्येषामसत्त्वंविद्धिभारतेतिभारते ॥१६॥ विकल्पाद्विरुद्धकल्पनात् ॥१७॥ [27]एकःप्रधानउद्दिष्टोविष्णोःप्राधान्यदर्शनं । ऐकात्म्यदर्शनंप्रो ॥९१२॥

त्कंसर्वज्ञानोत्तमंचतदितित्रैकाल्ये ॥२७॥ विषयेदोषेंबुद्धिःसन्निंद्रियाणांवशेस्थितः। कृपणःसतुसंप्रोक्तोगुणबुद्धिर्विपर्ययइतिविवेके। पुरुषार्थमतिर्यस्यविषयेष्वेवदेहिनः। विपरीतःसविज्ञेयःस्वात्मनोविपरीततइतिनिवृत्ते। वित्तासंतोषमात्राद्दरिद्रः। सर्वविषयसंगीविपरीतः ॥४५॥ इत्यैकादशतात्पर्येएकोनविंशोऽध्यायः १९
स्वतःसर्वगुणात्मातुविष्णुरेकःसनातनः। अन्यत्सर्वंतत्प्रियत्वाद्गुणोदोषस्तथाप्रियं। एवंज्ञानवतांदृष्टिरज्ञःसन्नावगच्छति। कालदेशविशेषेषुप्रीतिभेदमवेक्ष्यतु। अविज्ञानवतस्तस्यमर्यादावेदतःकृता। गुणदोषभिदानास्तिभगवत्प्रियमंतरा। गुणदोषदृशेर्दोषोह्यन्यत्रभगवत्प्रियात्। गुणायद्दोषतामीयुर्दोषाश्चगुणतांक्वचित्। अतोदोषोनदोषःस्यान्नगुणोपिगुणोभवेत्। भगवत्प्रीतिविज्ञानाद्गुणदोषभिदांयदि। पश्येत्तत्तुगुणायैवविपर्यासंनकारयेत्। गुणदोषभिदाक्वापिस्वातंत्र्येणनहिक्वचिदितिब्रह्मनये। स्वतस्तुगुणदोषत्वदृशेर्भेदेनवस्तुनां। दोषोथगुणएवस्याद्भगवत्प्रीतितोगुणः। दोषस्तुतद्वैपरीत्यादितिदृष्ट्वाभवेद्गुणः। कालदेशविशेषेणप्रीत्यज्ञानाज्जगत्स्थितेः। मर्यादागुणदोषाणांकृतावेदेषुसर्वदेतिपरायणे। एतदेवोच्यते। स्वेस्वेधिकारेयानिष्ठासगुणःपरिकीर्तितः। विपर्ययस्तुदोषःस्यादुभयोरेषनिर्णयइतिच॥१॥ सनकाद्याज्ञानयोगाभक्तियो

गास्तुदेवताः। मानुषाःकर्मयोगास्तुत्रिधैतेयोगिनःस्मृताः। सर्वेषांसर्वयोगैश्चप्राप्यामुक्तिर्नसंशयः। तथापि तुविशेषेणससतेषांविधीयते ॥७॥ भगवद्गुणानुसारेणवेदार्थोनीयतेहियैः। भक्तियोगास्तुतेप्रोक्तास्तादृशा हिसुराःसदा। अंगानुसारिवेदार्थंज्ञात्वातदनुसारतः। भगवद्गुणायैर्नीयंतेतेप्रोक्ताज्ञानयोगिनः। कर्माणि शास्त्रतोज्ञात्वातत्प्राधान्यानुसारतः। विज्ञातायैर्गुणाविष्णोर्ज्ञेयास्तेकर्मयोगिनः। भक्तिर्ज्ञानंचकिंचित्तुप श्चात्तेष्वपिजायते। तथापितेकर्मयोगाःकर्मपूर्वत्वकारणात्। भगवद्गुणानुरागित्वमधिकंभक्तियोगिनां। तस्मात्तेभ्यधिकाह्येषुदेवाएवविशेषतः। ईषद्वैराग्यमल्पंतुपूर्वंदेवेषुजायते। पश्चाद्विरागोभ्यधिकोदेवानां नात्रसंशयः। ज्ञानाधिक्यंतुदेवानांभक्त्याधिक्यंतथैवच। विरागोभ्यधिकस्तेषांसदेवसनकादिनां। ज्ञाना धिक्यान्मनुष्येभ्योभण्यंतेज्ञानयोगिनः। नतुज्ञानाधिकास्तेवैदेवेभ्यस्तुकथंचन। देवानामपिकर्मित्वंविद्यते यद्यपिस्फुटं। तथापिप्रत्यवायित्वान्मनुष्याःकर्मयोगिनः। त्रियोगाभ्यधिकोब्रह्मासर्वेभ्यःपरमोविभुः। म हायोगेश्वरेशेशस्तस्माद्ब्रह्माचतुर्मुखइतित्रियोगे॥८॥मार्गणवच्छरीरांतेपतति ॥१७॥ स्वतोशुद्धानांकर्मणा मनेनगुणदोषविधानेननियमःकृतः। स्वतोशुद्धत्वेपिकर्मणांविध्यनुसारेणानुष्ठानेगुणत्वमेवेत्यर्थः ॥२७॥

हृदयग्रंथिःअंतःकरणाख्योबंधः ॥३१॥ मद्भक्तियुक्तस्यभक्त्यनुसारिज्ञानावैराग्येविनाऽन्यस्माज्ज्ञानाद्वैरा
ग्याच्चनश्रेयोभवेत्।रागिणोपिविमुच्यंतेदेवानास्त्यत्रसंशयः। रागापनोदनार्थंचज्ञानंसाध्यंयतीश्वरैरितिच।
स्मर्तव्याविषयेदोषायतिभिर्नतुदैवतैः। हरिरेवसदापूज्यइत्यर्थंदैवतैरपीतिच। वैराग्यार्थमपिविषयदोषादि
ज्ञानंसनकादीनांभाव्यंदेवानांतदपिभगवद्भजनस्यैवसारतापरिज्ञानार्थमेवेत्यर्थः ॥३२॥ रागिणोपितेभक्ति
योगिनोभक्तिफलत्वेनकिमपिनापेक्षंते॥३५॥ यदिदद्याद्भक्तियोगफलंमोक्षमपीश्वरः। भक्तियोगफलत्वेनन
तद्गृह्णीयुरेवते। कामिनोपिस्वयंकामान्भुंजतेनफलात्मना। तस्माद्विरागेप्यधिकादेवाएवहितादृशाइतिच
॥३६॥ उत्तमोभक्तियोगस्तुज्ञानयोगस्तुमध्यमः। अधमःकर्मयोगश्चब्रह्मैकोमुख्यभक्तिभाक्। ज्ञानमप्यधि
कंतेषांनियतंभक्तियोगिनां। उदेतिभगवद्भक्त्यातद्धन्नज्ञानयोगिनः। भक्त्यंशकंयतोज्ञानंज्ञानस्नेहात्मिका
चसा। तथापिज्ञानयोगित्वंमानुषज्ञानतोधिकं। भक्तियोगेततोयत्नःकार्योविद्वद्भिरंजसेतिच ॥३८॥ इत्ये
कादशतात्पर्येविंशोऽध्यायः ॥२०॥ ॥ विवेकेनपुण्याधिक्यंभवतीतिविचिकित्सार्थंगुणदोषौविधीयेते।
पंचभूतात्मकत्वेनसमतासर्ववस्तुषु। हरिसन्निधिवैशेष्याद्विशेषश्चमहान्सदेतिवैशेष्ये॥३॥ धातुःपरमेश्वरः।

यद्यद्धरेःसन्निहितंतत्तच्छुद्धतरंमतं ।स्वतःशुचितमोविष्णुःसान्निध्यंचस्वभावतइतिच । एतेषांजीवानां॥६॥
नदीसमुद्रगिरयआश्रमाश्चवनानिच । नगराणिचदिव्यानिशालग्रामादयस्तथा । तेषांसमीपगाश्चैवदेशा
योजनमात्रतः । कर्मण्यास्तुसमाख्यातास्तदन्येकीकटाःस्मृताः । तदन्येपितुयेदेशाःकृष्णसारोषिताःस्वतः।
कर्मण्याएवतेज्ञेयायदिनाध्युषिताःखलैः । खलैरध्युषिताश्चापियदिसद्भिरधिष्ठिताः । कर्मण्याइतिविज्ञेयावि
ष्णुलिंगानियत्रचेतिस्कांदे ॥८॥ आंतरःसन्निधिर्विष्णोर्बाह्यसन्निधिरेवच । द्विविधःसन्निधिःप्रोक्तःकृत्रिमो
बाह्यउच्यते । स्वाभाविकस्त्वांतरःस्यात्प्रतिमाजीवगोयथेतिच ॥१५॥ तद्विदामेवनतिर्यगादीनां । वर्षाच्च
तुर्दशादूर्ध्वंयेनविद्युःशुभाशुभं । तेषामज्ञानजोदोषःसुमहान्कर्मजादपि । तिरश्चामिंद्रियासक्तेर्नदोषोऽज्ञा
नजोभवेत् । गुणोपिनैवकश्चित्स्याद्यतोज्ञानबहिष्कृताइतिच । अतोमूर्खाणामदोषइतिन ॥१६॥ समान
कर्माचरणे । आत्मयोग्यकर्माचरणे । पूर्वमपतितोयेनपततिप्रायश्चित्तत्वेनतत्सानकर्माचरणेपिनदोषः ।
तप्तसुरापानवद्देहत्यागिनः । तथाशयानःशूद्रोपिनपततिलशुनभक्षणादिभिःब्राह्मणादिपातकैः । औत्प ॥९१४॥
त्तिकोयतस्तस्यतादृशगुणसंगः । अतःस्वायोग्यएवकर्मणिपतति । त्रैवर्णिकाःसंचरंतोवेदकर्मप्रवर्तनात् ।

शयानःशूद्रउद्दिष्टोवेदकर्माप्रवर्तनात् । नतस्याभक्ष्यजोदोषःशुश्रूषायांप्रवर्ततः । यथासुवर्णस्यमलंशुल्बंता
म्रस्यनैवतत् । एवंविप्रादिदोषैस्तुनशूद्रोदोषितामियात् । मलंतुतस्यापिमलंयथैवंशूद्रजन्मनः । स्वधर्मप्र
तिरूपस्यचरणंदोषदंमतमितिचसमाचारे । शूद्रस्यापिहरेर्दीक्षांप्रविष्टस्यतुविप्रवत् । अभक्ष्यादिकृतोदोषः
सहिशूद्रोहिमुख्यतइतिविष्णुतंत्रे॥१७॥ सर्वतोप्यभिमानविमोकेनपरमात्मसमर्पणमेवदोषहानिदमित्याह।
यतोयतइत्यादिना । मयिसर्वाणिकर्माणिसंन्यस्याध्यात्मचेतसेत्यादेश्च ॥१८॥ दोषिणो[२२]र्गुणवत्त्वेनश्रूयंतेविष
याःसदा । असतांसंगतेस्तेषुदोषाःश्रोतुंसुदुर्लभाः । अतोनित्यगुणध्यानात्तद्गुणेप्रीतिमान्भवेत् । अतस्त
त्रभवेत्कामःकामिनंकलिराविशेत् । अधर्मज्ञानरूपेणकलिनाविष्टदेहिनः । सत्सुक्रोधोदुर्विषहस्ततस्तमसि
पात्यते । अंधेतमसिमग्नस्यचेतनेंद्रियसंतता । सुखानुभवशक्तिर्यासाविनश्यतिसर्वदा । तदाशमूनभावेनशू
न्यइत्युच्यतेनरः । सर्वात्मनातुसंभ्रंशस्तस्यदुःखविवर्धनः । अमूर्च्छितस्यैवभवेन्मृत्यनंतरमेवच । दुःखाख्य
विषयावेशान्नात्मानंपरमेवच । यथावद्वेत्तिपतितस्तमस्यंधेकदाचन । वृक्षवद्दृश्यतेनित्यंनिष्प्रयोजनजीवनः।
नित्यदुःखपरीतायुर्द्दतिवत्प्रश्वसित्यपीतितंत्रभागवते । स्वार्थस्यसुखस्यभ्रंशोविपरीतमतिशयेनजनयतीति

स्वार्थविभ्रंशः । तस्मात्स्वर्गादिविषयेष्वपिनेच्छेत ॥२२॥ फलस्यश्रुतिरेवेयंनकामकुसुमश्रुतिः । स्वर्गादि
कामनायुक्तस्त्वैहिकेष्वपिसज्जते । तत्रापिदेवकामेभ्योविशेषंचाभिवांछति । ततस्तमसिपातःस्यादतोवेदःक
थंहितान् । काम्यत्वेनाभिचक्षीतसर्वंजानन्स्वयंसदेति । नःश्रेयोरोचनं अस्मत्सकाशाच्छ्रेयोमोक्षाख्यंतदे
वरोचयतिफलश्रुतिः । कुसुमस्यानित्यतादिदोषज्ञानान्मोक्षस्यादोषत्वज्ञानाच्च । ईषदुत्तमस्यश्रोतुर्विवक्षया
॥२३॥ बुधोवेदःकथंयुंज्यात् । अंतरालागतोपिस्वर्गएवंविधःकिमुसाक्षात्फलरूपोमोक्षइतिरोचकः । अने
कब्रह्मकालप्राप्यत्वान्मोक्षस्यतावंतंकालंतपएवकर्तुंनशक्यतइतिमंदाधिकारिणांस्वर्गादिष्वप्यभिरुचिर्भव
तितान्प्रत्यंतेमोक्षएवभवति । अंतरालेप्येवंविधस्वर्गादिकंसुखंभवति । तस्माद्विहितंकर्मकर्तव्यमितिरोच
यति । उत्तमानांतुयस्मादेनादृशमप्यनित्यत्वादिदोषवत्स्वर्गादिकंतस्मान्मोक्षफलएववेदइतिदर्शयति । न
हिसर्वप्रमाणोत्तमोवेदोऽल्पफलेपर्यवसितः । मंदाधिकारिणांनित्यंतपसैवप्रतीक्षितुं । मोक्षोनशक्यतेऽधैर्या
त्ततःस्वर्गादिकंवदेत् । स्वर्गादिष्वल्पफलतांज्ञापयित्वाविमोक्षदं । एवंवक्तुंतूत्तमानांनित्योवेदःप्रवर्तते । इक्षु
दंडंददानीतियथाभैषज्यरोचनं । एवंमंदेषूत्तमेषुमोक्षमाहात्म्यमुच्यते । नह्यल्पफलभाग्वेदोवासुदेवैकसंश्रय

इतिविचारे॥२४-२५॥ [२७]अँयोग्यभार्यापुत्रादिकामिताऽनर्थसाधिनी । योग्यकामाद्धरेःप्रीतिरतोब्रह्मादयोम
लाः । भार्यापुत्रादिसंयुक्तावासुदेवमुपासतइतिच ॥२७॥ एवंवे[२६]दस्यव्यवसितं । फलश्रुतिंकुसुमितां । फलं
मोक्षः । तद्विषायांश्रुतिंस्वर्गादिकुसुमविषयांवदंति ॥२६॥ नि[२७]त्यानंदोहरेर्भक्तिज्ञानाद्याःस्वर्गशब्दिताः । पु
त्रभार्यासवित्ताद्यंसर्वंमोक्षगतंफलं । उद्दिश्यस्वर्गकामस्ययजनंश्रुतिचोदितं । तदविज्ञायपुष्पाख्यमनित्यंस्व
र्गमिच्छवः । यजंतिमंदमतयोवेदवादपरायणाइतिच । स्त्रीभिर्वायानैर्वेत्यादिच ॥२७॥ मो[२९]क्षाख्यंफलमेवात्र
स्वर्गादिवचनंतुयत् । पुष्पस्वर्गादिवत्तस्यवचनंमंदरोचनमितिच । असुराणामयंस्वर्गशब्दःपुष्पात्मकंवदेत् ।
देवानांहरिसंप्राप्तिंवेदोविष्णुपरोयतइतिच ॥२९॥ [२७]स्वँलोकंस्वाश्रयं ॥२७॥ को[२८]र्सावाश्रयःमांतेयेउक्थेनप्रा
णेनशास्याः । विष्णवभक्तान्सदावायुःशासयेत्तमसिक्षिपन् । विष्णुभक्तान्विमोक्षायप्रापयित्वासुखंनयेदि
तिच । पथएकःपीयायतस्करोयथाँएषवेदनिधीनामितिच । मेमताविज्ञानात्परोक्षविषयात्मकाः । परोक्षमं
धंतमः । तद्विषयस्वरूपाः । तद्गमनार्थस्वरूपाः । अंधंतमःपरोक्षंचपंचकष्टंतथोच्यतइतिसुव्यक्ते । तेषामासु
राणांयदाहिंसायांकामः । तदायज्ञएवनचोदना । यद्यदात्मनोहिंसितुमिष्टंतत्तद्विहितमितिप्रापयंतिकुतर्कैः ।

आसुरोऽविहितांहिंसांविहितत्वेनवर्णयेत्। आसुरायाज्ञिकाःसर्वेनारायणपराङ्मुखाइतिच ॥२८॥ विष्णुंवि
[३२]हाययेदेवान्पितॄन्भूतेशमेववा। साम्येनवापूजयंतितेज्ञेयाआसुरागणाइतिच। तामसेष्वेवरजःसत्वतमो
निष्ठाः। तामसेषुतुयेसत्वानिरयप्रचुरास्तुते। ईषत्स्वर्गादिसंयुक्तास्तमोनिष्ठाश्चतेस्मृताः। केवलंनिरयेनिष्ठाये
तेतामसराजसाः। अंधेतमसियेनिष्ठास्तेवैतामसतामसाः। एवंत्रिभेदयुक्तास्तुयाज्ञिकाविष्णुवर्जिताइतिहरि
वंशेषु॥३२॥[३५]ब्रह्मत्वंपूर्णताप्रोक्तातद्यस्यस्वतएवतु।सब्रह्मात्मासमुद्दिष्टोवासुदेवःसनातनइतिच॥३५॥प्राणेंद्रि
यमनोभिर्मीयते। मेयत्वान्मयउद्दिष्टोवेदःप्राणादिभिःसदेतिवाराहे। अंतोविनाशउद्दिष्टःपारःपरिमितिस्त
था। अनंतपारोवेदोयंताभ्यांसरहितोयतइतिव्यासस्मृतौ ॥३६॥ [३७]भूम्नाब्रह्मणाअतिमहापरिपूर्णेन ॥३७॥
[३८-४०]आस्पर्शरूपिणाआस्पर्शोविष्णुस्तंरूपयतिप्रकाशयतीत्यास्पर्शरूपिप्राणस्यमनः। आसमंतात्स्पर्शाभोगा
अस्यैवेत्यास्पर्शः। भुंक्तेयदखिलान्स्पर्शानास्पर्शोविष्णुरुच्यते। तस्यप्रकाशकंनित्यंनमस्येप्राणमेकलं। प्रा
णस्यैवमनोनित्यंवासुदेवंप्रकाशयेदितिवायुप्रोक्ते। मीयंतेऽनेनछंदांसिप्राणश्छंदोमयस्ततइतिच। त्रिमात्र ॥९१६॥
मादितःकृत्वायावच्चानंतमात्रकाः। प्रणवास्तेविभेदेनह्यनंताःपरिकीर्तिताः। एकमात्रोत्तराःसर्वेवासुदेवा

भिधायकाः । तेषांव्याख्यानरूपाहिसर्वेवेदाःप्रकीर्तिताः । ॐकारव्यंजितास्तस्मात्सदोच्चार्योहरेःप्रियैरिति प्रणवमाहात्म्ये । गुह्यदर्शनभाषेचभाषाचैवसमाधिका । तिस्रस्तुमूलभाषास्युरेकैकाचत्रिधापुनः । गुह्यद र्शनसंज्ञाचगुह्यगुह्यातथापरा । एवमादिक्रमेणैवत्वेकाशीतिविभेदिताः । भाषास्तत्रचगुह्याचप्रसिद्धार्थेष्व नन्विता । गुह्यार्थतत्परैर्वांधोमणिमित्यादिकाचसा । दर्शनान्यवलंब्यैवपशुपत्यादिनांतुया । बहुश्रुतिवि रुद्धंतुवदेत्सादर्शनात्मिका । अंतेनिषेधसंयुक्ताभस्मस्नानादिकाचसा । यथाप्रदृश्यमानार्थासमाधिःसाप्र कीर्तिता । विष्णुःपरमइत्याद्यासाचविद्वद्भिरीरितेतिभाषाविवेके । भस्मस्नानविधानंतुश्रुत्युक्तंदर्शनानुगं । भस्मस्नानंततोग्राह्यंविधानंतुनृसिंहगमितिस्कांदे । गायत्र्याउष्णिक्चतुर्वर्णाधिकेत्यादिचतुरुत्तरैः । जग त्यंतानामेवचतुरुत्तरत्वनियमः ॥४०॥ छंदस्तुनवपादंयज्जगदित्युच्यतेबुधैरितिछंदोविधाने ॥४१॥ विवि
४२-४३ धैरूपैस्त्वेनकल्पनंविकल्पःचत्वारिवागित्यादि । तत्रवागित्यनुवादः । विधिभागेहरेःपूजैवाभिधानेचतद्गु णाः । विकल्पेतद्बहुत्वंचाप्यपोहेतुतदप्रियं । उच्यतेसर्ववेदेषुतच्चवेदसएवहीत्यागमतात्पर्ये । सुराहरेर्गुणाः प्रोक्तास्तेमेस्युरितिचिंतनं । सुरापानमितिप्रोक्तंतन्नकुर्यात्कथंचन । ब्राह्मणोविष्णुरुद्दिष्टःसनास्तीत्यभिचिं

तनं । ब्रह्महत्यासमुद्दिष्टातांनकुर्यात्कथंचन । इत्याद्यपोहवाक्यार्थश्रित्योविष्णुर्बुधैर्जनैरित्यादिच । मद न्यःकश्चनकोपिनवेद ॥४३॥ अभिदश्चसएवअश्चअभिदा । तं अभिदांमामास्थायमायामात्रंमदिच्छानिर्मि तंशरीरादिकमनूद्योपासनादिकंविधायमोक्षरूपेणतच्छरीरादिकंप्रतिषिध्यप्रशाम्यति । सर्वावताररूपेषु निर्भेदत्वाददोषतः । अभिदाविष्णुरुद्दिष्टस्तमेवोक्तातदिच्छया । निर्मितंदैहिकंबंधंतस्योपासनएवतु । प्रति षिध्यविमोक्षेतुस्वभावोपास्तिरूपतः । प्रतिशाम्यतिवेदोयंवासुदेवैकसंश्रयइतिच । अभिदामास्थायकोपि शब्दोमेतिवा ॥४४॥ इत्येकादशतात्पर्येएकविंशोऽध्यायः ॥२१॥ ॥ मायांमदीयांमत्सामर्थ्यं । विष्णोः सामर्थ्यमालंब्यतत्त्वसंख्यांमुनीश्वराः । चक्रुर्हितदविज्ञायविवदंत्यल्पबुद्धयः । तत्रापिकारणंविष्णोःशक्ति र्यस्याविकारतः । अव्यक्तादेर्विकल्पोयंमनसःसंप्रजायते । विरुद्धकल्पनंतच्चवासुदेवैकनिष्ठया । निर हंकारयानश्येद्धिवादैकाश्रयंहितदितितंत्रभागवते । यासांसकाशादव्यक्तादिव्यतिकराद्विकल्पोविरुद्ध कल्पः । सहिविवादाश्रयः । तत्त्वसंख्याविवक्षाभेदेनबहुधाभवति ॥४-६॥ सर्वथाजीवादन्यःपरमेश्व रोंगीकर्तव्यः । जीवस्यस्वतएवज्ञानायोगात् ॥१०॥ सचपुरुषरूपेणतत्स्थितोज्ञानमुत्पादयति । ई

श्वररूपेणबहिःस्थितःफलंददाति । नचतयोःस्वरूपयोःकिंचिद्वैलक्षण्यं । तयोश्चान्यत्वकल्पनातत्स्वरूपा दपगमनप्रयोजनानर्थकारिणीत्यर्थः । ज्ञानस्वरूपस्यजीवस्यकथंज्ञानोत्पादनमित्यतोवक्ति । ज्ञानंचप्रकृते र्गुणइति । जन्यज्ञानंप्रकृतेर्गुणः। स्वरूपभूतज्ञानंतुसदाजीवस्यविष्णुना। नियतंप्राकृतंज्ञानंभक्त्यातेनैवदी यतइतिच॥११॥जन्यज्ञानस्यप्राकृतत्वंसाधयति।प्रकृतेर्गुणसाम्येत्वित्यादिना ॥१२॥ अंतःस्थःपुरुषोनामज्ञा नदःसर्वदेहिनां । बहिःस्थईश्वरोनामज्ञानादिफलदोहरिरितिमात्स्ये । पुरुषाख्योहृद्गतस्तुविष्णुर्जीवविबो धकः । फलदात्रातुबाह्येनयईशेनभिदांवदेत् । तथैवान्यस्वरूपेषुविष्णोर्योभेददर्शकः । येचजीवेश्वराभेदं पश्यंतोनर्थभागिनइतिब्राह्मे । कालोभगवान् ॥१३॥ नवैकादशपंचत्रीनित्युक्तानिपुरुषःप्रकृतिरित्यादी नि ॥१४॥ उत्सर्गस्यद्विविधत्वात्पंचकद्वयं ॥१६॥ त्रीनितित्रिगुणानितिवक्तुंगुणप्रवृत्तिमाह । सर्गादावि त्यादिना ॥१७॥ कार्यकारणभावादन्योन्यानुप्रवेशोयुक्तइतिवक्तुंसृष्टियुक्तिः । सृज्यस्रष्टृस्वरूपत्वादन्योन्या नुप्रवेशिनः । तिष्ठंतितात्त्विकादेवाविशेषप्राप्तिकारणादितिनैसर्गे ॥१८॥ अन्वेकमप्येष्वित्युक्तत्वात्पुरुषो हिरण्यगर्भः । यदापुरुषशब्देनविरिंचस्यैववाच्यता । परस्यपृथगुक्त्यैवव्यक्तस्तत्रतुशंकरः । तदाहंकारज्ञा

ब्देनस्कंदस्यैववचोभवेदितिविवेके॥१४॥[१९]सत्वादीन्गत्यादींश्चविनापरमात्मनासहषड्विंशतिः। महदहंकारौ
ब्रह्मरुद्रावंगीकृत्यस्कंदंविनापरमात्मनासहपंचविंशतिः। विषयेंद्रियप्रकृतिदेवताःपरमात्मना। पंचविंश
तितत्त्वानिसंख्यातानिविदोविदुरितिच। ज्ञानशब्दोदितोब्रह्मातदाधारोहरिःस्मृतइतिच। ततोज्ञानंवि
नापरमात्मानमंगीकृत्यैवदेहेंद्रियाण्यसुश्चनवतत्त्वानि। सर्वदेहाभिमानीतुदेहिनांतुदिवाकरः। इंद्रियात्मे
द्रएवैकःप्राणोनामप्रजापतिरितिच ॥१९॥ [२१]अवयविनोजन्मतैःखलु ॥२१॥ भूतानिमात्राश्चपरस्तत्त्वैकाद
शकंस्मृतमितिच। भूतमात्रेत्यारंभात्तत्सिद्धेरेकादशानांपृथगनुक्तिः ॥२२॥ आत्मनासहैवमनउच्यते।
आत्मनःसन्निधिस्थत्वान्मनसस्तुतदुक्तितः। उक्तोभवेत्परात्मापितत्त्वषोडशकंयदेतिच। आत्मशब्देनब्र
ह्मापरमात्माचोभावुच्येते। भूतेंद्रियाणिचमनोब्रह्माविष्णुस्तथैवच। एवंत्रयोदशैवाहुस्तत्त्वानिमुनयोवरा
इतिच। आत्मेतिपरात्माचविरिंचश्चापिकथ्यते। वायुर्मनश्चदेहश्चस्वयमित्यपिकुत्रचिदितिप्रत्यये ॥२३॥
[२५]यद्यपिपरमात्माप्रकृतिश्चविलक्षणौतथापितयोर्वैलक्षण्यंनलक्ष्यते। अंतरंचभिदाचेतिवैलक्षण्यंप्रकीर्तित
मितिच। तद्वैलक्षण्यंकुतोनदृश्यतइतिप्रश्नाभिप्रायः ॥२५॥ अन्योन्याधारत्वमेवदृश्यतेनतुपरमेश्वरस्या

नन्याधारत्वेनप्रकृत्याधारत्वंमंदमतीनामित्यर्थः ॥२६॥ आधारःप्रकृतेर्विष्णुर्नाधारस्तुहरेःक्वचित् । तथाप्य
व्यक्तगोयद्वदृश्यतेमंदचेतसामितिपाद्मे ॥२७॥ प्रकृतिःपुरुषश्चेत्येव अन्योन्यविलक्षणावेव । एषविकल्पः।
वैलक्षण्यादर्शनंविरुद्धकल्पनमेव। यस्माद्गुणव्यतिकरात्मकःसर्गोविकारनिमित्तःसचगुणव्यतिकरस्त्रिविधः।
सत्वरजस्तमसामेकैकप्राधान्येनतत्रतमःप्रधानानामेवविरुद्धकल्पनंतस्मात्तमएवात्रकारणमित्यर्थः ॥२८॥
तत्रापिप्रकृतिरेवकारणमीश्वरेच्छाच । विकाराज्जातत्वाद्वैकारिकइत्युच्यतेऽहंकारस्त्रिविधोपि । वैकारिको
महांश्चैवतथाऽहंकारएवच । तथैवसात्विकश्चांशोवैकारिकइतितिधेतिशब्दनिर्णये ॥२९॥ अध्यात्ममिंद्रि
याणि । तैरेवविपरीतंज्ञानंजायते । अहंकारेविद्यमानेभ्रमोभवतिनान्यदा । सम्यग्ज्ञानंहरेःशक्त्यातन्मु
क्तस्यविशेषतः । देवतानुग्रहोनित्योमुक्तस्यापिह्यपेक्ष्यते । नित्यंतत्प्रतिबिंबत्वाज्जीवानामेवकृत्स्नशः । बा
ह्यज्ञानंचमुक्तस्यनजडाहंकृतेःक्वचित् । किंतुस्वरूपशक्त्यैवदेवेभ्यश्चाभिजायतइतिब्रह्मतर्के । पश्यन्नपिज
गत्सर्वंचिद्दलेनैवपश्यति । कुतोमुक्तस्यतुजडंचिद्रूपस्यव्यपेक्ष्यतइतिच । एषामुपरमेमुक्तौ । चक्षुरितिपु
नर्वचनमवधारणार्थं ॥३०॥ [३२]योसौभ्रमहेतुर्विकारःसगुणक्षोभकृतः । आत्मातुपरिज्ञानस्वरूपोनगुणक्षोभ

कृतः ॥३२॥ भिदाविपर्ययेयेणविद्यमानंनास्तिअविद्यमानमस्तीतिविवादः । असदस्तिचसन्नास्तीत्येवंभेदा
द्विवादनं । सदैवहरिपादाब्जविमुखानांप्रवर्तत इतिच ॥३३॥ विषयाभिनिवेशेनउत्तरदेहाभिनिवेशेनपूर्व
देहास्मरणंयत्तन्मृत्युः ॥३८॥ ईदृशंवर्तमानंआयएष्यत्सःअतीतइतित्रैविध्यंभातिविज्ञायवस्तुनिविज्ञातेस
ति दीर्घलोपः । अत्रातइतिवत् । क्षैप्रेदीर्घलोपइतिसूत्रात् । अयमेवात्मानात्मनोर्विशेषहेतुः । यथाप्रायो
सज्जनोसज्जनमेवजनयतीतिपितृज्ञानात्पुत्रदौरात्म्यंज्ञायते । एवमनित्यत्वादनात्मत्वंदेहादेरित्यर्थः ॥४१॥
सोयमेवेतिमृषा । सचायमितितुज्ञानंनमृषायंसएवतु ॥४४॥ इतिज्ञानंमृषैवस्याद्भेदाभेदौयतस्तनोः । अ
भेदएवजीवस्यनित्यंप्रत्येकशःपृथक् । दीपदेहनदीवारिफलादीनांपृथक्स्वतः । भेदाभेदौपरिज्ञेयौकार्यकार
णयोरपि । गुणस्यगुणिनश्चैवजातिव्यक्त्योस्तथैवच । तथावयव्यवयवयोःक्रियायास्तद्वतस्तथा । एवंजडे
षुनियमश्चिद्रूपेष्वभिदैवत्वितिच । येधर्मानियमेनैवधर्मिणोनवियोगिनः । जडस्थाअप्यभिन्नास्तेभिन्नाभि
न्नावियोगिनइतिच ॥४५॥ अभिज्ञाद्वयलक्षणौअभिमानमात्रौ । तरोर्बीजविकारदृष्टांतेनविद्वान्देहाभि
मानंत्यक्त्वासंयमंयाति । परमात्मनश्चभेदंजानातिप्रकृत्यादेः । बीजाद्यवस्थासंयुक्ताद्वृक्षाद्द्रष्टायथापृथक् ।

एवंविकारिणोविष्णुर्जीवश्चपृथगेवत्वितिच ॥४८॥ [52]दुःखशोकादयःसर्वेज्ञेयाबुद्धिगुणाइति । सुखज्ञानेतु जीवस्यभक्तिःस्नेहस्तथैवच । विपर्ययेणासुराणांजीवबुद्धिगुणामताइतिच । आत्मनोपिगुणाबुद्धिकृताःबु द्धिगुणाइति । उच्यंतेसुखदुःखाद्याःपरमात्मकृतायथेतित्रैकाल्ये ॥५२॥ [54]मृषावृथा । अल्पप्रयोजनंयत्तन्मृ षेत्येवतदुच्यतइतिशब्दनिर्णये । आत्मनःस्वतएवदुःखाद्याःसुखादिवदितिमिथ्याबुद्धिरितिवा ॥५४॥ इत्ये कादशतात्पर्येद्वाविंशोऽध्यायः ॥२२॥ ॥ [48]सात्विकमनोविवक्षयादेवशब्दः ॥४८॥ तामसमनोविवक्षया शत्रुशब्दः । एकस्थानाधिपत्येतुभिन्नानामपियुज्यते । अभेदेनपरामर्शःसादृश्येनापिवस्तुनोरितिप्रयोगे ॥४९॥ [48]तेद्वेब्रह्मणीकस्यमनोयातिवशंक्वचित् । श्रियंसरस्वतींवापियातिवातत्प्रसादतइतिपाद्मे ॥४८॥ [49]उदासीनानांरिपुंसम्यग्ज्ञानवतांनरिपुस्स्वतइत्यर्थः ॥४९॥ अभिमानमात्रेणैवजीवस्यदेहेनसंबंधइतिमनो मात्रं । मनसानिर्माणमिति । अहमन्यइत्यपिदेहमात्रेमन्यंते । देहमात्रंस्वमात्मानंयःपरंचाभिपश्यति । अंधेतमसिमग्नस्यनोत्तारस्तस्यकुत्रचिदितिच ॥५०॥ [51]जनशब्दःस्वतोजीवेक्वचिद्देहेचवर्ततइतिप्रयोगे ॥५१॥ अयोग्यक्रोधादेर्मनएवकारणं । अविकाराश्चतेदेवाविकाराइतिशब्दिताः । अभिमानाद्विकारस्यस्वतःश

क्ताअपिध्रुवमितिच ॥५२॥ नह्यात्मनःस्वभावादन्यद्भवति । यदिदृश्यतेतथापिमृषास्यात् । सुखरूपंदुः खंनभवति । अतोमनएवतथादर्शयति । जीवस्यसुखरूपस्यनदुःखंक्वचिदिष्यते । अतोमनोभिमानेनदुः खीभवतिनान्यथेतिभारते ॥५३॥ गृह्यमाणत्वाद्ग्रहोदेहः ॥५४॥ अजडत्वेआत्मनः ॥५५॥ तदात्मनःका लाधीनस्य । स्वातंत्र्यमात्मशब्दोक्तंस्वरूपमपिकुत्रचिदितिविवेके । यथाग्नेर्हिमस्यचनैवदुःखंतापनिमित्तं जडत्वात् । एवंजडत्वाद्देहस्यापिकालादिसंबंधेविद्यमानेपिनदुःखंयुक्तं । सदाकालादिसंबंधाद्दुःखंदेहस्य युज्यते । तथापिनैवदुःखीसजडत्वान्नियमेनतु । आत्मनःसुखरूपत्वान्नदुःखंयुज्यतेक्वचित् । तस्मान्मनो भ्रमेणैवदुःखीजीवोनचान्यथा । सर्वेषांमनसोनेतामनोरूपस्त्रिलोचनः । तद्वशाःसर्वदेवाश्चतेनैवसुखदुः खिनः । नियंतातस्यचप्राणस्ततोपिबलवत्तरः । तन्नियंताहरिःसाक्षात्परमानंदलक्षणइतितात्पर्यं ॥५६॥ आत्मनःमनसः ॥५७॥ भौमयोर्विकारयोःपीड्यपीडकयोरुभयमनसोःसतोर्दुःखंभवति । ग्रहस्यग्रहणरू पस्यमनसःसतएव । जडेमनसिसत्येव । तदात्मनोमनसःसतः । संसृतिरूपिणआत्मनोजीवस्ययथातथा नहिपरमस्य । अमनस्त्वादतोमनोऽन्वयव्यतिरेकइतिभावः ॥ इत्येकादशतात्पर्येत्रयोविंशोऽध्यायः ॥२३॥

[२]यथैवार्थस्तथाज्ञानंज्ञानार्थैक्यमुदाहृतं । तथाकृतयुगेप्रायस्तदन्येषुतुकस्यचिदितिब्रह्मतर्के ॥२॥ फलंरूपय
तीतिफलरूपः । ज्ञानार्थैक्येनसत्यंपश्चात्तद्द्विधासमभवत् । तच्छब्दार्थात्मकमुभयंबृहत्तरं ॥३॥ ज्ञानाभिमा
नीपुरुषःसब्रह्मासमुदाहृतः । अर्थाभिमानीप्रकृतिर्गायत्रीसाप्रकीर्तिता । तयोर्नियामकोविष्णुःश्रीश्चानु
ग्राहिकास्मृता । वायुस्तुब्रह्मणःपुत्रःप्रकृतौसमजायत । त्रिगुणात्मासमुद्दिष्टःप्रायःसत्वात्मकस्तथा । गाय
त्रीचैवसावित्रीतथैवचसरस्वती । एवंत्रिरूपाप्रकृतिरेकासत्वादिभेदतः । तासुवीर्यंसमुत्सृष्टंब्रह्मणैकत्वमा
गतं । ससूत्रात्मासमुद्दिष्टोवायुर्लोकप्रणायकः । तस्यापिसूत्रंभगवान्धारणाद्विष्णुरव्ययः । सूत्रपुत्रस्त्वहं
कारःसरुद्रःसमुदाहृतः । सूत्रात्मनामहांश्चापिसहजातश्चतुर्मुखः । तस्यापिपुत्रोऽहंकारःसचानंतउदाहृतः ।
अनंतादपिरुद्रोऽभूद्ब्रह्मणश्चेतिसत्रिधा । वैकारिकोब्रह्मजस्तुतैजसोवायुजःस्मृतः । तामसोऽनंतजश्चैवस
एकोगुणभेदतइतिप्राथम्ये ॥४॥ चिँदचिद्यद्दशेसर्वँसरुद्रश्चिदचिन्मयइतिच ॥७॥ चिँदानंदशरीरस्तुप्रवि
ष्टोंडेहरिःस्वयं । तन्नाभेर्भूतदेहोऽभूत्पद्मादपिचतुर्मुखः । चतुर्मुखस्तुसर्वांडव्याप्तदेहोमहातपाः । हरिस्तुस
र्वव्याप्तोपिभूतदेहोनतुकचित् । नैवास्यप्राकृतोदेहःप्रादुर्भावेष्वपिक्कचिदितिनिवृत्ते ॥१०॥ [१४]मैंहरादीनाम

पिभक्तियोगोऽपेक्षितएव । आधिक्येनापेक्षितत्वाद्भक्तियोगस्यमद्रतिरित्युक्तं । नैवविष्णावभक्तस्यमहर्लो
कादिकागतिः । भक्त्युद्रेकाक्रमादूर्ध्वंयावद्विष्णुप्रवेशनं । एवंज्ञानंविनासापिमहर्लोकादिकागतिः । ज्ञा
नोद्रेकाक्रमादूर्ध्वंयावद्विष्णुप्रवेशनं । नित्यशोभगवद्रूपस्यापरोक्ष्येणदर्शनं । मुहूर्तमात्रंज्ञानंस्यान्महाज्ञा
नंततोधिकं । ज्ञानेनब्रह्मलोकःस्यान्महाज्ञानाद्धरेर्गतिः । सदैवाखंडितंज्ञानंतपइत्युच्यतेबुधैः । अपरोक्ष
दृशायुक्तंनित्यंषण्मात्रकालया । अपरोक्षदृशानित्यमेकमात्रायुजायुतं । योगनाम्नासमुद्दिष्टंध्यानंनित्यम
खंडितं । तच्चतुर्भागयानित्यमपरोक्षदृशायुतं । पादयोगाख्यमुद्दिष्टंध्यानंनित्यमखंडितं । पादयोगान्म
हर्लोकोजनोलोकस्तुयोगतः । तपसस्तुतपोलोकःप्राप्यतेनान्यतःक्वचिदितिध्यानयोगे ॥१४॥ कालात्मना
ज्ञानाद्यात्मना ॥१५॥ प्रकृतेस्तुविकाराणांकोप्यंशोभेदइष्यते । तथैवाकाशतोभेदःसोपिनाभेदवर्जितः ।
भेदाभेदमतःप्राहुरभेदंवातयोर्बुधाइतिविवेके ॥१७॥ पारमार्थिकसत्यत्वंस्वातंत्र्यमभिधीयते । तद्विष्णोरेव
नान्यस्यतदन्येषांसदास्तितेतिच। यद्ब्रह्मोपादायपूर्वःप्रकृत्यादिरादिरंतश्चयद्ब्रह्मणियस्मात्तस्माद्ब्रह्मपरमार्थस
त्यं ॥१८॥ परःपुरुषोहिरण्यगर्भःकालोपिरूपांतरेणसएव । कालाभिमानीब्रह्मातुकालइत्यभिशब्दितः । सर्व

जीवाभिमानीसपरः पुरुषउच्यते । प्रकृतिर्नामतत्पत्नीप्रकृतेरभिमानिनी । साप्रसूतेजगत्सर्वंसूत्रमारभ्यस र्वशइतिच । आधारोव्यंजकश्चैवप्रसवीताचकेशवः । कालप्रकृतिपुंसांचतन्मूलप्रकृतेरपि । आधारोव्यंज कश्चैवसर्वस्यापिनियामकइतिच ॥१९॥ यावत्स्थितिरस्तितावदुत्पत्तिरस्त्येव । यावदीक्षणंयावत्प्रलयःस्या दितिभगवतःस्मरणं ॥२०॥ विशेषेणगुणोद्रेकाद्विशेषःपृथिवीस्मृतेतिप्रवृत्ते। पंचत्वानंतरमविशेषाय॥२१॥ देव्यामोषधिमानिन्यांलीयतेऽन्नाभिमानिनीत्यादिच ॥२२॥ विकारैंजत्वात्तुमहान्वैकारिकउदाहृतः । ईश नादीश्वरश्चैवब्रह्माबृंहणतःस्मृतइतिच ॥२५॥ गौंयत्रीचैवसावित्रीतथैवचसरस्वती । एवंत्रिरूपाप्रकृतिर्ब्रह्म पत्नीप्रकीर्तिता । महत्तत्त्वात्मकोब्रह्मातज्जत्वात्तत्रलीयते । गुणाधिकःपतिरपितस्याःसत्वादिभेदतः । त्रि विधामूलरूपायांप्रकृत्यांसाप्रलीयते । प्रकृतिर्मूलरूपासाब्रह्मपत्नीजगन्मया । पुरुषाभिधेविरिंचेतुसस्वस्मि न्कालसंज्ञके । कालाभिधोविरिंचस्तुमहालक्ष्म्यांविलीयते । जीवमायेतियामाहुःसाचसत्वादिभेदतः । त्रि विधैकत्वमापाद्यविष्णावेवविलीयते । हरेरत्यंतसामीप्यंलयोलक्ष्म्याःप्रकीर्तितः । पुरुषेणापिसामीप्यंप्रकृ तेर्लयउच्यते । ब्रह्माचप्रकृतिश्चैवमुक्तिगौविलयेयतः । अतस्तौभिन्नदेहौतुज्ञानमात्रौसमीपगावित्यादिच

॥२९॥ इत्येकादशतात्पर्येचतुर्विंशोऽध्यायः ॥२४॥ ॥ [३]राजसेपियदादुःखंतामसेकिमुतेतितत् । राजसेदुः
खवचनंतामसेतिविवक्षयेतिप्रद्योते ॥२३॥ [२४]नैर्गुण्यंसाधनंयत्तन्निर्गुणंपरिकीर्तितमितिच । यथाशास्त्रोक्त
विज्ञानंकेवलंज्ञानमुच्यते । स्वदृष्टशास्त्रानुकूल्याददृष्टानांचभक्तितः । गुणानांतुहरौभावंविनिश्चित्यैतदाश्र
यात् । यथाशास्त्रानुसंधानंज्ञानंतुहरिसंश्रयमितिच ॥२४॥ [२७]श्रुतशास्त्रानुसारेणयाश्रद्धापरमात्मनि । सासा
त्विकीतदन्यस्याप्यनुसारेणनिर्गुणा । अश्रुत्वापिप्रमाणंयोवासुदेवैकसंश्रयः । सनिर्गुणोभागवतःसमुद्दि
ष्टोमनीषिभिरितिच ॥२७॥ [२९]परोक्षज्ञानमात्मोत्थमापरोक्ष्येणदर्शनं । विष्ण्वाश्रयंसुखंनित्यंगमयेत्तत्प्रसाद
तः । नतुविष्णोःस्वरूपंतुसुखंकेनचिदाप्यते । तस्यैवविषयत्वात्तुतत्सुखंचेतिभण्यते । परोक्षज्ञानगोयस्मा
द्विषयःस्वमनोगतः । अतआत्मोत्थमित्येवसुखमाहुर्विपश्चितइतिच ॥२९॥ [३१]दृष्टंश्रुतंबुद्ध्यादृष्टंचानुपरंब्रह्म
ध्यायेत् ॥३१॥ [३४]सत्वाद्गुणाज्जातमपिव्यवधानंविनैवतु । मुक्तिदंनिर्गुणंप्रोक्तंव्यवधानेनसात्विकमितिब्राह्मे
॥३१॥ इत्येकादशतात्पर्येपंचविंशोऽध्यायः ॥२५ ॥ ॥ [२]वस्तुस्वतंत्रमुद्दिष्टमस्वतंत्रमवस्तुचेतिमाहात्म्ये
॥२॥ [३]भगवतोपिसतांमध्येप्रधानत्वात्संतोऽहमेवचेत्युक्तं । विष्णोश्चसत्प्रधानत्वान्नसतांविद्यतेपरं । इत्या

हुर्वेदविदुषःसहिसर्वेश्वरेश्वरइतिच॥३५॥ इत्येकादशतात्पर्येषड्विंशोऽध्यायः॥२६॥ ॥ [२२] जीवःकलायस्याः साजीवकलाभगवन्मूर्तिः । हृदिस्थायाहरेर्मूर्तिर्जीवोयत्प्रतिबिंबकः । यद्वशेवर्ततेजीवःसातुजीवःकला स्मृता।शब्दैःसर्वात्मनानुक्तेर्नादांतस्थाचसामतेतिविवेके ॥२२॥ व्याप्तोभूतश्चनित्यंयदात्मभूतोहरिस्ततः। जीवस्यतत्प्रधानत्वंतन्मयत्वमुदाहृतमितितंत्रभागवते । व्याप्तोपिभगवान्विष्णुर्देहेसर्वगतत्वतः॥ भक्तस्य फलदोयस्माद्व्याप्तिकृत्तस्यतेनसइतिच ॥२३॥ [३] स्वंस्यविष्णुसूक्तेन धामसूक्तंसमुद्रादूर्मिरिति । नितरांरंजये द्यस्मात्पावमानंतुमंडलं । विष्णुनीराजनंतस्माद्विद्वद्भिःसमुदाहृतमितिच ॥३०॥ [४३] मैमकर्माणिकीर्तयित्वाऽभितोनयन्सर्वेषांप्रकाशयन्मत्कथाःश्रावयन्नित्यभिनयशब्दार्थः॥४३॥ [५३] नैरपेक्ष्येणभक्तियोगेनैवसाम्यमि तिभावः । निर्दुःखत्वंहरेःसाम्यंनतादृशसुखात्मता । सर्वोत्तमःसदानंदःकथंकस्यकदाप्यतइतिप्रवृत्ते । आधिपत्यंत्रिलोकस्ययोग्यानामिंद्रता । अयोग्यानांत्रिलोकेपिपूज्यत्वंसमुदाहृतं । तद्भवेत्परयाभ क्त्याविष्णोरालयकारिणः । ततोप्युद्रिक्तयाभक्त्याविष्णुंपूजयतःसदा । अवाप्यतेब्रह्मलोकस्तदुद्रिक्तश्च मुच्यतइतिच ॥५१-५२॥ इत्येकादशतात्पर्येसप्तविंशोऽध्यायः॥२७॥ ॥ [१] नप्रशंसेतनिंद्यास्तुप्रशंस्यान्नैव

निंदयेत् । उभयंयःकरोत्येतदसत्यात्सपतत्यधः । यःप्रशंस्यान्नप्रशंसेन्निंद्योयेननिंद्यते । सोपितद्वदधो यातियतोरिवदुदासकइतिसत्कारे । प्रकृत्यापुरुषेणचसहैकेनपरमात्मनाव्याप्तमेकात्मकं । तथापश्यतएव यथार्थज्ञानंभवति ॥१॥ तैजसाहंकृतेर्जातइंद्रियग्रामकेपरात् । निद्रयावशमापन्नेजीवःस्यान्नष्टचेतनः । अ तोविष्णोर्वशेसर्वंतेनव्याप्तमितिस्मरेदितिच । निद्राचैवसुनिद्राचद्विधानिद्राप्रकीर्तिता । तत्रनिद्राभवेन्नि त्यासुनिद्रास्मृतिकालगेतिपाद्मे । मनोमात्रस्वरूपत्वात्स्वप्नोमायेतिकथ्यतइतिच । तथानानार्थदंमनएव । मनसाहिविषयाःप्रतीयंते ॥३॥ एकंतुशुभमुद्दिष्टमशुभंद्वैतमुच्यते । पुंसोशुभस्यकिंभद्रंकिमभद्रंविशेषतः । सर्वदाऽशुभरूपत्वाद्विशेषोत्यल्पएवहीतिभारते । द्वैतस्याशुभस्यपुरुषस्यकियदल्पमेवहिभद्रमभद्रंवास्वयो ग्यादाधिक्येननभवतियत्नवतोपीत्यर्थः । अतस्तद्विषयेध्यातमुक्तंचशुभमनृतमेव । उच्यतेध्यायतेवापिकु नरंप्रतियच्छुभं । असत्यमेवभवतिस्वभावोसत्यमेवयदितिप्रद्योते ॥४॥ स्वभावतोशुभस्याशुभदेहादिकंना शुभकारणंतर्हीत्यतआह । छायाप्रत्युदकाभासाइति । व्यपेक्ष्यजीवंदेहादिनिःशक्तत्वादवस्त्वपि । पुनःशु भाशुभनृणांयच्छेदेवशुभाशुभं । छायानीहारकाभासानिःशक्ताअपिकार्यदाः । एवंशुभादिदेहादेर्भवेत्का

यँशुभादिकमितिसुमते । नीहारःप्रत्युदंचैवधूम्रमित्यभिशब्द्यतइतिशब्दनिर्णये ॥५॥ इदंविश्वंसृजतित्रा
तिहरतिचस्वयंस्वात्मनैवसृज्यतेत्रायतेह्रियतेच । दीपाद्दीपांतरंयद्वत्सृष्टिरीशस्यकीर्त्यते । एतावत्कालमा
शिष्येमानुषेष्वितिचिंतनं । विष्णोस्त्राणंसमुद्दिष्टंस्वस्यैवस्वेच्छयैवतु । दीपेदीपांतरस्येवह्येकीभावश्चसंहृतिरि
तिच । पूर्णमदःपूर्णमिदंपूर्णात्पूर्णमुदच्यते । पूर्णस्यपूर्णमादायपूर्णमेवावशिष्यतइतिच॥६॥आत्मनःपरमे
श्वरस्यतस्मादन्योभावोनास्ति । सृष्टिस्थितिश्चसंहारोभावनंसमुदाहृतं । तद्यःकरोतिपुरुषःसभावइतिकी
र्त्यतइतिविवेके । अन्येनसृष्टिःस्थितिःसंहारइतित्रिविधामतिर्विद्वद्भिर्नैवनिरूपिता निर्मूला प्रमाणवर्जिता ।
अन्यस्मात्सृष्टिसंहारौस्थितिश्चपरमात्मनः । निरूपितानविद्वद्भिःप्रमाणाभावतोहरेरितिब्रह्मतर्के ॥७॥ अ
न्यतःसृष्टिःस्थितिःसंहारइतित्रयंसत्वादिगुणाधीनं । गुणसंबंधयोग्यानामुत्पत्त्याद्याःस्युरन्यतः । सर्वदानि
र्गुणस्यास्यसर्गाद्याःस्युःकुतोन्यतइतिच ॥८॥ [१०]असमर्थमसत्प्रोक्तंसत्समर्थंप्रकीर्तितमितिच ॥१०॥ [१३]फलवा
न्मोक्षहेतुत्वान्नित्यानंदादपार्थकः । जीवात्मनस्तुसंसारःस्वप्नवच्चंचलत्वतइतितत्त्वविवेके ॥१३॥ संसृत्यभा
वस्यैवफलरूपत्वान्निरर्थएवसंसारइत्यवधारयति । अर्थेपीति । उच्यतेनिष्फलत्वेनयदत्यल्पफलंभवेदितिच

॥१४॥ अतोफलत्वावधारणार्थंचपुनर्वचनं ॥१५॥ अहंकारस्यसकाशादृश्यंते। नात्मनःस्वतः। अहंकारा
त्तुसंसारोभवेज्जीवस्यनस्वतः। कुतश्चिदानंदतनोःस्वरूपेच्छायुतस्यसइतितंत्रभागवते ॥१६॥ देहेंद्रियप्रा
णमनसामभिमानयुक्तः। सूत्रंमहानित्याद्यधिकारनामभिर्युक्तः। प्रधानजीवोहिरण्यगर्भोप्याधावतिसंसा
रेकिमुतान्यइत्याशयः। संसारयुग्योब्रह्मापिसर्वजीवेश्वरेश्वरः। विष्णवधीनःसदाज्ञानीकिमुतान्येल्पचित्ति
नइतिसत्तत्त्वे ॥१७॥ अमूलंविष्णुमूलं। बहुरूपेणतेनैवरूप्यते। मनआदीनांविषयः ॥१८॥ केवलंस्वतं
त्रं। आद्यंतयोर्यत्स्वतंत्रंतदेवमध्येपिस्वतंत्रं परंब्रह्म ज्ञानविवेकादिस्वरूपं परिपूर्णगुणत्वात्कालः। अन्य
तोविविक्तत्वाद्विवेकः। सर्वंनिगमयतिप्रापयतीतिनिगमः। सर्वैरालोच्यत्वात्तपः। प्रतिप्रत्यक्षेषुस्थितत्वा
त्प्रत्यक्षं। आचार्यसंप्रदायसिद्धत्वादैतिह्यं। अनुमेयत्वादनुमानं ॥१९॥ हिरण्यखचितत्वेनहिरण्यप्रधानं
हिरण्मयं। शंखमंचकरथादिषुमध्येपिकेवलंप्राधान्येनव्यवहार्यमाणंतदेव। रथोपस्थेपरिष्कारात्पूर्वंदारुम
याद्रथात्। सुवर्णंव्यवहारायमुख्यंरथपरिष्कृतं। मध्येचांतेरथोपस्थान्निष्कृष्यपृथगास्थितं। यद्वदेवंहरिः
साक्षाज्जगद्देहात्पृथक्स्थितः। पूर्वंजगतिसंस्थश्चजगदंतेपृथक्स्थितः। सएवमुख्योजगतःस्वातंत्र्यात्परमे

श्वरइतिब्रह्मतर्के । सुरपितृमनुजादिकल्पनाभिरित्याद्यंतर्याम्यपेक्षया । यथासुवर्णमकृतंक्रियतेकुंडलादिकं । पुनरेकीभवत्यद्धातद्वद्विष्णुरजोपिसन् । सुराद्यंतस्थितोभूत्वापुनरेकीभवेद्विभुरितिच । तत्तन्नियामकस्यैवनामसर्वंसुरादिकं । तत्संबंधादुदीर्येतव्यवहृत्यैसुरादिष्वितिशब्दनिर्णये । एकलंकेवलंचेतिस्वतंत्रमभिधीयते । स्वतंत्रस्तुहरिःसाक्षात्परिष्कृतहिरण्यवदितिप्रवृत्ते । प्रत्येकंनतुदार्वादिस्वतंत्रंविक्रियागतं । महाफलंस्यात्स्वर्णंतुस्वतंत्रंविक्रियोपगं । तद्वत्स्वतंत्रोभगवान्प्रवृत्तावन्यथेतिच ॥२०॥ मोक्षदंसंसारदंतमःप्रदंचेतित्रिपदस्थंविज्ञानं । तदिच्छायाःसत्वएतत्सर्वमस्ति । अन्यथानास्तीत्यन्वयव्यतिरेकौ । तदेवकेवलंसत्यमितिसर्वत्रसंबध्यते । स्वातंत्र्यमेवसत्यत्वंविष्णोरन्यस्यसत्यता । प्रवाहतःसदाऽस्तित्वंपुंप्रकृत्योःसदाऽस्तितेतिवस्तुतत्त्वे ॥२१॥ मध्येचतत्केवलंनेतिसंबध्यते । तत्स्वातंत्र्येणनैवास्तियदुत्पत्तिविनाशवत् । स्वातंत्र्येणास्तितातस्ययत्सत्ताज्ञानदंसदेतिवैभवे ॥२२॥ जगतोनास्तितासैवयापराधीनतासदा । अभावस्तुकुतस्तस्ययद्विभातीहसर्वदेतिप्राकाश्ये । अविद्यमानतानामजगतःपरतंत्रता । यथाऽशक्तस्तुपुत्रादिरसन्नित्युच्यतेजनैरितिविवेके । अतोब्रह्मणएवविभाति । द्वितीयंब्रह्मप्रकृतिः । आत्माजीवः प्रकृतींद्रिय

विषयजीवादिविचित्रंजगद्ब्रह्मतएवविभातीत्यर्थः ॥२३॥ २४वायुरेवस्वयंप्राणस्तत्रस्थेचोदतेजसी । उदेनतेज
सी । उदेनतेजसाचैवप्राणस्यहिकृतंवपुरितिप्रकाशिकायां । प्राणस्यवायुरूपस्यभूतत्रयकृतंवपुः । ततो
हिपार्थिवंनात्रखंचात्यल्पमुदाहृतमितिसंधारणे । सत्वंमूलबुद्धिः । अहंशृणोम्यहंस्पृशाम्यहंपश्यामीतिस
र्वार्थेषुसमत्वादहंकारोऽर्थसाम्यं । नदेहोनेंद्रियप्राणमनोबुद्ध्यहमादयः । विष्णुश्चिदानंदतनुःसहिजीवाधि
पःसदेतिसत्तत्त्वे ॥२५॥ भगवतोगुणदोषाभावेपिजीवस्यसंगोवर्जनीयएवमुक्तिपर्यंतं । समाहितेपिजीवेना
विक्षिप्तेवानतुक्कचित् । विशेषोविद्यतेविष्णोस्तथापितुसमाहिते । प्रीतोभवतिवैनित्यंसर्वधर्मकृतोपिचेति
पाद्मे ॥२६॥ ३२आत्मस्थमतिःपरमात्मस्थमतिः ॥३२॥ ३३परमात्मनोऽन्यत्पारतंत्र्यादेः ॥ नानामानविरुद्धंहि
स्वातंत्र्यंजगतःसदा । स्वतंत्रोभगवान्विष्णुरेकएवनसंशयइतिच । वस्तुतयास्वतंत्रत्वेन विरुद्धंतथानम
न्यते । अस्त्येवस्वाप्नमखिलंवासनारूपमात्मनि । जाग्रदेतदितिज्ञानंयत्तदेवभ्रमात्मकं । तद्वज्जगदिदंसर्वं
विद्यमानंनसंशयः । स्वतंत्रमेतदितितुयज्ज्ञानंतद्भ्रमात्मकमितिच । उत्थितोनैवजाग्रत्त्वंक्कचित्स्वप्नस्यपश्य
ति । स्वातंत्र्यमेवंजगतोज्ञातवान्नैवपश्यतीतिविवेके ॥३३॥ भगवद्गुणविषयंतत्कर्मविषयंचेतिगुणकर्मचि

त्रं । आत्मनिपरमात्मविषयं एतन्नजानामीत्यप्यविविक्तं । अन्यैर्ज्ञातेपिवाज्ञातेनविशेषोहरेःक्वचित् । तेषा
मेवविशेषःस्यादज्ञानापगमेनत्वितिच ॥३५॥ [३६]ज्ञानानंदाद्यभिन्नत्वादेकःसर्वोत्तमत्वतः । अद्वितीयोमहावि
ष्णुःपूर्णत्वात्पुरुषःस्मृतइतिच ॥३६॥ एतावानात्मसंमोहोयद्विरुद्धस्यकल्पनं । यत्परात्माश्रयाज्जीवान्निश्च
येननपश्यतीतितंत्रभागवते । अचलमितिक्रियाविशेषणं ॥ ३७ ॥ [३७]अयंव्यर्थवादोनभवतिकिंत्वर्थवादः ।
जगत्परमेश्वरंचद्वयंविदंतिज्ञानिनः। पंचभूतात्मकंविश्वंभ्रांतिसिद्धमपंडिताः। वदंतिपंडितास्त्वद्धाजगदाहुर
बाधितं । प्रवाहरूपेणसदाविष्णोरिच्छावशेस्थितमितिच ॥३८॥ इत्येकादशतात्पर्येअष्टाविंशोऽध्यायः॥२८॥
ॐआत्मांतरात्मापरमात्मेतिमूर्तित्रयंहरेः । जाग्रत्स्वप्नसुषुप्तीनांसृष्ट्यादेश्चप्रवर्तसमितित्रैकाल्ये ॥७॥ [११]पृथक्स्व
यमेव सत्रेणबहुभिःसहवाममयात्रामहोत्सवंकुर्यात् ॥११॥ [१३]सर्वभूतेष्वस्तिविष्णुरितिभावःसतांमतः ॥ अ
र्चनेसर्वभूतानामादित्येतद्गतात्मनेतिच ॥१३॥ [१८]ब्रह्मणात्तमिदंसर्वंयत्किंचित्सचराचरं । इतिपश्येततोविद्वा
न्सहिब्रह्मात्मविन्मतइतिब्राह्मे ॥१८॥ [२१]नयादिर्दुर्नयःप्रोक्तोयन्नयंसोतिसर्वदेतिशब्दतत्त्वे ॥२१॥ एकदाज्ञा
तरूपेणयन्नतिष्ठतिसर्वदा । चंचलत्वात्सत्यमपिह्यनृतंजगदुच्यतइतिच । सर्वदैकप्रकारत्वात्सत्यंब्रह्मसदो

च्यतइतिच ॥२२॥ इत्येकादशतात्पर्येएकोनत्रिंशोऽध्यायः ॥२९॥ ॥ [२]तंनुमत्यजत् । अतिशयेनाहरत् ।
अजहरणइतिधातोः । भूलोकात्स्वर्गलोकंप्रत्यहरदित्यर्थः ॥२॥ कःसुखरूपः । अनुमानःकवीनांमानानु
सारी ॥३॥ त्रिंशोऽध्यायः ॥३०॥ [६]आग्नेय्याधारणयास्वतनुमदग्ध्वास्वकंधामाविशत् । आग्नेय्याऽन्येधार
णयादग्ध्वादेहंपरंपदं । यांतिदेवाःसमस्ताश्चतेषामन्यांतनुंहरिः । नृसिंहरूपीसर्वेषांभित्त्वाताभिरलंकृतः ।
नृत्यतेप्रलयेदेवःस्वयंकृष्णादिरूपवान् । अदग्ध्वैवतनुंयातिनित्यानंदस्वरूपतइतितंत्रभागवते ॥६॥ [११]तंनु
भृद्धज्जननवदप्ययवच्चईहातनुभृज्जननाप्ययेहा । प्रजापतिश्चरतिगर्भेअंतः अजायमानोबहुधाविजायतइ
तिच । अजातोजातवद्विष्णुरमृतोमृतवत्तथा । माययादर्शयेन्नित्यमज्ञानांमोहनायचेतिब्राह्मे ॥११॥ [१२]शे
षितंवपुर्बलभद्रादीनां । जगतोमोहनार्थायभगवान्पुरुषोत्तमः । दर्शयेन्मानुषींचेष्टांतथामृतकवद्विभुः ।
प्रकाशयेददेहोपिमोहायचदुरात्मनां । माययामृतकंदेहंतदासृष्ट्वाप्रदर्शयेत् । कुतोहिमृतकंतस्यमृत्यभावा
त्परात्मनइति ॥१२॥ जीवविष्णवोरभेदश्चदेहयोगवियोजने । विष्णोर्दुःखंव्रणित्वादिपराभावस्तथैवच ।
अस्वातंत्र्यंचवेदादावुक्तवद्भासतेविभोः । क्वचिद्विमोहायदैत्यानांसुदुरात्मनामित्यादिब्रह्मांडे ॥ [३]अंशावंत

र्देधेभैष्मीसत्यभामावनेतथा । नतुदेहवियोगोऽस्तितयोःशुद्धचिदात्मनोरितिच ॥२०॥ इतिश्रीभागवतै
कादशस्कंधतात्पर्येश्रीमदानंदतीर्थभगवत्पादाचार्यविरचितेएकत्रिंशोऽध्यायः ॥३१॥ ॥ इतिश्रीमद्भा
गवततात्पर्येएकादशस्कंधःसंपूर्णः ॥ ॥ ॥ ॥ ॥
श्रीवेदव्यासायनमः ॥ [२०] नैयत्रवाचइत्यादिकालाख्यस्यब्रह्मणःस्वरूपं ॥२०॥ [२३] जीवविष्ण्वोरभेदश्चदेहयोग
वियोजने । विष्णोर्दुःखंव्रणित्वादिपराभावस्तथैवच । अस्वातंत्र्यंचवेदादावुक्तवद्भासतेविभोः । क्वचि
त्क्वचिद्विमोहायदैत्यानांचदुरात्मनामितिब्रह्मांडे ॥२३॥ [२५] प्रत्येकंविष्णुरूपाणांभ्रांतिमात्राभिदामता । जग
तश्चैवविष्णोश्चसत्योभेदःसदैवतु । यथाऽऽकाशघनौनित्यंभिन्नावेवपरस्परं । एवमीशोजगच्चैवभिन्नावेवप
रस्परमितिच ॥२५॥ [२७] अवयव्यवयवाभेदात्कोट्यंशोभेदईरितः । सोपिभेदोनचाभेदात्पृथगेवप्रवर्तते । अ
वयव्यवयवानांचकार्यकारणवस्तुनां । एकएवनियंतासौहरिर्नारायणःपरइतिच ॥ २७ ॥ [३०] महाकाशोबहि
स्थश्चघटाद्यंतस्थएवच । द्वेधासमुदितोऽन्यौचद्वावाकाशौप्रकीर्तितौ । घटरूपस्तदन्यश्चमहाकाशात्परो
लघुः । महाकाशवदेवात्रपरमात्मासनातनः । घटांतस्थमहाकाशप्रतिमोंतर्गतोहरिः । घटस्थांतर्गताका

शोमहाकाशात्परोमतः । तद्वद्देवादयःसर्वेजीवामुक्त्युपयोगिनः । तमोगाश्चैवयेसर्वेघटरूपखवन्नराइति
तत्त्वसंहितायां ॥३०॥ इतिद्वादशस्कंधतात्पर्येचतुर्थोऽध्यायः ॥४॥ ॥ स्वसंतानोद्भवंकीर्त्यायोजयन्
जनमेजयं । शक्तोप्यशक्तवद्यष्टुरिंद्रआसीदुपेक्षकः । एवमेवऋषीणांचकीर्तिंयोजयताऽमुना । कृतोपेक्षा
महेंद्रेणकिमुविष्णुःपरात्परः । तस्माद्विष्णोरशक्यंनभूतभव्यभवत्स्वपि । नचानिष्टंगुणैरेषपूर्णोनारायणः
सदेतिवामने ॥२३॥ इतिद्वादशस्कंधतात्पर्येपंचमोऽध्यायः ॥५॥ ॥ नित्यादोषस्वरूपायगुणपूर्णायस
र्वदा । नारायणायहरयेनमःश्रेष्ठतमायमे ॥१॥ इतिश्रीमदानंदतीर्थभगवत्पादाचार्यविरचितेश्रीमद्भागव
ततात्पर्यनिर्णयेद्वादशस्कंधःसंपूर्णः ॥ १२ ॥ ॥ ॥ ॥

॥ श्रीमद्भागवततात्पर्यनिर्णयःसंपूर्णः ॥

इदं पुस्तकं कुंभघोणस्थेन टी. आर्. कृष्णाचार्येण टी. आर्. व्यासाचार्येण मुंबय्यां निर्णयसागरमुद्रायन्त्रे
बाळकृष्ण रामचंद्र घाणेकरद्वारा मुद्रापितम् । शकाब्दाः १८३२ सन १९१०.

The Credit of getting the Sarvamoola Books Scanned goes to Panditavareenya ityaadi birudankita Shreemajjaalihaala Shreenivaasaachaaryasya Vidyaa Suta, "Gomanjari" Udgrantha kartru, (Raghunatha suri virachita Manikya manjari granthasya Khandana Grantha) Veda Shaastra Puraanaartha Vishaarada, Panditavareenya Shree Dwarakaanaathaachaaryaru.
My heartful salute for him to provide me such a wonderful opportunity to work on this project.

Project Started on : 21 December 2009
Project Completed on : 20 March 2011

Scanned By : Aravindacharya Haranahalli, aravindbharadwajhs@gmail.com